अर्हम्

श्रीविजयधर्मसूरिभ्यो नमः ।

श्रीचारित्रसुन्दरगणिविरचितं

# शीलदूतम् ।

भुक्त्वा भोगान् सुभगतिलकः कोशया सार्द्धमिद्धान्
धन्यो मान्यो निखिलविदुषां भद्रया स्थूलभद्रः ।
चक्रे श्रुत्वा जनकनिधनं जातसंवेगरङ्गः
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ १ ॥

चित्ते मत्वा विषयनिचयं सत्वरं गत्वरं वै
गच्छन्नेषोऽध्वनि घनजिनध्यानसंलीनचित्तः ।
शान्तं कान्तं रसमिव गिरौ श्रीगुरुं भद्रबाहुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥ २ ॥

शिक्षाकामं कृतनतिममुं ध्वस्तकामं निरीक्ष्या-
चख्यावेवं गुरुरुरुगिरा वत्स ! मोहं जयैतम् ।
संयोगेऽपि प्रभवति यतः प्राणिनामत्र दुःखं
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ? ॥ ३ ॥

धन्यं मन्ये मुनिपरिवृढात्मानमेनं किलाद्या-
निन्द्यं सद्यः परमसुखदं यन्नतं वः पदाब्जम् ।
पीत्वा हृद्यां विशदहृदयो देशनां सोऽपि सूरेः
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥ ४ ॥

कामान्धोऽहं तदिह बहुधा कर्म मोहादकार्षं
जानात्यन्यो नहि जिनपतेर्यद्विपाकं मुनीश ! ।
यावज्जैनीं वचनरचनां वा न विन्दन्ति तावत्
कामार्त्ता हि प्रकृतिकृपणाश्चेतनाऽचेतनेषु ॥ ५ ॥

---

१ तन्नाम्न्या । सरलस्वभावया । पितुर्मरणम् । रमणीयपर्वताश्रमेषु । ३ कृतिमिति पाठान्तरम् । मोहात् । ४ हे मुनिपते ! ।

जाने युष्मान् जिनपतिसमान ज्ञानदानप्रवीणान्
रीणोऽमुष्मादनणुभवतो भावविद्वेषिजन्तून् ।
याचे तस्माच्चरणशरणं वः शरण्याः ! रणघ्नं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ ६ ॥
कृत्वा लोचं शिरसि सहसा पञ्चभिर्मुष्टिभिः स्वै-
र्लात्वा दीक्षां गुरुवचनतः सैष शिक्षामवेत्य ।
गुर्वादेशादथ निजपुरीमागमत्तां यतिर्या
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥ ७ ॥
कोशा शस्यप्रकृतिरथ सा स्वप्रियं चानुयान्ती
दध्यावेवं विविधवचनैरम्बया संनिषिद्धा ।
तिष्ठेत् को हा ! स्वगृह इह हि प्रोषिते प्राणनाथे ?
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥ ८ ॥
प्राप्तं द्वारि प्रियतममथो वीक्ष्य सोचे प्रमोदा-
द्देवोत्तुङ्गं भज निजगृहस्यैनमग्र्यं गवाक्षम् ।
स्निग्धच्छायं घनमिव जनानन्दनं यत्र संस्थं
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ ९ ॥
अद्य श्वो वा सखि ! तव वरः स्थूलभद्रः समेता
स्वस्थं तस्मान् कुरु निजमनो मुञ्च मुग्धे ! विषादम् ।
दध्रे प्राणानहमिति सखीभाषितैर्नाथ ! वाऽऽशा
सद्यःपाति प्रणयिहृदयं विप्रयोगे रुणद्धि ॥ १० ॥
स्वामिन्नङ्गीकुरु परिचितं स्वाधिकारं पुनस्तं
भोगान् भुङ्क्ष्व प्रिय ! सह मया साधुवेषं विहाय ।
दोलाकेलिं किल कलयतः कौतुकात् काननान्तः
संपत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ ११ ॥
पश्य स्वामिन्निजपरिजनं त्वद्वियोगार्त्तिदीनं
हीनं स्थाने जलविरहिते मीनवत्पीनदुःखम् ।
त्वत्संयोगे मुदितमनसो वीक्षिता यस्य शस्या

स्निग्धव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥ १२ ॥
मा जानीष्व त्वमिति मतिमन् ! संयमं मुञ्चतो मे
नाशं यास्यत्यवनिविदिता कीर्त्तिविस्फूर्त्तिरेषा ।
सिद्धिं याता पुनरपि यथा सिन्धुपूरः प्रदानैः
क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपयुज्य ॥ १३ ॥
जग्मुर्मुक्तिं कति न भरताद्याः समाराध्य दानं ?
भुञ्जन् भोगान् सुभग ! भव तद् दानधर्मोद्यतस्त्वम् ।
कीर्त्या मूर्तीस्त्वमपि सितयन् स्वःश्रियां सिद्धिमेता
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् ॥ १४ ॥
स्वामिन् ! सिंहासनमनुपमं त्वं प्रसद्याश्रयेदं
नानारत्नद्युतिततिकृतस्फारचित्रं पवित्रम् ।
येन स्निग्धं वपुरुपचितां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥ १५ ॥
मन्ये जज्ञे कुलिशकठिनं तावकीनं हृदेत-
द्यस्मादस्मानपि नहि दृशा स्निग्धया पश्यसि त्वम् ।
पश्येयं त्वां वदति सरसं सारिका देव ! मा मा
किञ्चित्पश्चाद् व्रज लघुगतिर्भूय एवोत्तरेण ॥ १६ ॥
आलापैस्त्वां मृगय मुदितः कोमलैः कोकिलायाः
क्रीडारामो भवदुपचितः स्वागतं पृच्छतीव ।
नो नीचोऽपि प्रणयनिभृते भाग्यलभ्ये चिराद्वा
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ? ॥ १७ ॥
दध्रे मासान्नव किल यया मध्यमध्ये सुधीमन् !
वृद्धिं नीतः सरसमधुराहारयोगाद् भवान् वा ।
गेहस्थोऽपि प्रिय ! गुरुगुणां मातरं मानयैनां
सद्भावार्द्रः फलति न चिरेणोपकारो महत्सु ॥ १८ ॥

---

१३ सा कीर्त्तिविस्फूर्तिः पुनरपि प्रकृष्टदानैः सिद्धिं समृद्धिं याता, यथाश इवार्थे यथा सिन्धुपूरः स्रोतसां पय उपयुज्य समृद्धिं याति । चोपभुज्येति पाठान्तरम् । १४ त्वमपि सिद्धि मोक्षं एता याता, किं कुर्वन् सन्, पथि मार्गे स्वःश्रि स्वर्गस्त्रीणां स्थूलहस्तावलेपान् परिहरन्, पुनः किं० दिङ्नागानां मूर्तीः सितः धवलयन् १५ मयूरपिच्छेनेव । १७ पश्य । चिराद्धेति पाठान्तरम् । १८ उदरमध्ये

त्वय्यायाते धरणिरमणीसारशृङ्गाररूपे
प्रासादोऽयं प्रिय ! निजरुचा जेष्यति स्वर्गलोकम् ।
विष्वक्शुद्धस्फटिकरचितस्त्विन्द्रनीलाभभागो
मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥ १९ ॥
क्रीडाशैले कलय विपुले निर्झराली किलैतां
यत्रावाभ्यां श्रमहृतिकृते क्रीडितं नाथ ! पूर्वम् ।
यामालोक्याकलयति कलं चित्रमत्रत्यलोको
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ २० ॥
मा मुञ्चेदं धनमनिधनं नाथ ! सम्पूरिताशं
सर्वं चैनं निजपरिजनं त्वय्यतिस्नेहयुक्तम् ।
नीतिज्ञोऽपि प्रथितमहिमन् ! वेत्सि नैतत्कथं यत् ?
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ २१ ॥
व्यापारं मा परिहर वर ! त्वं नृपश्रीसमं तं
प्राप्य क्लेशोपममिममहो ! संयमं मन्त्रिपुत्र ! ।
मुञ्चेच्चिन्तामणिमिह हि कः काचमादाय यस्मिन् ?
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥ २२ ॥
तीव्रं यत्त्वं तपसि सुतपो देवलोकाशयेह
स्त्रीसम्भोगादपरमरिरे ! नास्ति तत्रापि सौख्यम् ।
गेहस्थस्तद्रचय सुचिरं स्वर्गसौख्याधिकानि
सोत्कण्ठानि प्रियसहचरीसंभ्रमालिङ्गितानि ॥ २३ ॥
नीत्वा नीत्वा कतिपयदिनं यौवनं गेहवासे
भुक्त्वा भोगानवनिवलये नाथ ! तत्वा स्वकीर्त्तिम् ।
वार्द्धक्येऽथ प्रिय ! निजजनैः साश्रुदृग्भिर्व्रताय
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत् ॥ २४ ॥
ताते याते त्रिदशभवनं युष्मदाशानिबद्धा-
ये जीवन्ति प्रिय ! परिहरंस्तान्न किं लज्जसे त्वम् ? ।
आयाभावात् त्वयि सति गते बान्धवास्तेऽस्तवित्ताः

---

२० पण्डितरचनाप्रकारैः । २२ सारं सलीलं गच्छन्तीति ते सारङ्गाः । विस्तीर्य, वार्द्धक्ये व्रताय व्यवस्येत् उद्यमं कुर्यात्, कथमिवेति च पाठः ।

संपत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णा
भुङ्क्ते भोगान् किमिह न भवान् नन्दिषेणोऽप तस्थ। ।
वेश्याऽऽवासे चिरविरचितं प्रोज्झ्य चारित्रमुच्चैः ।
मुह्येत् को नो शुचि सुललितं वीक्ष्य वा वारनार्य्याः
सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि ? ॥ २६ ॥
क्रीडाशैलो वर ! गुरुरयं राजते ते पुरस्ता-
च्चक्रे केलिः किल सह मया यत्र चित्रे त्वया प्राक् ।
स्निग्धच्छायैर्विमलसलिलैः सत्फलैर्यो जनाना-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ २७ ॥
अस्मिन् सान्द्रद्रुमचयचिते पर्वते वर्त्तते ते
क्रीडोद्यानं सुरवनसमं नाथ ! सर्वर्त्तुकाख्यम् ।
स्वेदं शीतो हरति सुरभिः संमतो यत्र वायु-
श्छायाऽऽदानात् क्षणपरिचितः पुष्पलावीमुखानाम् ॥ २८ ॥
स्वामिन्नस्मिन् स्मरगृहसमे कानने तावकीने
कामक्रीडां विदधाति समं निर्जराः सुन्दरीभिः ।
स्नेहस्निग्धैस्त्वमिह रतिदैर्वीक्षितोऽपि प्रियाणां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥ २९ ॥
लोलच्छाखाशयविलसितैस्त्वामिवाकारयन्ती
भृङ्गालापैरिव तव तपः साम्प्रतं वारयन्ती ।
वृक्षालीयं कुसुमपुलकं दर्शयन्तीव पश्य
स्त्रीणामाद्यं प्रणयि वचनं विभ्रमो हि प्रियेषु ॥
हीनं दीनं सुभग ! विरहात् ते धुताऽऽहारनीरं
पश्येदं मे वपुरुपचितिं याति नान्यैः प्रयोगैः ।
जाने नाहं बहु निगदितुं त्वद्वियोगार्त्तिजातं
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ ३१ ॥

---

. परिहरन् स्वानित्यपि पाठः । कतिपयदिनस्थायिप्राणाः, दशानां ऋणं वि
ां ते। २६ वाऽथवा वारनार्याः मुखं वीक्ष्य को न मुह्येत्? अपिशब्दात् सर्वोऽ
लक्षणं मुखं, उत्प्रेक्ष्यते, वेत्रवत्या नद्याः पय इव। किं लक्षणं पयः, चलोर्मि च
रङ्गम् । २८ मालाकारपत्नीमुखानाम् । ३० लोलन्त्यश्चञ्चला याः शाखा
शया हस्तास्तासां विलासैः ।

स्नेहादन्यद् न भवति परं बन्धनं यत्र किञ्चिन्
चिन्ता काचिन्न भवति परा यत्र धर्मं विहाय ।
कश्चिद् यस्मिन् न भवति परो राजहंसान् सरोगो-
वित्तेशानां न च खलु वयो यौवनादन्यदस्ति ॥ ७१ ॥

वेणीदण्डो जयति भुजगान् मध्यदेशो मृगेन्द्रान्
यासामास्यं प्रिय ! परिभवत्युच्चकैश्चन्द्रबिम्बम् ।
चैत्ये नृत्यन्त्यतुलममकृद् यत्र वाराङ्गनास्ता-,
स्त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ ७२ ॥

मालास्रस्तैर्विविधकुसुमैः कुङ्कुमाक्ताङ्घ्रिचिह्नै-
स्ताम्बूलेन क्षितितलगतेनार्द्धजग्धेन यत्र ।
हेमाम्भोजैः श्रवणपतितैर्भूपितैर्भूरिवासै-
र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥ ७३ ॥

यत्र स्त्रीणां प्रणयिषु हठादाक्षिपत्सु क्षपायां
क्षौमं साक्षाद् मनसिजपराधीनतामागतेषु ।
नित्योद्द्योतानपि मणिमयान् प्राप्य दीप्रान् प्रदीपान्
ह्रीमूढानां भवति विफलप्रेरितश्चूर्णमुष्टिः ॥ ७४ ॥

यस्यां लोका विमलमनसः पूर्णकामाभिरामा-
रामाः कामं ललितगमना कामनारीस्समानाः ।
वृक्षाः साक्षादतुलफलदाः कल्पवृक्षोपमेया-
नित्यज्योत्स्नाप्रतिहततमोवृत्तिरम्याः प्रदीपाः ॥ ७५ ॥

यस्यामन्तः सुकृतरसिकाः पात्रदानप्रवीणा-
एनोहीना विततविलसत्कीर्तयः सन्ति सन्तः ।
वारस्त्रीभिः सह सुमुदिताः काममग्राश्च कामं
बद्ध्वा यानं बहिरुपवनं कामिनो निर्विशन्ति ॥ ७६ ॥

गच्छंस्तूर्णं नभसि तरणिः शङ्कते नित्यमेवं
सौधेष्वेषु स्खलतु मम मा स्यन्दनोऽभ्रंलिहेषु ।
मेघा यस्यामतिगुरुगृहैः प्राप्य सङ्घट्टमाराद्

७१ खलु च वय इत्यपि । ७४ –प्रेरणा चूर्णमुष्टिरित्यपि पाठः । ७५ नित्यं ज्योत्स्ना इत्यपि पाठान्तरम् ।

राजोचेऽङ्गारवक्त्र ! त्वं किं ब्रूषेऽनुचितं वचः ? ।
इक्ष्वाकवोऽपि किं भिक्षामर्थयन्ति कदाचन ? ॥ ७ ॥
ऋषिरूचे पुरोऽस्माकं महत्त्वं स्वस्य जल्पसि ? ।
प्रतिज्ञाभ्रष्ट ! वाचाट ! किमात्मानं विकत्थसे ? ॥ ८ ॥
मुनीश ! मा कुपस्तुभ्यं लभ्यं दास्यामि काञ्चनम् ।
निषादस्यापि कर्माणि विधास्यामि गतत्रपः ॥ ९ ॥
ततः कौपीनवसनः कालः काल इवापरः ।
सविषादमतेरस्य निषादः पुरतोऽभवत् ॥ १० ॥
भूपालं वीक्ष्य स प्रोचे रे ! त्वं कर्म करिष्यसि ? ।
तेनेत्युक्ते महीनाथो निदध्याविति चेतसि ॥ ११ ॥
क्रीडां कृत्वा नभःक्रोडे ययावस्तं गभस्तिमान् ।
न कश्चित् क्रायकोऽस्माकं, मुनिः स्वर्णसमुत्सुकः ॥ १२ ॥
करिष्ये कर्म तेऽवश्यं राज्ञेत्युक्तेऽथ सोऽवदत् ।
कर्त्तासि किमु मे कर्म ?, स ऊचे यन्निदेक्ष्यति ॥ १३ ॥
कालदण्डाभिधानोऽहं निषादः कोपकाननम् ।
गङ्गासव्यश्मशानेशो द्वितीय इव दण्डभृत् ॥ १४ ॥
रक्षितव्यं श्मशानं मे ग्रहीतव्यं मृताम्बरम् ।
किञ्चिद्दग्धानि काष्ठानि ग्राह्याणि चितितस्त्वया ॥ १५ ॥
यत्तत्रोत्पद्यते तस्य गृह्णात्यर्द्धं महीश्वरः ।
अन्यस्यार्द्धस्य भागौ द्वौ मामकस्तावकोऽपरः ॥ १६ ॥
इत्युक्ते तेन भूपाल आमेति न्यगदद्वचः ।
परं महर्षये देहि निःशेषं मम काञ्चनम् ॥ १७ ॥
अथ दध्यौ मुनिः स्वान्ते नमस्ते सत्त्वशालिने ।
नमस्ते धैर्यपात्राय नमस्ते करुणात्मने ॥ १८ ॥
कालदण्डोऽपि तावत्तद् दत्त्वा स्वर्णं महर्षये ।
श्मशानमात्मनः प्राप हरिश्चन्द्रसमन्वितः ॥ १९ ॥

इतो वाराणसीपुर्यामाशीर्वं समभूद् महद् ।
निलीयास्थादिव क्वापि येनोच्चैर्मङ्गलध्वनिः ॥ २० ॥
अथाद्यास्त महीचन्द्रोऽतन्द्रधीश्चन्द्रशेखरः ।
मन्त्रिणं सत्यवस्वाख्यं प्रतिरूपमिवात्मनः ॥ २१ ॥
राजादेशात् समायातुर्मन्त्रिणः कोऽपि पूरुषः ।
अन्तरा मिलितः पाणौ बिभ्राणः कीरपञ्जरम् ॥२२॥
कलहंस ! क्व कीरोऽयं सम्प्राप्तो मन्त्रिणोदिते ? ।
सोऽप्यूचे चम्पोपवनस्थितमेनमवाप्नुवम् ॥ २३ ॥
इति तद्वचनं श्रुत्वा सार्द्धं तेनैव मन्त्रिराट् ।
आगादुपमहीपालं यथास्थानमुपाविशत् ॥ २४ ॥
मन्त्रिन् ! पश्य पुरीलोको विना व्याधिविडम्बनाम् ।
अकालेऽस्तं प्रयात्येव स्वस्वधर्मरतोऽन्वहम् ॥ २५ ॥
इतश्च कुट्टिनी काचिद् रुदती करुणस्वरैः ।
हा ! दैव ! दैव ! मुष्टाऽहं भाषमाणा सदस्यगात् ॥२६॥
मत्पुत्री नामतोऽनङ्गमञ्जरी मञ्जुलस्वरा ।
रोगयोगं विना सुप्ता मृताऽस्तीति विचिन्त्यताम् ॥२७॥
नगर्यां जगतीनाथ ! विद्यते मारिरुत्थितः ।
तच्छोधय तदुत्पत्तिं सत्यार्थो नान्यथा नृपः ॥ २८ ॥
मन्त्र्यूचे देव ! मार्यर्थे प्रष्टव्यो मान्त्रिकोत्तमः ।
आयातः स स्वयं पुर्या उज्जयिन्या निशम्यते ॥ २९ ॥
अतीतानागतज्ञानाकालपुष्पोपदर्शनैः ।
वस्त्राकृष्टिकुटभ्रान्तिमुद्गलादिनियन्त्रणैः ॥ ३० ॥
दृष्टिमुष्टिशराकाशबन्धदृश्यादिशक्तिभिः ।
स्वप्नोपदेशशकुनप्रतिपात्रावतारणैः ॥ ३१ ॥
मन्त्रादाकृष्टदेवेशो मन्त्राद् यन्त्रितभास्करः ।
मन्त्रान्नर्त्तितशेषाहिर्मन्त्रात् स्तम्भितपावकः ॥ ३२ ॥

चतुर्भिः कलापकम् ॥

नृपादेशादसौ प्राप्तो ज्ञातवृत्तो महीपतेः।
दधानो ध्यानमाचख्यौ राक्षसीललितं त्विदम् ॥ ३३ ॥
इतो वेश्याऽऽह सोल्लासं पुत्रिका मम मान्त्रिक!।
मृता मारिप्रयोगेण विनाऽऽधिव्याधिगौरवम् ॥ ३४ ॥
अवादीद् मन्त्रवादी च मन्त्रात् प्राणिति ते सुता।
इतोऽभ्येत्याग़दच्चेटी स्वामिनी मम जीवति ॥ ३५ ॥
सत्यप्रत्यायितक्ष्मापसमादेशेन मान्त्रिकः।
लिखित्वा मण्डलं ह्रांह्रींमन्त्रविन्याससुन्दरम् ॥ ३६ ॥
क्षामकुक्षिललन्नेत्रां चण्डीं मूर्त्तिमतीमिव।
आनयद्राक्षसीं भीमां स्फारस्फेत्कारकारिणीम् ॥ ३७ (युग्मम्)
सविस्मयं नृपो दध्यौ महामन्त्रविजृम्भितम्।
य एनां राक्षसीं मन्त्रिन्नानैषीत् पश्यतां हि नः ॥ ३८ ॥
मान्त्रिकः प्राह यत् कार्य्यं तत् कृतं तव सन्निधौ।
आकार्यतां ततो वेगाच्छ्वपादोऽस्य वधाय सः ॥ ३९ ॥
अथास्माभ्येति चाण्डालो हरिश्चन्द्रसमन्वितः।
अयोध्येशं ततो दृष्ट्वा शुकोऽवादीद् द्विजादिवत् ॥ ४० ॥
स्वस्ति तुभ्यं हरिश्चन्द्र! भरतान्वयभूषण!।
सत्त्वमानवतां धुर्य! शौर्यचर्यातरङ्गित! ॥ ४१ ॥
साक्षेपमथ राजोचे भाषसे किं प्रमत्तवत्?।
नात्र कोऽपि हरिश्चन्द्रो मुधा भ्रान्तोऽसि रे शुक! ॥ ४२ (युग्मम्)
सुतारां राक्षसीं वीक्ष्य हरिश्चन्द्रो व्यचिन्तयत्।
कस्यचिद्दम्भिनो वृत्तं नेदं देवीविजृम्भितम् ॥ ४३ ॥
किं तु मत्कर्मघोरत्वं प्रसरत्यनिवारितम्।
यत्करिष्यति दैवं तन्मया सर्वं सहिष्यते ॥ ४४ ॥
उशीनरमहीपालपुत्रि! पावित्र्यदर्शने!।
सुतारे! ते नमः कीरः सप्रणाममदोऽवदत् ॥ ४५ ॥

प्रत्यक्षं च परोक्षं च द्वे प्रमाणे इह स्मृते ।
तत्र प्रमेयं स्याद्वादाधिष्ठितं द्रव्यषण्मयम् ॥ १० ॥
धर्माधर्मौ नभः कालः पुद्गलश्चेतनस्तथा ।
द्रव्यषट्कमिदं ख्यातं तद्भेदास्त्वागमे स्मृताः ॥ ११ ॥
जीवाजीवौ तथा पुण्यं पापमाश्रवसंवरौ ।
बन्धो विनिर्जरामोक्षौ नवतत्त्वी मताऽर्हताम् ॥ १२ ॥
चैतन्यलक्षणो जीवः स्यादजीवस्ततोऽन्यथा ।
सत्कर्मपुद्गलाः पुण्यं पापं दुष्कर्मपुद्गलाः ॥ १३ ॥
कषाया विषया योगा इत्याद्या आश्रवा मताः ।
आश्रवाद्विरमणं यत् तत् संवर इति स्मृतः ॥ १४ ॥
शुभाशुभानां ग्रहणं कर्मणां बन्ध इष्यते ।
पूर्वोपार्जितकर्मौघजरणं निर्जरा स्मृता ॥ १५ ॥
कर्मक्षयेण जीवस्य स्वस्वरूपास्थितिः शिवम् ।
एषां नवानां श्रद्धाने चारित्रात् तत्तु लभ्यते ॥ १६ ॥
श्वेताम्बरा वन्द्यमाना धर्मलाभं प्रचक्षते ।
शुद्धां माधुकरीं वृत्तिं सेवन्ते भोजनादिषु ॥ १७ ॥
ख्याताः प्रमाणमीमांसा प्रमाणोक्तिसमुच्चयः ।
नयचक्रवालतर्कः स्याद्वादकलिका तथा ॥ १८ ॥
प्रमेयपद्ममार्तण्डस्तत्त्वार्थः सर्वसाधनः ।
धर्मसंग्रहणीत्यादितर्कौघा जिनशासने ॥ १९ ॥
जैने मत उभौ पक्षौ श्वेताम्बरदिगम्बरौ ।
श्वेताम्बरः पुरा प्रोक्तः कथ्यते ऽथ दिगम्बरः ॥ २० ॥
दिगम्बराणां चत्वारो भेदा नाग्न्यव्रतस्पृशः ।

---

११ नभःकालपुद्गलाः इति च पाठः । १४ इत्यादिराश्रवो मत इ पाठः । १६ शिवं मोक्षः । तत्तु शिवम् । २० जैनमार्गे इति पाठान्तरम्, व च इति च पाठः ।

काष्ठासङ्घो मूलसङ्घः सङ्घौ माथुरगोप्यकौ ॥ २१ ॥
पिच्छिका चमरीबालैः काष्ठासङ्घे प्रतिष्ठिता ।
मूलसङ्घे मयूराणां पिच्छैर्भवति पिच्छिका ॥ २२ ॥
पिच्छिका माथुरे सङ्घे मूलादपि हि नादृता ।
मयूरपिच्छिका गोप्याः, धर्मलाभं भणन्ति ते ॥ २३ ॥
धर्मवृद्धिगिरः शेषाः, गोप्याः स्त्रीमुक्तिभाषिणः ।
गोप्यादन्ये त्रयः सङ्घाः प्राहुर्नो निर्वृतिं स्त्रियाः ॥ २४ ॥
शेषास्त्रयश्च गोप्याश्च केवलिभुक्तिं न मन्वते ।
नास्ति चीवरयुक्तस्य निर्वाणं सद्व्रतेऽपि हि ॥ २५ ॥
द्वात्रिंशदन्तरायाः स्युर्मलाश्चैव चतुर्दश ।
भिक्षाऽटने भवन्त्येषां वर्जनीयास्तदागमे ॥ २६ ॥
शेषं श्वेताम्बरैस्तुल्यं आचारे दैवते गुरौ ।
श्वेताम्बरप्रणीतानि तर्कशास्त्राणि मन्वते ॥ २७ ॥
स्याद्वादविद्याविद्योतात्प्रायः साधर्मिका अमी ।
परमष्टसहस्री या न्यायकैरवचन्द्रमाः ॥ २८ ॥
सिद्धान्तसार इत्याद्यास्तर्काः परमकर्कशाः ।
तेषां जयश्रीदानाय प्रगल्भन्ते पदे पदे ॥ २९ ॥
जिनकल्पादयो भेदा व्युच्छिन्नाः साम्प्रतं कलौ ।
वर्त्तमानं ततः प्रोक्तं सर्वं ज्ञेयं जिनागमात् ॥ ३० ॥
सम्यग् जैनं मतं ज्ञात्वा योगेऽष्टाङ्गे रमेत यः ।
स कर्मलाघवं कृत्वा लब्धा सौख्यपरम्पराम् ॥ ३१ ॥

॥ इति जैनमतम् ॥

---

२२ प्रकीर्तिता इति च पाठः । २३ गुप्ताः । धर्मलाभं गृणन्ति ते इत्यपि पाठः । २८–विद्याविद्यौघैरित्यपि पाठः । २९ तेषां च…स्त्रीमोक्षाय विवादोऽपि पदे पदे । ३१ जैनमतमिति च पाठः ।

अथ साङ्ख्यमतं ब्रूमस्ते त्रिदण्डैकदण्डकाः ।
कौपीनं वसनं तेषां धातुरक्ताम्बराश्च ते ॥ ३२ ॥

क्षुरमुण्डा एणचर्मासना द्विजगृहाशनाः ।
पञ्चग्रासीपराश्चैव द्वादशाक्षरजापिनः ॥ ३३ ॥

ॐनमो नारायणाय तद्भक्ताः प्रवदन्त्यदः ।
प्रणामकाले तेऽप्याहुः पदं तत्तु नमोऽन्तकम् ॥ ३४ ॥

बीटेति भारते ख्याता दारवी मुखवस्त्रिका ।
दयानिमित्तं भूतानां मुखनिःश्वासरोधिका ॥ ३५॥

यदाहुस्ते–

घ्राणादनुप्रयातेन श्वासेनैकेन जन्तवः ।
हन्यन्ते शतशो ब्रह्मन्नणुमात्राक्षरवादिना ॥ ३६ ॥

दयार्थं जलजीवानां गलनं धारयन्ति ते ।
शास्त्रेषूपदिशन्त्येवं भक्तानां पुरतः सदा ॥ ३७ ॥

षट्त्रिंशदङ्गुलायामं विंशत्यङ्गुलविस्तृतम् ।
दृढं गलनकं कुर्याद्भूयो जीवान् विशोधयेत् ॥ ३८ ॥

म्रियन्ते मिष्टतोयेन पूतराः क्षारसम्भवाः ।
क्षारतोयेन तु परे न कुर्यात् सङ्करं ततः ॥ ३९ ॥

लूताऽऽस्यतन्तुगलितैकबिन्दौ सन्ति जन्तवः ।
सूक्ष्मा भ्रमरमानास्ते नैव मान्ति त्रिविष्टपे ॥ ४० ॥

कुसुम्भकुङ्कुमाम्भोवन्निचितं सूक्ष्मजन्तुभिः ।
न दृढेनापि वस्त्रेण शक्यं शोधयितुं जलम् ॥ ४१ ॥

( उत्तरमीमांसायां गलनकविचारोऽयम् )

साङ्ख्या निरीश्वराः केचित् केचिदीश्वरदेवताः ।
ये ते निरीश्वरास्तेऽमी नारायणपरायणाः ॥ ४२ ॥

---

३६ ब्रह्माणुमात्राक्षरवादिनामित्यपि पाठः । ४१ अयं श्लोकः पुस्तकान्त-
भ्यते । ४२ ये ते अनीश्वरा इति पाठान्तरम् ।

विष्णोः प्रतिष्ठां कुर्वन्ति साङ्ख्यशासनसूरयः ।
चैतन्यप्रमुखैः शब्दैस्तेषामाचार्य उच्यते ॥ ४३ ॥
प्रत्यक्षमनुमानं च शाब्दं चेति प्रमात्रयम् ।
अन्तर्भावोऽत्र शेषाणां प्रमाणानां सयुक्तिकः ॥ ४४ ॥
अमीषां साङ्ख्यसूरीणां तत्त्वानां पञ्चविंशतिः ।
सत्त्वं रजस्तमश्चेति ज्ञेयं तावद् गुणत्रयम् ॥ ४५ ॥
एतेषां या समाऽवस्था सा प्रकृतिः किलोच्यते।
प्रधानाव्यक्तशब्दाभ्यां वाच्या नित्यस्वरूपिका ॥ ४६ ॥
ततः संजायते बुद्धिर्महानिति यकोच्यते ।
अहङ्कारस्ततोऽपि स्यात् ततः षोडशको गणः ॥ ४७ ॥
स्पर्शनं रसनं घ्राणं चक्षुः श्रोत्रं च पञ्चमम् ।
पञ्च बुद्धीन्द्रियाण्याहुस्तथा कर्मेन्द्रियाणि च ॥ ४८ ॥
पायूपस्थवचःपाणिपादाख्यानि मनस्तथा ।
अन्यानि पञ्चरूपाणि तन्मात्राणीति षोडश ॥ ४९ ॥
रूपात्तेजो रसादापो गन्धाद्भूमिः स्वरान्नभः ।
स्पर्शाद्वायुस्तथा चैवं पञ्चभ्यः पञ्चभूतकम् ॥ ५० ॥
एवं चतुर्विंशतितत्त्वरूपं निवेदितं साङ्ख्यमते प्रधानम् ।
अन्यश्च कर्त्ता विगुणश्च भोक्ता तत्त्वं पुमान् नित्यचिदभ्युपेतः ॥ ५
अमूर्तश्चेतनो भोगी नित्यः सर्वगतोऽक्रियः ।
अकर्त्ता निर्गुणः सूक्ष्म आत्मा कापिलदर्शने ॥ ५२ ॥
प्रकृतेर्विरहो मोक्षस्तन्नाशे स स्वरूपगः ।
बध्यते मुच्यते चैव प्रकृतिः पुरुषो न तु ॥ ५३ ॥
साङ्ख्यानां मतवक्तारः कपिलासुरिभार्गवाः ।
उलूकः पञ्चशिखश्चेश्वरकृष्णस्तु शास्त्रकृत् ॥ ५४ ॥

---

५३ पुरुषोऽक्रिय इति पाठान्तरम् ।

तर्कग्रन्था एतदीया माठरस्तत्त्वकौमुदी ।
गौडपादाऽऽत्रेयतन्त्रे साङ्ख्यसप्ततिसूत्रयुक् ॥ ५५ ॥
काश्यां प्राचुर्यमेतेषां बहवो मासोपवासिकाः ।
धूम्रमार्गानुगा विप्रा अर्चिर्मार्गानुगास्त्वमी ॥ ५६ ॥
वेदप्रियास्ततो विप्रा यज्ञमार्गानुगामिनः ।
हिंसादिवेदविरताः साङ्ख्या अध्यात्मवादिनः ॥ ५७ ॥
स्वकीयस्य मतस्यैते महिमानं प्रचक्षते ।
यदि साङ्ख्यमते भक्तिस्तदा मुक्तिर्विना क्रियाम् ॥ ५८ ॥

उक्तं च माठरप्रान्ते—

हस पिब लल खाद मोद नित्यं भुङ्क्ष्व च भोगान् यथाऽभिलाषम् ।
यदि विदितं ते कपिलमतं तत् प्राप्स्यसि मोक्षसौख्यमचिरेण ॥ ५९ ॥

इति साङ्ख्यमतम् ।

---

अथ मीमांसकं ब्रूमो जैमिनीयापराभिधम् ।
जैमिनीया एकदण्डास्त्रिदण्डा अपि साङ्ख्यवत् ॥ ६० ॥
मीमांसको द्विधा कर्मब्रह्ममीमांसकस्तथा ।
वेदान्ती मन्यते ब्रह्म कर्म भट्टप्रभाकरौ ॥ ६१ ॥
ते धातुरक्तवसना मृगचर्मोपवेशिकाः ।
कमण्डलुधरा मुण्डा भट्टाः प्राभाकराश्च ते ॥ ६२ ॥
वेदान्तध्यानमेवैकमाचारस्तैरुरीकृतः ।
तेषां मते नास्ति देवः सर्वज्ञादिविशेषणः ॥ ६३ ॥
तस्मादतीन्द्रियार्थानां साक्षाद् द्रष्टुरभावतः ।
नित्येभ्यो वेदवाक्येभ्यो यथार्थत्वविनिर्णयः ॥ ६४ ॥
अत एव पुरा कार्यो वेदपाठः प्रयत्नतः ।

---

५५—सूत्रकृत् इति च पाठः । ५७—यज्ञमार्गानुयायिन इति च पाठः
५९ यथाऽभिकामम्, इत्यपि पाठः । ६२—चर्मोपवेशिन इत्यपि पाठः ।

ततो धर्मस्य जिज्ञासा कर्त्तव्या धर्मसाधनी ॥ ६५ ॥
नोदनालक्षणो धर्मो नोदना तु क्रियां प्रति ।
प्रवर्त्तकं वचः प्राहुः स्वःकामोऽग्निं यथा यजेत् ॥ ६६ ॥
वेद एव गुरुस्तेषां वक्ता कश्चित्परो न हि ।
ततः स्वयं ते संन्यस्तं संन्यस्तामिति भाषिणः ॥ ६७ ॥
यज्ञोपवीतं प्रक्षाल्य पिबन्ति तज्जलं शुचि ।
एते साङ्ख्यानुगा वेषात् तत्त्वेऽतिमहती भिदा ॥ ६८ ॥
षट्प्रमाणस्पृशो भाट्टास्तन्नामानि प्रचक्ष्महे ।
प्रत्यक्षमनुमानं च शाब्दं चोपमया सह ॥ ६९ ॥
अर्थापत्तिरभावश्च भाट्टानां षट् प्रमाः स्मृताः ।
प्रभाकरमते पञ्च ते ह्यभावं न मन्वते ॥ ७० ॥
एकमेवाद्वितीयं स्यात् ब्रह्म तत्त्वं महाफलम् ।
प्रपञ्चः स्तम्भकुम्भादिस्तेषां शास्त्रे निरर्थकः ॥ ७१ ॥
मीमांसको द्विजन्मेवेत्यतः शूद्रान्नवर्जकः ।
न पौरुषकृता वेदाः पारम्पर्येण तद्ग्रहात् ॥ ७२ ॥
मीमांसकानां चत्वारो भेदास्तेषु कुटीचरः ।
बहूदकश्च हंसश्च तथा परमहंसकः ॥ ७३ ॥
कुटीचरो मठावासी यजमानपरिग्रही ।
बहूदको नदीतीरे स्नातो नैरस्यभैक्ष्यभुक् ॥ ७४ ॥
हंसो भ्रमति देशेषु तपःशोषितविग्रहः ।
यः स्यात्परमहंसस्तु तस्याचारं वदाम्यहम् ॥ ७५ ॥
स ईशानीं दिशं गच्छन् यत्र निष्ठितशाक्तिकः ।
तत्रानशनमादत्ते वेदान्तध्यानतत्परः ॥ ७६ ॥

---

६७ न तु इति पाठान्तरम् । ६८ त्रिर्जलं इति च पाठः । ७० षट्प्रमा ह्य
पि । ७३ ते तु इति पाठान्तरम् ।

परः पर इहोत्कृष्टो याज्यास्तेषां तु वाडवाः ।
साङ्ख्यवत्प्रकृतेर्भेदान् मोक्षो जीवस्य तन्मते ॥ ७७ ॥

गार्गीयस्मृतिमध्यगाः श्लोकाः-

त्रिदण्डी सशिखो यस्तु ब्रह्मसूत्री गृहच्युतः ।
सकृत् पुत्रगृहेऽश्नाति यो याति स कुटीचरः ॥ ७८ ॥
कुटीचरस्य रूपेण ब्रह्मभिक्षो जिताशनः ।
बहूदकः स विज्ञेयो विष्णुजापपरायणः ॥ ७९ ॥
ब्रह्मसूत्रशिखाहीनः कषायाम्बरदण्डभृत् ।
एकरात्रिं वसेद् ग्रामे नगरे च त्रिरात्रिकम् ॥ ८० ॥
विप्राणामावसथेषु विधूमेषु गताग्निषु ।
ब्रह्मभिक्षां चरेद्धंसः कुटिकावासमाचरन् ॥ ८१ ॥
हंसस्य जायते ज्ञानं तदा स्यात्परमो हि सः ।
चातुर्वर्ण्यप्रभोक्ता च स्वेच्छया दण्डभृत्तदा ॥ ८२ ॥

प्रपञ्चमिथ्या कठवल्लिका च ख्यातं जने भागवतं पुराणम् ।
इत्यादिशास्त्राणि बहूनि तेषां तत्सम्प्रदायस्तु कृशोऽत्र लोके ॥८३॥

इति जैमिनीयमतम् ।

---

अथ योगमतं ब्रूमः शैवमित्यपराभिधम् ।
ते दण्डधारिणः प्रौढकौपीनपरिधायिनः ॥ ८४ ॥
कम्बलिकाप्रावरणा जटापटलशालिनः ।
भस्मोद्धूलनकर्त्तारो नीरसाहारसेविनः ॥ ८५ ॥
दोर्मूले तुम्बकभृतः प्रायेण वनवासिनः ।
आतिथ्यकर्मनिरताः कन्दमूलफलाशनाः ॥ ८६ ॥
सस्त्रीका अथ निस्त्रीका निःस्त्रीकास्तेषु चोत्तमाः ।

---

७७ प्रकृतेर्भेदो इत्यपि । ८३ कृशोऽत्र काले इत्यपि ।

पञ्चाग्निसाधनपराः प्राणलिङ्गधराः करे ॥ ८७ ॥
विधाय दन्तपवनं प्रक्षाल्यांह्रिकराननम् ।
स्पृशन्ति भसनाऽङ्गं त्रिस्त्रिः शिवध्यानतत्पराः ॥ ८८ ॥
यजमानो वन्दमानो वक्ति तेषां कृताञ्जलिः ।
ॐ नमः शिवायेत्येवं शिवाय नम इत्यसौ ॥ ८९ ॥
तेषां च शङ्करो देवः सृष्टिसंहारकारकः ।
तस्यावताराः सारा ये तेऽष्टादश तदर्चिताः ॥ ९० ॥
तेषां नामान्यथ ब्रूमो नकुलीशोऽथ कौशिकः ।
गार्ग्यो मैत्र्यः कौरुषश्च ईशानः षष्ठ उच्यते ॥ ९१ ॥
सप्तमः पारगार्ग्यस्तु कपिलाण्डमनुष्यकौ ।
अपरकुशिकोऽत्रिश्च पिङ्गलाक्षोऽथ पुष्पकः ॥ ९२ ॥
बृहदाचार्योऽगस्तिश्च सन्तानः षोडशः स्मृतः ।
राशीकरः सप्तदशो विद्यागुरुरथापरः ॥ ९३ ॥
एतेऽष्टादश तीर्थेशास्तैः सेव्यन्ते पदे पदे ।
पूजनं प्रणिधानं च तेषां ज्ञेयं तदागमात् ॥ ९४ ॥
अक्षपादो गुरुस्तेषां तेन ते ह्याक्षपादकाः ।
उत्तमां संयमावस्थां प्राप्ता नग्ना भ्रमन्ति ते ॥ ९५ ॥
प्रमाणानि च चत्वारि प्रत्यक्षं लैङ्गिकं तथा ।
उपमानं च शाब्दं च तत्फलानि पृथक् पृथक् ॥ ९६ ॥
तत्त्वानि षोडशामुत्र प्रमाणादीनि तद्यथा ।
प्रमाणं च प्रमेयं च संशयश्च प्रयोजनम् ॥ ९७ ॥
दृष्टान्तोऽप्यथ सिद्धान्तोऽवयवस्तर्कनिर्णयौ ।
वादो जल्पो वितण्डा च हेत्वाभासाश्छलानि च ॥ ९८ ॥

---

९२ सप्तमोऽपरगार्ग्यश्च इत्यपि ।
९८ दृष्टान्तोऽथ च इति पाठान्तरम् ।

जातयो निग्रहस्थानान्येषां व्ययस्तु दुस्तरः ।
आत्यन्तिकस्तु दुःखानां वियोगो मोक्ष उच्यते ॥ ९९ ॥
जयन्ताचार्यरचितो न्यायतर्कोऽतिदुस्तरः ।
अन्यस्तूदयनाचार्यो ग्रन्थप्रासादसूत्रभृत् ॥ १०० ॥
भासर्वज्ञो न्यायसारतर्कसूत्रविधायकः ।
न्यायसाराभिधे तर्के टीका अष्टादश स्फुटाः ॥ १ ॥
न्यायभूषणनाम्नी तु टीका तासु प्रसिद्धिभाक् ।
अयमेषां विशेषस्तु यत्र जल्पन्ति पर्षदि ॥ २ ॥
शैवीं दीक्षां द्वादशाब्दीं सेवित्वा योऽपि मुञ्चति ।
दासीदासोऽपि भवति सोऽपि निर्वाणमृच्छति ॥ ३ ॥
एतेषु निर्विकारा ये मीमांसां दर्शयन्ति ते ।
तत्र पद्यमिदं चास्ति मोक्षमार्गप्ररूपकम् ॥ ४ ॥

न स्वर्धुनी न फणिनो न कपालदाम
नेन्दोः कला न गिरिजा न जटा न भस्म ।
यत्रास्ति नान्यदपि किञ्चिदुपास्महे तद्
रूपं पुराणमुनिशीलितमीश्वरस्य ॥ ५ ॥

स एव योगिनां सेव्यो योऽर्वाचीनस्तु योगभाक् ।
स ध्यायमानो राज्यादिसुखलुब्धैर्निषेव्यते ॥ ६ ॥

उक्तं च तैः स्वयोगशास्त्रे—

वीतरागं स्मरन् योगी वीतरागत्वमश्नुते ।
सरागं ध्यायतः पुंसः सरागत्वं तु निश्चितम् ॥ ७ ॥
येन येन हि भावेन युज्यते यन्त्रवाहकः ।
तेन तन्मयतां याति विश्वरूपो मणिर्यथा ॥ ८ ॥
श्रुतानुसारतः प्रोक्तं नैयायिकमतं मया ।

---

९९ व्यापस्तु इत्यपि । १००–सूत्रकृत् इत्यपि । ५ यत्रान्यदेव न च केञ्चिदित्यपि पाठः । ६ भोगभाक् इत्यपि । ७ ध्यायतस्तस्य इत्यपि ।

एतेषामेव शास्त्रेभ्यस्तांस्तान् भावान् विदुर्बुधाः ॥ ९ ॥
एतेषां यजमानस्तु सुताराहृदयेश्वरः ।
सत्यवादी हरिश्चन्द्रो रामलक्ष्मणपूर्वजः ॥ १० ॥
भरटानां व्रतादाने वर्णव्यक्तिर्न काचन ।
यस्य पुनः शिवे भक्तिर्व्रती स भरटो भवेत् ॥ ११ ॥
अमीषां सर्वतीर्थेषु भरटा एव पूजकाः ।
शेषा नमस्कारकराः सोऽपि कार्यो न सन्मुखः ॥ १२ ॥

## इति शैवम् ।

---

अथ वैशेषिकं ब्रूमः पाशुपतान्यनामकम् ।
लिङ्गादि यौगवत्तेषां ते ते तीर्थकरा अपि ॥ १३
वैशेषिकाणां योगेभ्यो मानतत्त्वगता भिदा ।
प्रत्यक्षमनुमानं च मते तेषां प्रमाद्वयम् ॥ १४ ॥
अवशेषप्रमाणानामन्तर्भावोऽत्र तैर्मतः ।
तत्त्वानि तु षडेवात्र द्रव्यप्रभृतिकान्यहो ! ॥ १५ ॥
द्रव्यं गुणस्तथा कर्म सामान्यं च चतुर्थकम् ।
विशेषसमवायौ च तत्त्वषट्कं हि तन्मते ॥ १६ ॥
तत्र द्रव्यं नवधा भूजलतेजोऽनिलान्तरिक्षाणि ।
कालदिगात्ममनांसि च गुणः पुनः पञ्चविंशतिधा ॥ १७ ॥
स्पर्शरसरूपगन्धाः शब्दः सङ्ख्या विभागसंयोगौ ।
परिमाणं च पृथक्त्वं तथा परत्वापरत्वे च ॥ १८ ॥
बुद्धिः सुखदुःखेच्छा धर्माधर्मप्रयत्नसंस्काराः ।
द्वेषः स्नेहगुरुत्वे द्रवत्ववेगौ गुणा एते ॥ १९ ॥
उत्क्षेपावक्षेपावाकुञ्चनकं प्रसारणं गमनम् ।

---

१०–पूर्वजाः इति पाठान्तरम् । ११ यस्य यस्य इत्यपि । १५ अथ तत्त्वानि षड् ब्रूमो– इत्यपि पाठः ।

जातयो निग्रहस्थानान्येषां व्ययस्तु दुस्तरः ।
आत्यन्तिकस्तु दुःखानां वियोगो मोक्ष उच्यते ॥ ९९ ॥
जयन्ताचार्यरचितो न्यायतर्कोऽतिदुस्तरः ।
अन्यस्तूदयनाचार्यो ग्रन्थप्रासादसूत्रभृत् ॥ १०० ॥
भासर्वज्ञो न्यायसारतर्कसूत्रविधायकः ।
न्यायसाराभिधे तर्के टीका अष्टादश स्फुटाः ॥ १ ॥
न्यायभूषणनाम्नी तु टीका तासु प्रसिद्धिभाक् ।
अयमेषां विशेषस्तु यत्प्रजल्पन्ति पर्षदि ॥ २ ॥
शैवीं दीक्षां द्वादशाब्दीं सेवित्वा योऽपि मुञ्चति ।
दासीदासोऽपि भवति सोऽपि निर्वाणमृच्छति ॥ ३ ॥
एतेषु निर्विकारा ये मीमांसां दर्शयन्ति ते ।
तत्र पद्यमिदं चास्ति मोक्षमार्गप्ररूपकम् ॥ ४ ॥

न स्वर्धुनी न फणिनो न कपालदाम
नेन्दोः कला न गिरिजा न जटा न भस्म ।
यत्रास्ति नान्यदपि किञ्चिदुपास्महे तद्
रूपं पुराणमुनिशीलितमीश्वरस्य ॥ ५ ॥

स एव योगिनां सेव्यो योऽर्वाचीनस्तु योगभाक् ।
स ध्यायमानो राज्यादिसुखलुब्धैर्निषेव्यते ॥ ६ ॥

उक्तं च तैः स्वयोगशास्त्रे—

वीतरागं स्मरन् योगी वीतरागत्वमश्नुते ।
सरागं ध्यायतः पुंसः सरागत्वं तु निश्चितम् ॥ ७ ॥
येन येन हि भावेन युज्यते यन्त्रवाहकः ।
तेन तन्मयतां याति विश्वरूपो मणिर्यथा ॥ ८ ॥
श्रुतानुसारतः प्रोक्तं नैयायिकमतं मया ।

९९ व्यापस्तु इत्यपि । १००—सूत्रकृत् इत्यपि । ५ यत्रान्यदेव न च किञ्चिदित्यपि पाठः । ६ भोगभाक् इत्यपि । ७ ध्यायतस्तस्य इत्यपि ।

एतेषामेव शास्त्रेभ्यस्तांस्तान् भावान् विदुर्बुधाः ॥ ९ ॥
एतेषां यजमानस्तु सुताराहृदयेश्वरः ।
सत्यवादी हरिश्चन्द्रो रामलक्ष्मणपूर्वजः ॥ १० ॥
भरटानां व्रतादाने वर्णव्यक्तिर्न काचन ।
यस्य पुनः शिवे भक्तिर्व्रती स भरटो भवेत् ॥ ११
अमीषां सर्वतीर्थेषु भरटा एव पूजकाः ।
शेषा नमस्कारकराः सोऽपि कार्यो न सन्मुखः ॥ १२ ॥

इति शैवम् ।

---

अथ वैशेषिकं ब्रूमः पाशुपतान्यनामकम् ।
लिङ्गादि यौगवत्तेषां ते ते तीर्थकरा अपि ॥ १३ ॥
वैशेषिकाणां योगेभ्यो मानतत्त्वगता भिदा ।
प्रत्यक्षमनुमानं च मते तेषां प्रमाद्वयम् ॥ १४ ॥
अवशेषप्रमाणानामन्तर्भावोऽत्र तैर्मतः ।
तत्त्वानि तु षडेवात्र द्रव्यप्रभृतिकान्यहो ! ॥ १५ ॥
द्रव्यं गुणस्तथा कर्म सामान्यं च चतुर्थकम् ।
विशेषसमवायौ च तत्त्वषट्कं हि तन्मते ॥ १६ ॥
तत्र द्रव्यं नवधा भूजलतेजोऽनिलान्तरिक्षाणि ।
कालदिगात्ममनांसि च गुणः पुनः पञ्चविंशतिधा ॥ १७ ॥
स्पर्शरसरूपगन्धाः शब्दः सङ्ख्या विभागसंयोगौ ।
परिमाणं च पृथक्त्वं तथा परत्वापरत्वे च ॥ १८ ॥
बुद्धिः सुखदुःखेच्छा धर्माधर्मप्रयत्नसंस्काराः ।
द्वेषः स्नेहगुरुत्वे द्रवत्ववेगौ गुणा एते ॥ १९ ॥
उत्क्षेपावक्षेपावाकुञ्चनकं प्रसारणं गमनम् ।

---

१०–पूर्वजाः इति पाठान्तरम् । ११ यस्य यस्य इत्यपि । १५ अथ तत्त्वानि षड् ब्रूमो– इत्यपि पाठः ।

पञ्चविधं कर्मैतत् परापरे द्वे तु सामान्ये ॥ २० ॥
तत्र परं सत्ताख्यं द्रव्यत्वाद्यपरमथ विशेषस्तु ।
निश्चयतो नित्यद्रव्यवृत्तिरन्त्यो विनिर्दिष्टः ॥ २१ ॥
य इहायुतसिद्धानामाधाराधेयभूतभावानाम् ।
संबन्ध इह प्रत्ययहेतुः स च भवति समवायः ॥ २२ ॥
यौगे वैशेषिके तन्त्रे प्रायः साधारणी क्रिया ।
आचार्यः शङ्कर इति नाम प्रागभिधापरम् ॥ २३ ॥
अमीषां तर्कशास्त्राणि षट् सहस्राणि कन्दली ।
श्रीधराचार्यरचिता प्रशस्तकरभाष्यकम् ॥ २४ ॥
तत्र सप्तशती मानं सूत्रं तु त्रिशतीमितम् ।
व्योमशिवाचार्यकृता टीका व्योममतिर्मता ॥ २५ ॥
सा स्यान्नव सहस्राणि परा तु किरणावली ।
सा तूदयनसंदब्धा उद्देशात् षट्सहस्रिका ॥ २६ ॥
श्रीवत्साचार्यरचिता टीका लीलावती मता ।
साऽपि स्यात् षट् सहस्राणि एकं त्वात्रेयतन्त्रकम् ॥ २७ ॥
तत्तु संप्रति व्युच्छिन्नं शिष्या मन्दोद्यमा यतः ।
आचारव्यवहारौ च प्रायश्चित्तं च ते विदुः ॥ २८ ॥
जीवस्यात्यन्तिको दुःखवियोगो मोक्ष इष्यते ।
यौगानां च तथैवोक्तः प्रायः साधर्मिका यतः ॥ २९ ॥
शिवेनोलूकरूपेण कणादस्य मुनेः पुरः ।
मतमेतत् प्रकथितं तत औलूक्यमुच्यते ॥ ३० ॥
अक्षपादेन ऋषिणा रचितत्वात्तु यौगिकम् ।
आक्षपादमिति ख्यातं प्रायस्तुल्यं मतद्वयम् ॥ ३१ ॥

**इति वैशेषिकम् ।**

---

२५ तत्तु इत्यपि, –मतिः स्मृता इति च । २९ उच्यते इत्यपि ।

अथ बौद्धमतं वक्ष्ये मौण्ड्यं कृत्तिः कमण्डलुः ।
लिङ्गं तेषां रक्तवस्त्रं वेषः शौचाक्रिया बहुः ॥ ३२ ॥
धर्मबुद्धसङ्घरूपं तेषां रत्नत्रयं मतम् ।
तारा देवी पुनस्तेषां सर्वविघ्नोपघातिनी ॥ ३३ ॥
सप्त तीर्थङ्करास्तेषां कण्ठे रेखात्रयाङ्किताः ।
विपश्यी १ शिखी २ विश्वभूः ३ ककुच्छन्दश्च ४ काञ्चनः ५ ॥ ३४ ॥
काश्यपश्च ६ सप्तमस्तु शाक्यसिंहोऽर्कबान्धवः ।
तथा राहुलसूः सर्वार्थसिद्धो गौतमान्वयः ॥ ३५ ॥
मायाशुद्धोदनसुतो देवदत्ताग्रजश्च सः ।
शौद्धोदनिधर्मकीर्तिप्रमुखा गुरवो मताः ॥ ३६ ॥
प्रत्यक्षमनुमानं च द्वे प्रमाणे तु तन्मते ।
चतुर्णामार्यसत्यानां दुःखादीनां प्ररूपकः ॥ ३७ ॥
सर्वज्ञस्तन्मते बुद्धः स प्रमेयचतुष्कवाक् ।
दुःखं समुदयो मार्गो निरोधश्चेति तात्त्विकम् ॥ ३८ ॥
दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्त्तिताः ।
विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥ ३९ ॥
समुदेति यतो लोके रागादीनां गणोऽखिलः ।
आत्माऽऽत्मीयस्वभावाख्यः समुदयः स उदाहृतः ॥ ४० ॥
क्षणिकाः सर्वसंस्कारा इत्येवं वासना तु या ।
स मार्ग इह विज्ञेयो निरोधो मोक्ष उच्यते ॥ ४१ ॥
सुगताचारलग्नस्य ज्ञाननिर्मलता हि या ।
सा मुक्तिर्मन्यते बौद्धैः कैश्चित् कैश्चिच्चितः क्षयः ॥ ४२ ॥
आत्मानं मन्वते नैते ज्ञानमेव तु मन्वते ।

---

३५ काश्यपस्तु इत्यपि । ३६ पुरुषा मता इति च । ३७ प्रमाणे चेति पाठान्तरम् ।
४२ केचिच्च चितूक्षयमित्यपि ।

भवान्तरे सहचरं संतानस्थं क्षणक्षयि ॥ ४३ ॥
चत्वारो बौद्धभेदाः स्युर्भक्तिस्तेषां पृथक् पृथक् ।
काव्यादमुष्माद् ज्ञातव्यास्तन्मतप्रतिपादिनात् ॥ ४४ ॥
अर्थो ज्ञानसमन्वितो मतिमता वैभाषिकेणेष्यते
प्रत्यक्षेण हि बाह्यवस्तुविसरः सौत्रान्तिकैराहृतः ।
योगाचारमतानुगैरभिमता साकारबुद्धिः परा
मन्यन्ते बत मध्यमाः कृतधियः स्वच्छां परां संविदम् ॥ ४५ ॥
तर्कभाषा हेतुबिन्दुर्न्यायबिन्दुस्तथाऽर्चटः ।
तर्कः कमलशीलश्च तथा न्यायप्रवेशकः ॥ ४६ ॥
ज्ञानपारमिताद्यास्तु ग्रन्थाः स्युर्दश तन्मते ।
प्रासादा वर्तुलास्तेषां बुद्धाण्डक इति स्मृताः ॥ ४७ ॥
मृद्वी शय्या प्रातरुत्थाय पेया
मध्ये भक्तं पानकं चापराह्णे ।
द्राक्षाखण्डं शर्करा चार्द्धरात्रे
मोक्षश्चान्ते शाक्यसिंहेन दृष्टः ॥ ४८ ॥

## इति बौद्धमतम् ।

उक्ता लिङ्गादयो भेदा दर्शनानां शिवेषिणाम् ।
तद्विस्तरस्तु न प्रोक्तो यथाज्ञानमुदीरितः ॥ ४९ ॥
अष्टाङ्गयोगसिद्ध्यर्थं दध्युर्लिङ्गानि लिङ्गिनः ।
सर्वे प्राहुस्तमष्टाङ्गं तत्स्वरूपं वदाम्यथ ॥ ५० ॥
अहिंसासूनृतास्तेयब्रह्माकिञ्चनता यमाः ।
नियमाः शौचं सन्तोषः स्वाध्यायतपसी अपि ॥ ५१ ॥

---

४४ –स्तु शक्तिस्तेषामिति पाठान्तरम् । ४५ प्रत्यक्षो नहि बाह्य–इत्यां सौत्रान्तिकैराश्रित इति च । ४७ बौद्धाण्डक इत्यपि ४९ तद्विस्तरो ह्यनन्तो यथा–इत्यपि । ५० वदाम्यहमित्यपि ।

देवताप्रणिधानं च करणं पुनरासनम् ।
प्राणायामः प्राणयमः श्वासप्रश्वासरोधनम् ॥ ५२ ॥
प्रत्याहारस्त्विन्द्रियाणां विषयेभ्यः समाहृतिः ।
धारणा तु क्वचिद् ध्येये चित्तस्य स्थिरबन्धनम् ॥ ५३ ॥
ध्यानं तु विषये तस्मिन्नेकप्रत्ययसंततिः ।
समाधिस्तु तदेवार्थमात्राभासनरूपकम् ॥ ५४ ॥
एवं योगो यमाद्यङ्गैरष्टभिः संमतोऽष्टधा ।
मोक्षोपायो योगो ज्ञानश्रद्धानचरणात्मकः ॥ ५५ ॥
निवर्त्तको भवेद् धर्मो दर्शनानां शिवैषिणाम् ।
राज्यादिभोगमिच्छूनां गृहिणां तु प्रवर्तकः ॥ ५६ ॥
सर्वसावद्यविरतिर्धर्मः सिद्ध्यै निवर्त्तकः ।
इष्टापूर्त्तादिको धर्मो भवेद् भूत्यै प्रवर्तकः ॥ ५७ ॥
धर्माधर्मविधातारं जीवं दर्शनिनो विदुः ।
नास्तिकास्तं न मन्यन्ते पुण्यापुण्यबहिर्मुखाः ॥ ५८ ॥
तेऽधिपर्षद् वदन्त्येवं नास्ति जीवो न कर्म च ।
धर्माधर्मौ न विद्येते ततः किं नु तयोः फलम् ? ॥ ५९ ॥
एतावानेव लोकोऽयं यावानिन्द्रियगोचरः ।
भद्रे ! वृकपदं पश्य यद् वदन्त्यबहुश्रुताः ॥ ६० ॥
पिब खाद च चारुलोचने ! यदतीतं वरगात्रि ! तन्न ते ।
न हि भीरु ! गतं निवर्त्तते समुदयमात्रमिदं कलेवरम् ॥ ६१ ॥
पृथ्वी जलं तथा तेजो वायुर्भूतचतुष्टयम् ।
प्रमाणभूमिरेतेषां मानं त्वक्षजमेव हि ॥ ६२ ॥
पृथ्व्यादिभूतसंहत्यां यथा देहादिसङ्गतिः ।

---

५४--मात्राध्यासनपूर्वकमिति च । ६० यद् वदन्ति बहुश्रुता इत्यपि । ६ किञ्च पृथ्वी जलं तेज ईत्यपि ।

मदशक्तिः सुराऽङ्गेभ्यो यद्वत् तद्वच्चिदात्मता ॥ ६३ ॥
तस्माद् दृष्टपरित्यागाद् यददृष्टे प्रवर्त्तनम् ।
तद्धि लोकस्य मूढत्वं चार्वाकाः प्रतिपेदिरे ॥ ६४ ॥
क्रमेण खण्डनं तेषां जीवसत्त्वप्रपञ्चताम् ।
अहं दुःखी सुखी चाहमिति प्रत्यययोगतः ॥ ६५ ॥
घटं वेद्म्यहमित्यत्र त्रितयं प्रतिभासते ।
कर्म क्रिया च कर्त्ता च, तत्कर्त्ता किं निषिध्यते ? ॥ ६६ ॥
शरीरमेव चेत्कर्तृ, न कर्तृ, तदचेतनम् ।
भूतचैतन्ययोगाच्च चेतनं, तदसङ्गतम् ॥ ६७ ॥
मया दृष्टं श्रुतं स्पृष्टं घ्रातमास्वादितं स्मृतम् ।
इत्येककर्तृका भावा भूतचिद्वादिनः कथम् ? ॥ ६८ ॥
स्वसंवेदनतः सिद्धे स्वदेहे चेतनात्मनि ।
परदेहेऽपि तत्सिद्धिरनुमानेन साध्यते ॥ ॥ ६९ ॥
बुद्धिपूर्वा क्रिया दृष्टा स्वदेहेऽन्यत्र तद्गतिः ।
प्रमाणबलतः सिद्धा चेतना नातिवार्यते ॥ ७० ॥
तत्परलोकिनः सिद्धौ कर्मबन्धो न दुर्घटः ।
विचित्राध्यवसायस्थः स हि बध्नात्यनादितः ॥ ७१ ॥
पुण्यपापमयं कर्म चीयते वाऽपचीयते ।
तद्वशात् सुखदुःखानि न तु यादृच्छिकान्यहो ! ॥ ७२ ॥
नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात् ।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः ॥ ७३ ॥
स्तन्यपानाभिलाषो यत् प्रथमं बालके भवेत् ।
पूर्वजन्माभ्यासतोऽसौ तस्मिन् जन्मन्यशिक्षणात् ॥ ७४ ॥

---

७० केन नाम निवार्यते ? इत्यपि । ७१ तत्परलोकिनि सिद्धे इति च । ७
मन्यपि क्षणादित्यपि ।

तस्मान्नास्तिकवाक्येषु रतिः कर्तुं न युज्यते ।
आत्मा ज्ञानी कर्ममुक्तः परलोकी च बुध्यताम् ॥ ७५ ॥
स चाष्टाङ्गेन योगेन कर्मोन्मूल्य समन्ततः ।
आप्नोति मुक्तिं तत्रोच्चैरानन्दं स्वादयत्यहो ! ॥ ७६ ॥
सादिकमनन्तमनुपममव्याबाधं स्वभावजं सौख्यम् ।
प्राप्तः स केवलज्ञानदर्शनो मोदते मुक्तः ॥ ७७ ॥
सर्वथाऽप्यजिघांसूनां गुरुदेवहितैषिणाम् ।
अदीर्घमत्सराणां च मुक्तिरासन्नवर्त्तिनी ॥ ७८ ॥
कालस्वभावनियतिचेतनेतरकर्मणाम् ।
भवितव्यतया पाके मुक्तिर्भवति नान्यथा ॥ ७९ ॥

बालावबोधनकृते मलधारिसूरिः
श्रीराजशेखर इति प्रथमानबुद्धिः ।
सम्यग्गुरोरधिगतोत्तमतर्कशास्त्रः
षड्दर्शनीमिति मनाक् कथयांबभूव ॥ १८० ॥

**इति श्रीराजशेखरसूरिकृतः षड्दर्शनसमुच्चयः ।**

---

७५ कर्मयुक्त इत्यपि । ७६ प्राप्नोतीत्यपि । ७८ सर्वत्राप्यजिघांसूनां इति च । १८० प्रथितोरुबुद्धिरित्यपि । स तां कथयांबभूवेति च ।

" ये वर्णा द्विजभूपतिप्रभृतयस्तेषां च या या भिदा
यैर्धर्माः प्रतिपादिताः स्मृतिशतेष्वेषां पुराणेषु च ।
वेदेष्वप्यनुवासरं सरभसं श्रव्याः प्रगल्भैरमुं
मुक्त्वा हिंसकमार्गमेषु परमं कारुण्य . . . . . . ॥ १८१ ॥
. . . . . . न्यखिलानि भक्तिभरतः संसेवितानि ध्रुवं
तैर्मन्त्राः सकलाः किलाऽभिमतदाः सर्वेऽपि सम्यग् मताः ।
आराद्धा गुरवश्च तैर्व्रतभृतस्तप्तं च तैः सत्तपो-
यैः कारुण्यमयैः सुजैनमतगैः प्राप्तं पदं निश्चलम् ॥१८२॥
इति षड्दर्शनसमुच्चयमानः पठ्यमानो नन्दतात् "।
इत्यणहिल्लपुरपत्तनभाण्डागारस्थपुस्तकेऽधिकः पाठो दृश्यते ।

अर्हम्

श्रीयशोविजयजैनग्रन्थमाला [१७]



मलधारिश्रीराजशेखरसूरिविरचितः

# षड्दर्शनसमुच्चयः ।



शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिपादा-
म्भोजचञ्चरीकायमाणाभ्यां
पं–श्रावकहरगोविन्ददास–बेचरदासाभ्यां संशोधितः ।



स च
वाराणस्यां
श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण निजधर्माभ्युदययन्त्रालये
मुद्रितः प्रकाशितश्च ।

मूल्यम् ।)

# प्रस्तावना ।

सत्स्वपि प्रभूतभेदभिन्नेषु नानादर्शनेषु मुख्यतया, मन्तव्यानामनतिपार्थक्येनाऽन्येषामन्यत्राऽन्तर्भावेन च मूलभेदानाश्रित्य तावज्जैन–सांख्य–जैमिनीय–न्याय–वैशेषिक–सौगतलक्षणानि, जैन–सांख्य–जैमिनीय–न्याय–सौगत–चार्वाकस्वरूपाणि वा षडेव दर्शनानि प्रसिद्धानि । उपनिबद्धानि च तानि तैस्तैर्महामतिभिस्तत्र तत्र शास्त्रेष्वतिविविक्तविस्तृततया । किन्तु बहुप्रयाससाध्यत्वेन दुरवगाहत्वेन च तानि न भवन्त्यलं विस्तारमुपेचिक्षिषूणां संक्षेपं च प्रतिपित्सूनां मन्दमतीनां विधातुमुपकारम् । इति संक्षेपरुचींस्ताननुग्रहीतुं बहूपयोगिनं ग्रन्थमिमं व्यररचन् मलधारिश्रीराजशेखरसूरयः । लघीयानप्ययं ग्रन्थः षण्णामपि दर्शनानामभीष्टदेवतातत्त्वव्यतिरिक्तानां तत्तद्गुरुवेषाचरणग्रन्थादीनामप्यवश्यावसेयानामाम्नातानां प्रत्यायकत्वेन तत्तदनभिज्ञानां सर्वेषामप्यत्युपादेयतामावहतीत्यत्र केन किं वक्तव्यम् ?। अमुमेवोपजीव्य तार्किकचक्रमौलिमौलीयितपूज्यपादश्रीहरिभद्रसूरिकृतषड्दर्शनसमुच्चयस्य टीकायां विद्वद्वरश्रीगुणरत्नसूरयोऽपि तत्तत्स्थलेषु तत्तद्दर्शनाभिमतगुरुवेषादीन् प्रत्यपीपदन् ।

एतेषां श्रीराजशेखरसूरीणां हर्षपुरीयगच्छे समुत्पत्तिः, सत्तासमयश्च विक्रमसंवत् १४०५ रूप इति

"श्रीप्रश्नवाहनकुले कोटिकनामनि गणे जगद्विदिते ।
श्रीमध्यमशाखायां हर्षपुरीयाभिधे गच्छे ॥ १ ॥

मलधारिबिरुदविदितश्रीअभयोपपदसूरिसन्ताने ।
श्रीतिलकसूरिशिष्यः सूरिः श्रीराजशेखरो जयति ॥ २ ॥

तेनाऽयं मृदुगद्यैर्मुग्धो मुग्धावबोधकामेन ।
रचितः प्रबन्धकोशो जयताज्जिनपतिमतं यावत् ॥ ३ ॥

तथा–

कट्टारवीरदुःसाधवंशमुकुटो नृपौघगीतगुणः ।
बब्बूलीपुरकारितजिनपतिसदनोच्छलत्कीर्तिः ॥ ४ ॥

वापकगार्थोऽस्तनवीं वागर्थोऽप्यति गघादवक्षमुनि ।
तद्भूर्जनकनामा तत्पुत्रः शाहको दक्षः ॥ ५ ॥
तत्सूनुः श्रीमन्तिलकर्कोलिकोऽभवत्सगर्गितिः ।
दुर्भिक्षदुःखदलनः श्रीमन्मदनपालगोयितः ॥ ६ ॥
तस्मै जयति गिरिसवर्पद्दर्शनपोषणो महणसिंहः ।
दिल्ल्यां स्वदत्तवसतौ ग्रन्थमिमं कारयामास ॥ ७ ॥
शरगगनमनुमिताऽब्दे ज्येष्ठामूलीयधवलसप्तम्याम् ।
निष्पन्नमिदं शास्त्रं श्रोतृश्रोत्राः सुखं तन्यात '' ॥ ८ ।

इति तैरेव विनिर्मितस्य श्रीचतुर्विंशतिप्रबन्धस्य प्रशस्तितो निर्विसंवादं प्रतीतिगोचरीभवति । एभिरन्येऽपि स्याद्वादकलिका-श्रीस्याद्वादरत्नाकरावतारिकापञ्जिका-श्रीन्यायकन्दलीपञ्जिकादयो ब-हवो ग्रन्थाः प्राणायिषत । यैः स्वपरशास्त्रेषु निःसन्देहमवगम्यते तेषां विशदं वैशारद्यम् । किञ्च, तदानीन्तना अन्यगच्छीया अप्याचार्यास्तान् गुरुत्वेन संमानित्यकार्षुः, समशुश्रुवंश्च तैस्तत्तद्विषयकान्स्वविरच-यांचक्राणान् ग्रन्थानित्यपि

''रत्नाकरावतारिकावरटिप्पनं त
ज्ज्ञानेन्दुरल्पतरधीः स्वमतिप्रवृद्धयै ।
तच्छिष्यको रचितवान् मलधारिपूज्य-
श्रीराजशेखरगुरोश्च निदेशमाप्य ॥ ८ ॥
श्रीराजशेखरगुरोरिमाऽविधानं
तर्कागमाम्बुधिमहार्थजलाभिलाषी ।
मद्वाक्यजातमखिलं तदनल्पदोषं
निर्दूषणं व्यधित गत्यतिभाऽमितश्रीः '' ॥ ९. ॥

इति पूर्णिमागच्छीयपं०–ज्ञानचन्द्रप्रणीतरत्नाकरावतारिकाटिप्पनप्रशस्तिप्रान्ततः,

''श्रीमान् हर्षपुरीयगच्छजलधिप्रोल्लासशीतद्युति-
र्वाणीभूषणराजशेखरगुरुः सौजन्यसंवाराभूः ।
श्रीशान्तेश्चरितं व्यशोधयदिदं दुष्कर्मसर्मापहं
प्राज्ञैस्त्वैरपि शोध्यमेतदसमं कृत्वा प्रसादं मयि'' ॥ ११ ॥

१ श्रीधरप्रणीतो वैशेषिकदर्शनप्रतिपादनपरो ग्रन्थः ।

इति कविपुरन्दरश्रीमुनिभद्रसूरिणा विक्रमार्काद् गगनेन्दुमनुमिते १४१० वर्षे निर्मितस्य श्रीशान्तिनाथमहाकाव्यस्य चरित्रप्रशस्तिभागतश्च स्फुटं प्रतीयते ।

ग्रन्थस्याऽस्य मुद्रणावसरे हस्तलिखितं पुस्तकमेकं मुनिश्रीदेवविजयस्य, अन्यच्चाणहिल्लपुरपत्तन( पाटन )स्थझवेरीवाडाश्रीपार्श्वनाथाह्वयभाण्डागारात् श्रेष्ठिवर्यहीराचन्द्रात्मजवाडीलालद्वारोपालप्साताम्; इत्यत्र स्थले तयोर्धन्यवादपुरस्सरमुपकार उररीक्रियते । एवं च पुस्तकद्वयाधारेण संपादितेऽप्यस्मिन् ग्रन्थे दृष्टिदोषवशेन जाताः स्खलनाः सहृदयाः कृपां विधाय शोधयिष्यन्तीति–

प्रार्थयेते—

हरगोविन्द–बेचरदासौ ।



मरीचिः प्रमुख एषां मरीचिप्रमुखाः । यदाह—

'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महातेजाः सप्तमः परिकीर्त्तितः ॥ १ ॥

सप्त च ते ऋषयश्च सप्तर्षयः । "संख्या समाहारे च-"॥२।१।१९॥ इति संज्ञायां कर्मधारयः ॥ १॥ शिखण्डश्चूडाऽस्त्येषां शिखण्डिनः चित्राश्च ते शिखण्डिनश्च चित्रशिखण्डिनः ॥ २ ॥

पुष्पदन्तौ पुष्पवन्तावेकोक्त्या शशिभास्करौ ॥ २८ ॥

पुष्पे इव पुष्पे दन्ताविव दन्तौ, पुष्पे च ते दन्तौ च पुष्पदन्तौ, यद्विश्वदत्तः–रविशशिनौ पुष्पदन्ताख्याविति ॥ १ ॥ पुष्पं विकासोऽस्त्यनयोः पुष्पवन्तौ एकयोक्त्या अपृथग्वचनेन रोदसीवच्छशिभास्करावुच्येते । न तु पुष्पदन्तः पुष्पवान् वा इन्दुः सूर्यो वोच्यते ॥ २ ॥ २८ ॥

राहुग्रासोऽर्केन्द्वोर्ग्रह उपराग उपप्लवः ।

राहुणा ग्रसनं राहुग्रासः । अर्केन्द्वोः कर्मभूतयोर्ग्रहणं ग्रहः ॥ १ ॥ उपरज्येते छाद्येते चन्द्रार्कावनेनोपरागः ॥ २ ॥ उपप्लूयेते अनेन उपप्लवः ॥ ३ ॥

उपलिङ्गं त्वरिष्टं स्यादुपसर्ग उपद्रवः ॥ २९ ॥

अजन्यमीतिरुत्पातः

उपलिङ्ग्यते दोषैर्गम्यते जनोऽत्र उपलिङ्गम् ॥ १ ॥ नास्ति रिष्टं क्षेममत्र अरिष्टम् ॥ २ ॥ उपसृज्यते उपद्रूयते प्रजाऽत्र उपसर्गः ॥ ३ ॥ उपद्रूयते प्रजाऽत्र उपद्रवः ॥ ४ ॥ २९ ॥ न जने साधु अजन्यम्, पुंक्लीबलिङ्गः ॥ ५ ॥ ईयते प्राप्यते दुःखमस्यामीतिः, स्त्रीलिङ्गः । "दमुषि-" ॥ ( उणा–६५१ ) ॥ इति बहुवचनात्तिः कित् ॥ ६ ॥ उत्पतत्यकस्मादायाति अशुभमस्मादुत्पातः, घञ् ॥ ७ ॥

वह्न्युत्पात उपाहितः ।

वह्निकृत उत्पातो वह्न्युत्पातः ॥१॥ उपासन्नमहितमस्योपाहितः; धूमकेत्वाख्य उत्पात इत्येके ॥ २ ॥

स्यात्कालः समयो दिष्टानेहसौ सर्वमूषकः ॥ ४० ॥

कालयति क्षिपति सर्वभावान्, कल्यतेऽसाविति वा कालः ॥१॥ समेति समयः, पुंक्लीबलिङ्गः ॥ २ ॥ दिश्यते स्म दिष्टः ॥ ३ ॥ न ईहते चेष्टते अनेनाग्रात इत्यनेहाः, पुंलिङ्गः । "नञि ईहेरेहेधौ च" ॥ (उणा–९७५) ॥ इत्यम्; न ईहत इति वा ॥ ४ ॥

सर्वं मूषति सर्वमूषकः । यदाह—कालः पचति भूतानि कालः संहरते प्रजाः इति ॥ ५ ॥ ४० ॥

कालो द्विविधोऽवसर्पिण्युत्सर्पिणीविभेदतः ।
सागरकोटिकोटीनां विंशत्या स समाप्यते ॥ ४१ ॥

अवसर्पो भावानां पतत्प्रकर्षता, सोऽस्यामस्ति अवसर्पिणी ॥ १ ॥ उत्सर्पो भावानामेव रोहत्प्रकर्षता, सोऽस्यामस्ति उत्सर्पिणी ॥ २ ॥ तयोर्विभेदात्कालस्य द्वैविध्यम् । सागरः सागरोपमं दशकोटीकोटिपल्योपमप्रमाणम्, सागराणां कोटिकोट्यः सागरकोटिकोट्यस्तासा विंशत्या स कालो द्विविधोऽपि परिपूर्यते ॥ ४१ ॥

अवसर्पिण्यां षडरा उत्सर्पिण्यां त एव विपरीताः ।
एवं द्वादशभिररैर्विवर्तते कालचक्रमिदम् ॥ ४२ ॥

षट् षट्संख्याः । इयृति गच्छन्ति अरा वक्ष्यमाणा एकान्तसुषमादय एकान्तदुःषमान्ताः, अवसर्पिण्यां भवन्ति । त एवेति । एकान्तसुषमादयः विपरीता एकान्तदुःषमाद्या एकान्तसुषमान्ताः, उत्सर्पिण्यां भवन्ति । एवमुक्तप्रकारेण द्वादशभिररैश्चक्रमिव चक्रं कालस्य चक्रं कालचक्रं विवर्त्तते परिभ्रमति ॥ ४२ ॥

तत्रैकान्तसुषमाऽरश्चतस्रः कोटिकोटयः ।
सागराणां

तत्रेति । द्वादशारे कालचक्रे शोभनाः समा वर्षाण्यस्यां सुषमा "निर्दुःसुवेः समसूतेः" ॥ २।३।५६ ॥ इति षत्वम् । एकान्तेन सुषमा दुःषमानुभावरहिता एकान्तसुषमा सुषमसुषमेत्यर्थः प्रथमोऽरः । सागराणां सागरोपमानां चतस्रश्चतुस्संख्याः कोटीनां कोटयो भवन्ति । चतुस्सागरोपमकोटाकोटिप्रमाण इत्यर्थः ॥

सुषमा तु तिस्रस्तत्कोटिकोटयः ॥ ४३ ॥

सुषमाख्यो द्वितीयोऽरः, तिस्रः सागरोपमकोटिकोटयो भवन्ति ॥ ४३ ॥

सुषमदुःषमा ते द्वे

दुष्टाः समा अस्यां दुःषमा सुषमा चासौ दुःषमा च सुषमदुःषमा, सुषमाऽनुभावबहुला अल्पदुःषमानुभावेत्यर्थः । तदाख्यस्तृतीयोऽरः । ते द्वे इति । सागरोपमकोटिकोट्यौ ॥

दुःषमसुषमा पुनः ।

सैका-सहस्रैर्वर्षाणां द्विचत्वारिंशतोनिता ॥४४॥

दुःषमा चासौ सुषमा च दुःषमसुषमा, दुःषमानुभावबहुला; अल्पसुषमानुभावेत्यर्थः। तदाख्यश्चतुर्थोऽरः, सा सागरोपमकोटिकोटी एका एकसंख्या द्विचत्वारिंशद्वर्षसहस्रैरूना ॥४४॥

अथ दुःषमैकविंशतिरब्दसहस्राणि

दुःषमाख्यः पञ्चमोऽरः, एकविंशतिर्वर्षसहस्राणि ॥

तावती तु स्यात् ।

एकान्तदुःषमाऽपि हि

एकान्तेन दुःषमा सुषमानुभावरहिता एकान्तदुःषमा; दुःषमदुःषमेत्यर्थः। तदाख्यः षष्ठोऽरः, तावती दुःषमावदेकविंशतिवर्षसहस्रप्रमाणा ॥

एतत्संख्याः परेऽपि विपरीताः ॥४५॥

एषैव अवसर्पिण्यरकोक्ता संख्या येषां त एतत्संख्याः, परेऽपि उत्सर्पिण्यरका अपि, विपरीताः प्रतिलोमवृत्तयः एकान्तदुःषमाराद्याः एकान्तसुषमारपर्यन्ता भवन्ति ॥४५॥

प्रथमेऽरत्रये मर्त्यास्त्रिद्व्येकपल्यजीविताः ।

त्रिद्व्येकगव्यूतोच्छ्रायास्त्रिद्व्येकदिनभोजनाः ॥४६॥

कल्पद्रुफलसन्तुष्टाः

त्रीणि द्वे एकं च पल्यं पल्योपमं जीवितं येषां ते तथा। पल्यमिति धान्याधारविशेषः ॥ इह तु तत्प्रतिकृतिरायामविष्कम्भावगाहैर्योजनप्रमाणः प्रदेश उच्यते। स चैकाहिकादिभिः साप्ताहिकपर्यन्तैः केशलेशैः पुनरसंख्यातखण्डीकृतैर्भृतः, उपरि च लोहशकटेनाप्यन्यग्भूतो वर्षशते च गते एकैकवालाग्रापनयने यावता कालेन निर्लेपो भवति, तावान् कालः पल्योपमम्, अद्धापल्योपममित्युच्यते। त्रीणि द्वे एकं च गव्यूतं क्रोशं उच्छ्रायो येषां ते तथा। त्रिषु द्वयोरेकस्मिंश्च दिने गते भोजनं येषां ते तथा। तत्र प्रथमे अरके मर्त्यास्त्रिपल्योपमजीविताः, त्रिगव्यूतोच्छ्रायाः, चतुर्थदिनभोजिनो भवन्ति; द्वितीयेऽरके द्विपल्योपमजीविताः, द्विगव्यूतोच्छ्रायाः, तृतीयदिनभोजिनो भवन्ति; तृतीयेऽरके एकपल्योपमजीविताः, एकगव्यूतोच्छ्रायाः, द्वितीयदिनभोजिनो भवन्तीति यथासंख्यार्थः ॥४६॥ ते च कल्पद्रुमफलैः सन्तुष्टा भवन्ति; कल्पद्रुन्याहरन्तीत्यर्थः ॥

चतुर्थे त्वरके नराः ।

सर्वं मूषति सर्वमूषकः । यदाह–कालः पचति भूतानि कालः संहरते प्रजाः इति ॥ ५ ॥ ४० ॥

कालो द्विविधोऽवसर्पिण्युत्सर्पिणीविभेदतः ।
सागरकोटिकोटीनां विंशत्या स समाप्यते ॥ ४१ ॥

अवसर्पो भावानां पतत्प्रकर्षता, सोऽस्यामस्ति अवसर्पिणी ॥ १ ॥ उत्सर्पो भावानामेव रोहत्प्रकर्षता, सोऽस्यामस्ति उत्सर्पिणी ॥ २ ॥ तयोर्विभेदात्कालस्य द्वैविध्यम् । सागरः सागरोपमं दशकोटीकोटिपल्योपमप्रमाणम्, सागराणां कोटिकोट्यः सागरकोटिकोट्यस्तासां विंशत्या स कालो द्विविधोऽपि परिपूर्यते ॥ ४१ ॥

अवसर्पिण्यां षडरा उत्सर्पिण्यां त एव विपरीताः ।
एवं द्वादशभिररैर्विवर्तते कालचक्रमिदम् ॥ ४२ ॥

षट् षट्संख्याः । इयूति गच्छन्ति अरा वक्ष्यमाणा एकान्तसुषमादय एकान्तदुःषमान्ताः, अवसर्पिण्यां भवन्ति । त एवेति । एकान्तसुषमादयः विपरीता एकान्तदुःषमाद्या एकान्तसुषमान्ताः, उत्सर्पिण्यां भवन्ति । एवमुक्तप्रकारेण द्वादशभिररैश्चक्रमिव चक्रं कालस्य चक्रं कालचक्रं विवर्तते परिभ्रमति ॥ ४२ ॥

तत्रैकान्तसुषमाऽरश्चतस्रः कोटिकोटयः ।
सागराणां

तत्रेति । द्वादशारे कालचक्रे शोभनाः समा वर्षाण्यस्यां सुषमा "निर्दुःसुवेः समसूतेः" ॥२।३।५६॥ इति षत्वम् । एकान्तेन सुषमा दुःषमानुभावरहिता एकान्तसुषमा सुषमसुषमेत्यर्थः प्रथमोऽरः । सागराणां सागरोपमानां चतस्रश्चतुस्संख्याः कोटीनां कोटयो भवन्ति । चतुस्सागरोपमकोटाकोटिप्रमाण इत्यर्थः ॥

सुषमा तु तिस्रस्तत्कोटिकोटयः ॥ ४३ ॥

सुषमाख्यो द्वितीयोऽरः, तिस्रः सागरोपमकोटिकोटयो भवन्ति ॥ ४३ ॥

सुषमदुःषमा ते द्वे

दुष्टाः समा अस्यां दुःषमा सुषमा चासौ दुःषमा च सुषमदुःषमा, सुषमाऽनुभावबहुला अल्पदुःषमानुभावेत्यर्थः । तदाख्यस्तृतीयोऽरः । ते द्वे इति । सागरोपमकोटिकोट्यौ ॥

दुःषमसुषमा पुनः ।

सैका•सहस्रैर्वर्षाणां द्विचत्वारिंशतोनिता ॥४४॥

दुःषमा चासौ सुषमा च दुःषमसुषमा, दुःषमानुभावबहुला; अल्पसुषमानुभावेत्यर्थः । तदाख्यश्चतुर्थोऽरः, सा सागरोपमकोटिकोटी एका एकसंख्या द्विचत्वारिंशद्वर्षसहस्रैरूना ॥४४॥

अथ दुःषमैकविंशतिरब्दसहस्राणि

दुःषमाख्यः पञ्चमोऽरः, एकविंशतिर्वर्षसहस्राणि ॥

तावती तु स्यात् ।

एकान्तदुःषमाऽपि हि

एकान्तेन दुःषमा सुषमानुभावरहिता एकान्तदुःषमा; दुःषमदुःषमेत्यर्थः । तदाख्यः षष्ठोऽरः, तावती दुःषमावदेकविंशतिवर्षसहस्रप्रमाणा ॥

एतत्संख्याः परेऽपि विपरीताः ॥४५॥

एषैव अवसर्पिण्यरकोक्ता संख्या येषां त एतत्संख्याः, परेऽपि उत्सर्पिण्यरका अपि, विपरीताः प्रातिलोमवृत्तयः एकान्तदुःषमाराद्याः एकान्तसुषमारपर्यन्ता भवन्ति ॥४५॥

प्रथमेऽरत्रये मर्त्यास्त्रिद्व्येकपल्यजीविताः ।

त्रिद्व्येकगव्यूतोच्छ्रायास्त्रिद्व्येकदिनभोजनाः ॥४६॥

कल्पद्रुफलसन्तुष्टाः

त्रीणि द्वे एकं च पल्यं पल्योपमं जीवितं येषां ते तथा । पल्यमिति धान्याधारविशेषः ॥ इह तु तत्प्रतिकृतिरायामविष्कम्भावगाहैर्योजनप्रमाणः प्रदेश उच्यते । स चैकाहिकादिभिः साप्ताहिकपर्यन्तैः केशलेशैः पुनरसंख्यातखण्डीकृतैर्भृतः, उपरि च लोहशकटेनाप्यन्यगभूतो वर्षशते च गते एकैकवालाग्रापनयने यावता कालेन निर्लेपो भवति, तावान् कालः पल्योपमम्, अद्धापल्योपममित्युच्यते । त्रीणि द्वे एकं च गव्यूतं क्रोशं उच्छ्रायो येषां ते तथा । त्रिषु द्वयोरेकस्मिंश्च दिने गते भोजनं येषां ते तथा । तत्र प्रथमे अरके मर्त्यास्त्रिपल्योपमजीविताः, त्रिगव्यूतोच्छ्रायाः, चतुर्थदिनभोजिनो भवन्ति; द्वितीयेऽरके द्विपल्योपमजीविताः, द्विगव्यूतोच्छ्रायाः, तृतीयदिनभोजिनो भवन्ति; तृतीयेऽरके एकपल्योपमजीविताः, एकगव्यूतोच्छ्रायाः, द्वितीयदिनभोजिनो भवन्तीति यथासंख्यार्थः ॥४६॥ ते च कल्पद्रुमफलैः सन्तुष्टा भवन्ति; कल्पद्रुमफलान्याहरन्तीत्यर्थः ॥

चतुर्थे त्वरके नराः ।

पूर्वकोट्यायुषः पञ्चधनुःशतसमुच्छ्रयाः ॥४७॥

वर्षाणां सप्ततिः कोटिलक्षा षट्पञ्चाशच्च वर्षकोटिसहस्राः पूर्वम्, तत्कोट्यायुष इति ॥ ४७ ॥

पञ्चमे तु वर्षशतायुषः सप्तकरोच्छ्रयाः ।

षष्ठे पुनः षोडशाब्दायुषो हस्तसमुच्छ्रयाः ॥४८॥

एकान्तदुःखप्रचिता उत्सर्पिण्यामपीदृशाः ।

पश्चानुपूर्व्या विज्ञेया अरेषु किल षट्स्वपि ॥४९॥

स्पष्टौ ॥४८॥४९॥

अष्टादश निमेषाः[1] स्युः काष्ठा

निमेषोऽक्षिस्पन्दकालः, काशते काष्ठा "वनिकणिकाश्युषिभ्यष्ठः" ॥ (उणा १६२) ॥ इति ठः ॥

काष्ठाद्वयं लवः ।

लुनाति परिच्छिनत्ति कालमिति लवः ॥

कला तैः पञ्चदशभिः

तैर्लवैः कलयति कालं कला ॥

लेशस्तद्द्वितयेन च ॥५०॥

लिश्यतेऽल्पीभवति लेशः, तस्याः कलाया द्वितयेन तद्द्वितयेन ॥५०॥

क्षणस्तैः पञ्चदशभिः

क्षणोति क्षणः, तैर्लेशैः ॥

क्षणैः षड्भिस्तु[2] नाडिका ।

सा धारिका घटिका च

णल गन्धे, नलति गन्धयति अर्दति नाली, ज्वलादित्वात् णः, नाल्येव नालिका डलयोरैक्ये नाडिका । नडण् अवस्कन्दने, इत्यस्य नाडीति नन्दी ॥१॥ सा नाडिका धारयति कालं धारिका ॥२॥ घटयति कालं घटिका चोच्यते ॥३॥

मुहूर्तस्तद्द्वयेन च ॥५१॥

हूर्च्छति मुहूर्तः, पुंक्लीबलिङ्गः । "पुतपित्त-" ॥ (उणा-२०४) ॥ इति तान्तं निपात्यते, मुहुरियर्त्ति वा, पृषोदरादित्वात् । तयोर्घटिकयोर्द्वयेन तद्द्वयेन ॥५१॥

त्रिंशता तैरहोरात्रः

(१) निमेषास्तु इत्यपि । (२) षड्भिश्चेत्यपि ।

तैर्मुहूर्तैः, अहश्च रात्रिश्च अहोरात्रः, पुंक्लीबलिङ्गः । "ऋक्सामर्ग्यजुष-" ॥ ७ । ३ । ९७ ॥ इति द्वन्द्वे अदन्तो निपात्यते ॥

**तत्राहार्दिवसो दिनम् ।**

**दिवं द्युर्वासरो घस्रः**

तत्रेति । अहोरात्रमध्ये, अंहते गच्छति अहः । "श्वन्मातरिश्वन्-" ॥ (उणा-९०२) ॥ इत्यन्नन्तो निपात्यते ॥१॥ दीव्यत्यत्रादित्य इति दिवसः "दिवादिरभिलभ्युरिभ्यः किच्" ॥ (उणा-५७२) ॥ इत्यसः ॥२॥ दीव्यति रविरत्र, द्यति तम इति वा दिनम्, पुंक्लीबलिङ्गौ । "दिननग्न-" (उणा-२६८) ॥ इति नान्तौ निपात्यते ॥ ३ ॥ दीव्यन्त्यत्र लोका दिवम् ॥ ४ ॥ द्योति गच्छति द्युः, पुंलिङ्गः । "द्युद्रुभ्याम्" (उणा-७४४) ॥ इति डुः ॥५॥ वासयति रविं वासरः, पुंक्लीबलिङ्गः । "ऋच्छिचटि-" (उणा-३९७) ॥ इत्यरः ॥ ६ ॥ घसत्यत्ति तमो घस्रः ॥ ७ ॥ दिवा अव्ययम् ॥

**प्रभातं स्यादहर्मुखम् ॥९२॥**

**व्युष्टं विभातं प्रत्यूषं कल्यप्रत्युषसी उषः ।**

**काल्यं**

भातुं प्रवृत्तं प्रभातम् । "आरम्भे" ॥५।१।१०॥ इति क्तः ॥१॥ अह्नो मुखमारम्भः अहर्मुखम् ॥ २ ॥५२॥ विशेषेण उष्यतेऽतिक्रम्यते व्युष्टम् । "ज्ञानेच्छा-" ॥ ५।२।९२ ॥ इत्यादिना क्तः ॥ ३ ॥ विभातुं प्रवृत्तं विभातम् ॥४॥ प्रत्यूहति निशा रुजति प्रत्यूषम्, पुंक्लीबलिङ्गः ॥५॥ कलासु साधु कल्यम् ॥ ६ ॥ प्रत्योषत्यर्ककरैः प्रत्युषः "मिथिरञ्ज्युषि-" ॥ (उणा-९७१) ॥ इत्यस् ॥ ७ ॥ एवमुषः ॥ ८ ॥ प्राप्तः कालोऽस्य काल्यम् । "कालाद्यः" ॥६।४।१२६॥ इति यः, काले साध्विति वा ॥ ९ ॥ शेषश्चात्र—व्युष्टे निशात्ययगोसर्गौ ॥ प्रातः, प्रगे, प्राह्णे, पूर्वेद्युश्चाव्ययानि । गोसो देश्याम्; संस्कृते ऽप्येके ॥

**मध्याह्नस्तु दिवामध्यं मध्यन्दिनं च सः ॥९३॥**

अह्नो मध्यं मध्याह्नः, "सर्वांशसंख्याऽव्ययात्" ॥ ७।३।११८ ॥ इति अट्, अह्नादेशश्च ॥ १ ॥ दिवा अह्नो मध्यं दिवामध्यम् ॥२॥ दिनस्य मध्यं मध्यन्दिनम् । "लोकम्पृण-" ॥ ३।२।११३ ॥ इत्यादिना निपात्यते ॥ ३॥५३ ॥

**दिनावसानमुत्सूरो विकालसबली अपि ।**

**सायं**

दिनावसानं दिनान्तः ॥ १ ॥ उत्क्रान्तः सूरोऽस्मिन्नुत्सूरः ॥ २ ॥ विरुद्धः कालो विकालः ॥३॥ सह बलिभिरुपहारैर्वर्तते सबलिः, पुंलिङ्गः ॥ ४ ॥ स्यति दिनं सायं, क्लीबलिङ्गः ॥ गौडस्तु-उत्सूरश्च विकालश्च सायश्च सबलिश्च स इति पुंस्याह । "स्याच्छामासा-" ( उणा ३५७ ) ॥ इत्यादिना यः ॥ ५ ॥ तथा सायमव्ययम् ॥

सन्ध्या तु पितृसूः

संध्यायन्त्यस्यां सन्ध्या, सज्यते सन्धीयेते अहोरात्रावस्यामिति वा "सञ्जे-र्धं च ॥ ( उणा–३५९ ) ॥ इति यः ॥ १ ॥ पितॄन् सूते पितृसूः । ब्रह्मणो ह्येषा पितृप्रसवित्री तनुरिति प्रसिद्धिः ॥ २ ॥

त्रिसन्ध्यं तूपवैणवम् ॥५४॥

तिस्रः सन्ध्याः प्राह्णमध्याह्नापराह्णलक्षणाः समाहृतास्त्रिसन्ध्यम् ॥ १ ॥ उप समीपे वैणवो व्रतदण्डो यत्र तदुपवैणवम् ॥ २ ॥ ५४ ॥

श्राद्धकालस्तु कुतपोऽष्टमो भागो दिनस्य यः ।

श्राद्धं पितृकर्म तस्य कालः श्राद्धकालः ॥१॥ कुतिः सौत्रः कोतन्ति गच्छन्ति प्रीतिं पितरोऽस्मिन् कुतपः, पुंक्लीबलिङ्गः । " भुजकुति– ॥ ( उणा–३०५ ) ॥ इत्यादिना अपः कित्; कुं तपति सूर्योऽत्रेति वा । यो दिनस्याष्टमो भागः स कुतप इत्यर्थः । यत्स्मृतिः–

दिवसस्याष्टमे भागे मन्दीभवति भास्करे ।
स कालः कुतपो यत्र पितॄणां दत्तमक्षयम् ॥१॥२॥

निशा निशीथिनी रात्रिः शर्वरी क्षणदा क्षपा ॥५५॥
त्रियामा यामिनी भौती तमी तमा विभावरी ।
रजनी वसतिः श्यामा वासतेयी तमस्विनी ॥५६॥
उषा दोषेन्दुकान्ता

निश्यति तनूकरोति चेष्टा निशा । उपसर्गादातो डोऽश्यः " ॥ ५।१।५६ ॥ इति डः । निशान्ति समाहितमनस्का भवन्ति अस्यामिति वा स्थादित्वात्कः ॥ १ ॥ निशीथोऽस्त्यस्यां निशीथिनी ॥२॥ राति सुखं रात्रिः "राशदि"– ॥ (उणा–६९६) इत्यादिना त्रिः, ङ्यां रात्री च ॥ ३ ॥ शृणाति चेष्टाः शर्वरी, वनि "ण्स्वराघोषाद्व-नो रश्च" ॥ २।४।४ ॥ इति ङीः ॥ ४ ॥ क्षणमवसरं ददाति क्षणदा, विश्रान्तिप्रदे-त्यर्थः ॥५॥ क्षिप्यते क्षपा, भिदाद्यङ् ॥६॥५५॥ त्रयो यामा यस्यां त्रियामा, आद्य-न्तयोरर्द्धयामयोर्दिनव्यवहारात् ॥ ७ ॥ यामाः सन्त्यस्यां यामिनी । यौगिकत्वाद्याम-वतीत्यपि ॥ ८ ॥ भूतानामियं भौती, रात्रिंचरत्वात्तेषाम् ॥ ९ ॥ ताम्यन्ति चक्र-

प्राप्नोत्येव हि सर्व एव भुवने कर्मानुरूपं फलम् ॥ ३५२ ॥
योऽवेन् पञ्चमहाव्रतीं च निरतीचारां यथावस्थितां
दिव्यर्द्धिं स तु रक्षितावदनघः प्राप्नोति कीर्त्या समम् ।
यो वा पालयति स्वयं हितधिया दत्ते परेभ्योऽपि यः
सौख्यानां किल रोहिणीव स इहामुत्रापि पात्रं भवेत् ॥३५३॥
दृष्टान्तो भरते भविष्यति महावीरस्य तीर्थे परं
सिद्धान्तादधिगम्य संप्रति मयाऽऽख्यातस्तवायं मुने ! ।
तत् त्वं धर्मपरां वधूमनुहरेस्तुर्यामवार्योदया-
मित्यादिश्य कथां यथार्थरुचिरां मौनं मुनीशोऽकृत ॥ ३५४ ॥
सोऽथ श्रीजितशत्रुसाधुतिलकस्तप्त्वा तपो दुष्करं
गत्वा ग्रामवर्तीय मानुषभवे निर्वाणमाप क्रमात् ।
इत्याख्याय कथाप्रपञ्चममृताऽऽत्रक्ष्मापमुख्यावनी-
शक्राणामथ देशनामशमयत् क्षेमङ्करस्तीर्थकृत् ॥ ३५५ ॥
इत्थं तीर्थकृतो निपीय सरसं धर्मोपदेशामृतं
संसारस्थितिबाधनं त्रिजगतां कल्याणसंसाधनम् ।
नत्वा भक्तिपुरस्सरं जिनपतेः पादारविन्दद्वयं
स्वं स्वं धाम विसारिधामविसरा वज्रायुधाद्या ययुः ॥३५६॥
आसीत् श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुश्चारित्रभाजां गुरुः ।
तच्छिष्येण विनिर्मितेऽत्र दशमः श्रीशान्तिवृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गो विशालो ययौ ॥ ३५७ ॥

॥ इति श्रीशान्तिनाथचरिते दशमः सर्गः ॥

---

अर्हम्

## अथ एकादशः सर्गः ।

यत्रैव संवेदनतारतम्यं विश्रान्तिमापत् किल तारतम्यात् ।
व्योम्नीव मानाश्रिततारतम्यं शान्तिप्रभुर्वः स मुदं सनोतु ॥ १ ॥
चक्रप्रभावेण महोदयेन राड् वार्द्धितोऽथास्त्रगृहाधिपेन ।

वज्रायुधोऽभ्यर्चनमाचचार चक्रस्य शक्रस्य बलानि जिष्णुः ॥ २ ॥
अन्यानि रत्नान्यपि तस्य सेनान्यादीन्यभूवन् भुवनेश्वरस्य ।
पुण्ये समाक्रामति विस्तरं हि किं किं न सान्निध्यमुपैति पुंसाम् ?॥३॥
धातोरिव प्राग्नुपसर्गवर्गश्चक्रस्य पश्चात् स चलन् बभासे ।
षट्खण्डिके चक्रयपि मङ्गलावत्याख्ये सशैलं विजयं जिगाय ॥ ४ ॥
छायां जयन्तं कुसुमायुधस्य पुत्रं सहस्रायुधमिद्धबुद्धिम् ।
न्यस्योग्रशौर्य्यं स च यौवराज्ये भुङ्क्ते स्म सौख्यानि निरन्तरायम् ॥५॥
अन्येद्युरास्थानमलञ्चकार चक्री महीन्द्रैः परितः परीतः ।
शक्रः सुधर्मामिव रत्नभूषादीप्रप्रभानिर्मथितान्धकारः ॥ ६ ॥
व्योम्नस्तदा कश्चन कम्पमानक्षेत्रो भृशं व्योमचरो युवैकः ।
वज्रायुधं तं शरणं जगाम, केषां महान्तः शरणं न वा स्युः ? ॥ ७ ॥
आगात तस्यानुपदं पदार्हा काचिच्च विद्याधरवल्लभैका ।
देवाङ्गनेवाद्भुतरूपधेया बिभ्रत्यसिं खेटकमुत्कटं च ॥ ८ ॥
एकस्तु विद्याधरवंशकेतुर्विद्याधरस्तामनु चाजगाम ।
बिभ्रद् गदां वैरिबलावलेपप्रध्वंसने विश्वकृतप्रतीतिम् ॥ ९ ॥
तं स्त्री बभाषे नृपमौलिमौले! दुष्टं निकृष्टं विसृज त्वमेतम् ।
दुर्न्यायशाखिप्रभवं यथाऽस्य प्रादुष्करोमि प्रसभं फलं च ॥ १० ॥
विद्याधरः स्माह च सार्वभौममाकर्ण्यतामस्य सकर्ण ! वृत्तम् ।
एषाऽप्यहं येन निहन्तुमेतं हन्ताऽऽगमाव द्विषतां निहन्तः ! ॥ ११ ॥
अस्यान्तरीपस्य विदेहकेषु श्रीवल्लिकच्छे विजये सुकच्छे ।
वैताढ्यशैले परिमुक्तशुल्कं नाम्ना पुरं शुक्लपुरं समस्ति ॥ १२ ॥
तत्रैव विद्याधरनायकोऽभूत् श्रीशुक्लदत्तः प्रसृतप्रतापः ।
प्राणप्रिया तस्य यशोधराख्या देवी सदौचित्ययशोधरार्हा ॥ १३ ॥
तन्नन्दनोऽहं पवनप्रभाख्यः सन्मानसानन्दनबुद्धिसीमा ।
अभ्यस्तनिःशेषकलाकलापस्तारुण्यमासादितवानितश्च ॥ १४ ॥
तत्रैव शैले जिनसद्मरम्येऽभूदुत्तरश्रेणिललामभूते ।
क्ष्मापः पुरे किन्नरगीतनाम्नि विद्याधरेन्द्रः किल दीप्तिचूलः ॥ १५ ॥
विद्याधरीचित्रकचन्द्रकीर्तिकुक्षिप्रसूतां रतिरम्यरूपाम् ।
तस्याङ्गजां पर्यणयं कलाभिः कान्तां सुकान्तामभिधानतोऽपि ॥ १६ ॥

तत्कुक्षिजाता मम पुत्रिकेयं शीलोज्ज्वला शान्तिमती मतीद्धा ।
युष्मत्पुरो याऽस्ति निरस्तदोषा दोषाकराऽऽस्या करजेयपद्मा ॥ १७ ॥
प्रज्ञप्तिसंज्ञामपरेगुरेषाऽभून् साधयन्ती यतिनेव विद्याम् ।
स्थाने मणीनां मणिसागराद्रौ विद्याधरत्वं कथमन्यथा स्यात् ? ॥१८॥
आलोक्य विद्याधरपाश एष एतां तथाभूतसमाधिभावाम् ।
व्योमन्युदासाऽऽस तदेव चास्या विद्याप्रसिद्धिः मुक्तनाऽनुभावात् ॥१९॥
अस्या अयं किश्चन कान्दिशीको भ्राम्यंस्ततो निर्गमितार्थवञ्च ।
आयातवांस्त्वच्चरणारविन्दच्छायां शरण्यावनिपालतात ! ॥ २० ॥
प्रज्ञप्तिपूजारचनाय विज्ञ ! प्राग्वत् ममादाय बलिं जगाम ।
तस्मिन् महीध्रे तु निजाङ्गजां तां नाद्राक्षमक्षुद्रचरित्रचित्राम् ॥ २१ ॥
आभोगिनीसंगवशादवेत्य वृत्तान्तमेतं सविधं तवाऽऽगाम ।
न्यायोपदंष्ट्रः ! तदमुं च मुञ्च दुष्टत्वमेतस्य यथा हरामि ॥ २२ ॥
वज्रायुधश्चक्रधरधर्वबुद्धया सर्वं तदीयं चरितं बभाण ।
विद्याधराधीश्वर ! पूर्वजन्मप्रेमाऽस्य पुत्र्यां भवतस्तथाहि ॥ २३ ॥
जम्बूमहाद्वीपकमध्यवर्तिक्षेत्रोत्तमैरावतमध्यभागे ।
आसीत् पुरे विन्ध्यपुरे धरेन्द्रः श्रीविन्ध्यदत्तोऽवधिर्ऋद्धिभाजाम् ॥२४॥
तत्प्रेयसी लक्षणलक्षिताङ्गी कृत्येषु दक्षाऽऽस सुलक्षणाख्या ।
पुत्रस्तयोस्तर्जितमीनकेतुः स्वाङ्गश्रियाऽभून्नलिनादिकेतुः ॥२५ ॥
तस्मिन् पुरेऽजायत धर्ममित्रः सन् सार्थवाहो भुवनैकमित्रम् ।
श्रीदत्तया तत्प्रियया प्रसूतस्तस्याङ्गभूर्दत्त इति प्रसिद्धः ॥ २६ ॥
प्रभङ्करी तस्य बभूव जाया निर्धूतमाया कनकाभकाया ।
प्रालेयभूमीधरपुत्रिकाऽसौ संभाव्यते यद्भगिनीव दृष्टा ॥ २७ ॥
अन्येद्युरुद्यानमियाय सार्द्धं वध्वा वसन्तेन विभूषितं सः ।
उच्चैरधिष्ठाय रथं निधीशः सूनुर्यथा चैत्ररथं रथीनः ॥ २८ ॥
राज्ञः कुमारोऽपि वने तदानीं तत्र प्रयातः सुभगत्वमारः ।
दत्तस्य जायां समवेक्ष्य जज्ञे मारेषुलक्ष्यं विकसद्विकारः ॥ २९ ॥
एषा मृगाक्षी यदि मानुषी स्यात्तन्मानुषत्वं धिषणाधनानाम् ।
लोकेषु सर्वेषु विवर्णनीयं यन्नेदृशी लोकयुगे श्रुताऽस्ति ॥ ३० ॥
लावण्यसम्बन्धसमन्वितं तत् सौभाग्यमस्या न करोति कस्य ? ।

लोकोत्तरं भोज्यमिवोपनीतं नानारसैरङ्गरुचिं जनस्य ॥ ३१ ॥
इत्यादि तद्वर्णनमादधानः सौभाग्यमाणिक्यनिदानभूताम् ।
कन्दर्पसद्माऽरमपाहरत् तां दर्पं भजन् स्वौजसि राजसूः सः ॥ ३२ ॥
उद्यानलेखासु मनोहरासु गम्भीरभूमीधरकन्दरासु ।
दौगन्दुकामर्त्य इवाविरामं चिक्रीड सार्द्धं स तया कुमारः ॥ ३३ ॥
हा प्रेमशाले ! दयिते ! क्व चासि क्वासीति बाढं विलपन् समन्तात् ।
बभ्राम तद्रूपमवेक्षमाणस्तादृग् वियोगो न दुनोति कं वा ? ॥३४॥
बम्भ्रम्यमाणेन जवेन तेन दत्तेन कुत्रापि वने मुनीन्द्रः ।
आलोकि देवैरभिवन्द्यमानः स ज्ञानयोगात् सुमनोऽभिधानः ॥ ३५ ॥
दत्तोऽपि तत्पादसरोजयुग्मे भृङ्गायमाणः श्रुतवागऽतापः ।
दानं समाराध्य चिरं स्वमायुः शेषं व्यतीयाय समाधिनिष्ठः ॥ ३६ ॥
आकर्णयेतश्च नभःप्रचार ! प्राच्ये विदेहे विजये सुकच्छे ।
वैताढ्यशैलेऽस्ति पुरं सुवर्णपूर्वं प्रसिद्धं तिलकं समृद्धम् ॥ ३७ ॥
तत्राभवद् विक्रमनामधेयो विद्याधरेन्द्रः स महेन्द्रपूर्वः ।
यद्विक्रमं वीक्ष्य परं महेन्द्रः स्वाराज्यदम्भादभजद् विदेशम् ॥ ३८ ॥
देवी तदीयाऽनिलवेगिकेति सौन्दर्यलक्ष्म्या रतिरेव जज्ञे ।
तत्पुत्रतामाप स दत्तजीवः संसिद्धविद्योऽजितसेननामा ॥ ३९ ॥
याते दिवं विन्ध्यपुराधिनाथे श्रीविन्ध्यदत्तेऽथ तदीयपुत्रः ।
राजा नयज्ञो नलिनो बभूव श्रीवासभावाद् नलिनं विधुन्वन् ॥ ४० ॥
प्रासादमन्येद्युरुदारचेता देव्या सहाऽऽरोहदरोहदंहाः ।
धाराधरं शृङ्गमतीव तुङ्गं धाराधरश्चञ्चलया यथाऽमा ॥ ४१ ॥
व्योम्न्यञ्जनाद्रीनिव लब्धवृद्धीन् सान्द्रान्धकारानिव निर्विपक्षान् ।
शम्पासमालिङ्गितसन्निवेशानुदामवास्तोष्पतिचापभाजः ॥ ४२ ॥
अत्यूर्जितं गर्जितमादधानान् स्निग्धाञ्जनश्यामगजानिवाऽयम् ।
आकस्मिकाभ्युन्नतवारिवाहान् दृष्ट्वा महीन्द्रो मुमुदे हृदन्तः ॥ ४३ ॥
( युग्मम् )
तांश्च क्षणादुद्धतमारुतेन वित्रास्यमानानिव तूलपूलान् ।
प्रत्याऽऽसमालोकयति स्म राजा दुर्दैवपाशैरिव नुद्यमानान् ॥ ४४ ॥
धाराधरांस्तान् क्षणमात्रतोऽपि जातान् विपन्नांश्च विलोक्य सम्यक् ।

दध्यौ ततोऽसौ नलिनः क्षितीशो नीरन्ध्रवैराग्यसमृद्ध एवम् ॥ ४५ ॥
एषां यथोत्पत्तिरहो ! विपत्तिर्जाता क्षणादेव पयोधराणाम् ।
अस्याप्यसारस्य तथाविसारिसंसारिवर्गस्य विचारितस्य ॥ ४६ ॥
एतेन समस्तं क्षणदृष्टनष्टं सौदामनीदामवदीक्ष्यमाणम् ।
ध्यात्वा सुपुत्रे विनिवेश्य राज्यं क्षेमङ्करान्ते व्रतमाददे सः ॥ ४७ ॥
एकावलीमुख्यतपोविधानैर्निर्माय कर्माण्यपुनर्भवानि ।
संप्राप्य विज्ञानमनन्तभावं प्रापत् पदं नित्यमनन्तसौख्यम् ॥ ४८ ॥
प्राभङ्करी साऽपि ऋजुस्वभावा श्रीसुव्रतार्यापदपद्मपार्श्वे ।
चान्द्रायणं नाम तपो वितन्द्रा चन्द्रावदाता विदधे विधिज्ञा ॥ ४९ ॥
सम्यक्त्वसम्बन्धमृतेऽपि सापि काले समासादितकालधर्मा ।
साम्याश्रिता तत्तपसो महिम्ना जज्ञे सुता शान्तिमती तवेयम् ॥ ५० ॥
एतेन तेनाऽजितसेनकेन प्राग्जन्मसद्दर्तिविमोहितेन ।
एषाऽभ्युदक्षेऽपि तदत्र किं ते रोषो मनःशोषणपोषणाय ? ॥ ५१ ॥
तस्मात् कषायप्रचयाऽनुबन्धमेतं परित्यज्य परं दुरन्तम् ।
अन्योऽन्यमेव क्षमयध्वमङ्ग ! यस्माद् भवस्यैव निदानमेषः ॥ ५२ ॥
इत्युक्तिसंबोधवशात् सुसत्त्वास्ते त्यक्तवैराः क्षमयाम्बभूवुः ।
अन्योन्यमासन्नमहोदयाशा नैवोपदेशा महतां मुधा स्युः ॥ ५३ ॥
प्रोवाच भूपोऽपि स सार्वभौमः क्षेमंकरार्हत्सविधेऽचिरेण ।
दीक्षा त्रयाणामपि वो भवित्री दुष्कर्मकक्षोषणजातवेदाः ॥ ५४ ॥
रत्नावलिं नाम तपो विधाय शान्ताशया शान्तिमती ततोऽसौ ।
प्राणान् विहायाऽनशनेन लब्धेशानेन्द्ररूपत्वमुदीर्णभोगा ॥ ५५ ॥
मत्वाऽथ विज्ञानवशात् तदैव स्वं केवलज्ञानविभासिनोऽर्चाम् ।
मानाऽनुरूपं महिमानमादावागत्य निर्मास्यति चाङ्गपूजाम् ॥ ५६ ॥
ईशानदेवाधिपतिस्ततश्च च्युत्वा समासाद्य परं नरत्वम् ।
सर्वार्थसाक्षात्कृतिसंविदं च कैवल्यमाप्स्यत्यपि स क्रमेण ॥ ५७ ॥
कालत्रयोद्बोधविबोधशुद्धं वज्रायुधस्योक्तमिदं निशम्य ।
सर्वेऽपि ते सभ्यजनैः सहैव विस्मेरतामापुरपेतदर्पाः ॥ ५८ ॥
तेऽपि त्रयोऽपि प्रणिपत्य भक्त्या तं सार्वभौमं बहुधा प्रशस्य ।
आपृच्छ्य गत्वा जगृहुर्जिनेन्द्रक्षेमङ्करान्ते व्रतमेकचित्ताः ॥ ५९ ॥

शाणासमुत्तीर्णकृपाणधारादेश्यं व्रतं ते चिरमाचरंश्च ।
मृत्वा क्रमाच्छान्तिमती शुभा तेष्वीशानदेवाऽधिपतित्वमाप ॥ ६० ॥

विद्याधरर्षी च बभूवतुस्तावध्वंसविज्ञानयुजौ तदैव ।
ईशानजिष्णुः स दिवः समेत्य तज्ज्ञानपूजां स्वतनोश्च चक्रे ॥ ६१ ॥

च्युत्वा द्वितीयत्रिदिवात् क्रमेण सम्प्राप्य मर्त्यत्वमनुत्तमं सः ।
सिद्धस्य लक्ष्मीमवहद् महात्मा तस्मिन् भवे तौ तु मुनी विमुक्तौ ॥६२॥

सूनौ सहस्रायुधनाम्नि चक्री क्ष्माभारमारोप्य सुखं बभाज ।
प्राकाम्यमव्याहतमङ्गजानां पुण्यात्मनां पुण्यवशेन यस्मात् ॥ ६३ ॥

श्रीमत्सहस्रायुधवल्लभाऽथ सुप्ता रजन्यां जयनाऽभिधाना ।
स्वप्ने समालोकत हेमशक्तिं कान्त्या समुद्द्योतितखप्रदेशाम् ॥ ६४ ॥

स्वप्नानुभावेन निवेदितेन भर्त्रा सहस्रायुधवल्लभा सा ।
गर्भं बभार प्रवरं तदैव स्वप्नात् सुपुण्यात् किमु दुर्घटं स्यात् ? ॥ ६५ ॥

स्फूर्जद्गुणश्रेणिविभासमानं विश्वम्भरानायकभूषणार्हम् ।
मुक्ताफलं शुक्तिरिवाऽथ काले साऽजीजनत् सूनुमनूनरूपम् ॥ ६६ ॥

तस्याऽऽदधे नाम च हेमशक्तिस्वप्नाऽनुसारेण पितामहेन ।
ख्यातेन राज्ञामपि हेमशक्तिरित्यार्यभूमीन्द्रपितामहेन ॥ ६७ ॥

उत्क्रान्तबाल्यो लिपिचक्रविद्यापारङ्गमो यौवनसङ्गचङ्गः ।
कन्यां महामन्दिरपत्तनेशश्रीमेरुमालिक्षितिपालकस्य ॥ ६८ ॥

मल्लाप्रियाकुक्षिभवां भवानीरूपामुपायंस्त स शस्तबुद्धिः ।
विद्यागृहं यौवनशालिकायां नाम्नाऽङ्गकान्त्याऽपि च हेममालाम् ॥ ६९ ॥

(युग्मम्)

किञ्चाऽजनिष्टाऽत्र मशक्यसारद्रङ्गे महेन्द्रोऽजितसेननामा ।
तस्य प्रियाऽभूत् प्रियसेनिकाख्या पुत्री तयोरास वसन्तसेना ॥ ७० ॥

तां यौवनोद्भेदविशेषकान्तां तातः समीक्ष्य प्रजिघाय मङ्क्षु ।
श्रीहेमशक्तेरनुरूपरूपां सौभाग्यभाग्यैकपतिंवरां च ॥ ७१ ॥

तां पर्यणैषीज्जनकाऽनुमत्या श्रीमान् सहस्रायुधराजसूनुः ।
एतद्विवाहाद् विततान रोषं तस्याः पितुर्जामिसुतो दुरात्मा ॥ ७२ ॥

आराममन्येद्युरधिष्ठितेन क्रीडा विचित्रा अनुतिष्ठता नां ।

---

१ पुरुषः ।

उत्पातपातौ विदधद् व्यलोकि कश्चित् सहस्रायुधनन्दनेन ॥ ७३ ॥
प्रोचे कुमारस्तमहो ! किमेवमुत्पत्य शक्तो निपतस्यकस्मात् ? ।
त्वं भद्रपक्षीव विलूनपक्षो नाऽगोप्यमेतद्यदि मे तदाऽऽख्य ॥ ७४ ॥
प्रत्याह ना सोऽपि भवादृशानां नाख्येयमप्यस्ति किमङ्ग ! धीमन् ! ।
युष्मादृशः सन्ति परेङ्गितज्ञास्तेष्वेव गोप्यं जडतां व्यनक्ति ॥ ७५ ॥
वैताढ्यशैलात् क्वचनाऽपि कार्ये विद्याधरोऽहं पुरतोऽपि गत्वा ।
व्यावर्त्तमानोऽतिकुतूहलेनोद्यानेऽत्र तस्थौ क्षणमद्भुतेन ॥ ७६ ॥
एतस्य सौन्दर्यमदृष्टपूर्वं दृष्ट्वा निवृत्तोऽहमितोऽपि यावत् ।
तावद् ममाप्यम्बरयानसिद्धविद्यापदं विस्मृतमात्मपापात् ॥ ७७ ॥
उत्पातपातद्वितयेन तेन प्रद्युम्नमूर्त्ते ! निबिडं विडम्ब्ये ।
एतत् तदुक्तं विनिशम्य सम्यग् भूयः कुमारोऽभिदधे तमेवम् ॥ ७८ ॥
विद्याधरेयं यदि नाम विद्याऽन्यस्याग्रतस्ते पठनोचिताऽस्ति ।
तत् पठ्यतां शाठ्यमपास्य मेऽग्र इत्युक्त एषोऽपि तमभ्यधत्त ॥ ७९ ॥
विद्या न विद्याकर ! पठ्यतेऽसौ पापात्मनामग्रत एव पुंसाम् ।
युष्मादृशानां तु नरोत्तमानां देया ततः किं नु निवेद्यते न ? ॥ ८० ॥
तां विस्मृतान्यैकपदामथास्मै विद्याधरः स प्रयतो बभाषे ।
भूमीन्द्रपुत्रोऽपि पदानुसारिबुद्ध्या पदं विस्मृतमाविरधात् ॥ ८१ ॥
सर्वाममौ प्राप्य ततोऽतिहृद्यां विद्यां तु विद्याधर आदरेण ।
तामेव तस्मै वितताार दक्षो यद्दक्षिणामर्हति नाऽपरां सः ॥ ८२ ॥
विद्याधरे जग्मुषि तत्र नप्ता वज्रायुधस्यापि यथाविधानम् ।
विद्यामनिन्द्यामथ साधयित्वा विद्याधराग्रेसरतां बभार ॥ ८३ ॥
क्रुद्धस्तदा सोऽपि वसन्तसेनाबीजिस्वसुः सूनुरृते निमित्तम् ।
तस्मिन् कुमारे किल हेमशक्तावेणौ मृगाधीश इवाऽभिमानात् ॥ ८४ ॥
तस्यापकारं करणीयरूपं निर्मातुमेवाऽप्रभुरात्तलज्जः ।
त्यक्ताशनो मृत्युमवाप्य देवो दिव्यर्द्धिरासीद्धिमचूलनामा ॥ ८५ ॥
( युग्मम् )
ताभ्यां प्रियाभ्यां सममासमुद्रं क्ष्माचक्रवालं विचरन् समस्तम् ।
संसिद्धविद्यो भ्रमति स्म सोऽपि श्रीमत्सहस्रायुधराजसूनुः ॥ ८६ ॥
यातोऽपरेद्युर्हिमवन्महीध्रे दृष्ट्वाऽभ्यवन्दिष्ट मुनिं निरीहम् ।

धर्मं दिशन्तं विपुलादिमत्याख्यं चारणं पापनिवारणं सः ॥ ८७ ॥
तस्मात् समासाद्य च धर्मलाभं संसारकक्षोपद्रवानलाभम् ।
सार्धं प्रियाभ्यां सुकृतोपदेशं शुश्राव स श्रावकवर्गनागः ॥ ८८ ॥
बुद्धः प्रबुद्धः स च हेमशक्तिर्देवीद्वयं तत् प्रविहाय तादृक् ।
तादृग्महर्द्धिं च तदंह्रिमूले चारित्रमादत्त विरक्तचित्तः ॥ ८९ ॥
सत्यः स्वपत्युः स्थितिमाचरन्तीत्येवं स्वचित्ते परिभाव्य दीक्षा ।
तत्प्रेयसीभ्यामपि तन्मुनीन्द्राभिख्यार्यिकायाः सविधेऽभ्युपेता ॥ ९० ॥
अन्येद्युराचार्युतो धरित्र्यां कुर्वन् विहारं मुनिहेमशक्तिः ।
भेजे गिरौ सिद्धिपदे मुदैकरात्रिप्रमाणां प्रतिमां क्षमावान् ॥ ९१ ॥
एतं समालोक्य समाधिभाजं देवाधमः पूर्वभवद्विषन् सः ।
आरादुपद्रोतुमढौकताऽरं पद्माकरं वाजिरिपुर्यथैव ॥ ९२ ॥
तत्राऽऽगता व्योमचराः सलीलं दृष्ट्वा महात्मानमुपद्रवन्तम् ।
शक्त्या दुरात्मानमनीनशंस्तं नैदाघदाघं जलदा इवाऽऽशु ॥ ९३ ॥
प्रत्यूषकाले परिपूर्णयित्वा स्वाभिग्रहं कुग्रहनिग्रहेण ।
तां राजधानीं स्वपितामहस्य धन्यो ययौ सोऽपि विहारवृत्त्या ॥९४॥
तस्यां वने शूरनिपातसंज्ञे वासं मुनिः पूर्ववदाऽऽचचार ।
बाधाचिकीर्षुस्तत्र सुराधमोऽपि भूयः समागादविमुक्तवैरः ॥ ९५ ॥
ज्ञानं तदापाऽप्रतिपाति साधुस्तत्पूजनाय त्रिदशाः समेयुः ।
तेभ्यः स भीतस्त्रिदशाधमोऽपि पादांस्तदीयान् शरणं जगाम ॥ ९६ ॥
वज्रायुधोऽप्यस्य मुनेः प्रभावं श्रुत्वा समानं महिमानमाधात् ।
तद्देशनावागमृतं निपीय वेश्मन्यगात् सोऽपि सुपर्वभावः ॥ ९७ ॥
क्षेमङ्करस्तीर्थकरोऽत्र पुर्यां विश्वत्रयक्षेमकृदन्यदाऽऽगात् ।
पुण्यानुभावेन महाजनानां किं किं समालिङ्गति नैव सिद्धिम् ? ॥९८॥
वज्रायुधं चक्रिणमभ्युपेत्याऽऽयुक्ता नराः स्वामिसमागमेन ।
तं वर्धयित्वा परितुष्टिदानं सम्प्राप्य तावत् स्वगृहाणि जग्मुः ॥ ९९ ॥
रोदोऽन्तराले वसुधामिवान्यां सैन्योत्थितै रेणुभिरादधानः ।
नन्तुं जिनाधीशमियाय सोऽथ तं त्रिः परीय प्रणनाम चायम् ॥१००॥
स्थित्वा यथास्थानमनन्यकर्मा धर्मोपदेशं विनिशम्य चक्री ।
तीर्थाधिनाथं पुनरेव नत्वा स्वाकूतमाख्यच्च महामहेच्छः ॥१०१॥

संसारसिन्धौ निपतन्तमस्मिन् प्रोद्यन्महामोहजलैरगाधे ।
दीक्षातरण्या शुभदातयोगात् त्वं मां जगत्तारक ! तारयाऽऽशु ॥१०२॥
आकर्ण्य विज्ञप्तिमिमां तदीयां तीर्थप्रभुर्वाचमुवाच सारम् ।
हित्वा प्रमादं स्वमनीषितं द्राक् कुर्या यतः स्युः सुकृतेऽन्तरायाः ॥१०३॥
इहक् तदाकर्णनहृष्टचेता राज्ये सहस्रायुधमात्मजातम् ।
न्यस्यैत्य दीक्षां जिनपादमूले जग्राह वज्रायुधसार्वभौमः ॥ १०४ ॥
कोटीरभाजो वसुधाधिपाला देव्यो मिताश्चापि चतुःसहस्र्या ।
पुत्राः पुनः सप्तशतीप्रमाणाः प्राव्राजिषुस्तं प्रभुमन्वगत्य ॥ १०५ ॥
संगृह्य शिक्षां द्विविधां विधिज्ञश्चूडामणिः सोऽपि तपोधनानाम् ।
वज्रायुधः सिद्धयभिधानशैलमेको ययौ शैलसमानसारः ॥ १०६ ॥
तत्रोपसर्गेषु सहिष्णुबुद्धिः स्तम्भे स वैरोचननामधेये ।
निर्मेघवैरोचनधामधामा वर्षप्रमाणां प्रतिमां चकार ॥ १०७ ॥
ध्यानं समालम्ब्य स यावदास्ताऽश्वग्रीवपुत्रौ दुरितप्रणुन्नौ ।
तावच्च नाम्ना मणिपूर्वकुम्भकेतू परिभ्रम्य भवं चिराय ॥ १०८ ॥
किञ्चित्तमां बालतपो विधायाऽहङ्कारकाराविनिविष्टचित्तौ ।
प्राप्ताऽसुरत्वौ कुतुकाद् भ्रमन्तौ तत्रागतौ तं मुनिमैक्षिषाताम् ॥१०९॥
( युग्मम् )
तस्मिंश्च जीवेऽमिततेजसः प्राक् तौ बद्धवैरावतिरुद्धरूपौ ।
क्रोधादुपद्रोतुमढौकिषातां तं बाढमर्थात्मभुवौ वै धर्मम् ॥ ११० ॥
पारीन्द्रदन्तावलकालकालव्यालाग्न्यवेतालकरालरूपैः ।
क्लृप्तैः स्वयं तौ बहुधा मुनीशे यावत् स्वल्पप्लवमाधिषाताम् ॥१११॥
तावद् बलारेः प्रियवारवध्वस्तीर्थङ्करं वन्दितुमिद्धरागाः ।
संभूय रम्भाप्रमुखाः प्रचेलुः, को वाऽमृतं वाञ्छति नाऽच्छबुद्धिः? ॥
अद्राक्षुरक्षुद्रतरस्वभावाः क्षुद्रावमुद्रावसुराधमौ ताः ।
तस्मिन् मुनीन्द्रे विविधोपसर्गान् सम्पादयन्तावदयं दुराशौ ॥११३॥
हा ! हा ! किमारब्धमनात्मनीनावस्मिन् मुनीन्द्रेऽत्र समाधिनिष्ठे ? ।
एवं ब्रुवाणा अवतेरुरेता विष्णोः पदाद् विष्णुरथातिवेगाः ॥ ११४॥
आलोक्य तास्तत्र समाव्रजन्तीस्तौ तत्क्षणादेव पलायिषाताम् ।

मिथ्यात्वमोहप्रसरो हि तावद् यावन्न जैन्यः प्रसरन्ति वाचः ॥११५॥
अग्रे मुनीन्द्रस्य सुरेन्द्रपत्न्यस्ता नाटकं चक्रुरुदारभावाः ।
वज्रायुधर्षिं प्रणिपत्य भक्त्या जग्मुर्यथास्थानमथ प्रहृष्टाः ॥ ११६ ॥
संपूर्य तां स प्रतिमां क्रमेणान्यत्र व्यहार्षीत् सुपवित्रगात्रः ।
पृथ्वीं सहस्रायुधपार्थिवोऽपि न्यायश्रिया पालयति स्म तद्वत् ॥११७॥
अत्रापरेद्युः परपौरभाग्यभङ्ग्या प्रणुन्नाः पिहिताश्रवाख्याः ।
सूरीश्वराः कल्मषपङ्कजातशोषक्रियायां तपना इवाऽऽगुः ॥ ११८ ॥
गत्वा सहस्रायुधभूमिपालस्तान् वन्दते स्म प्रणिधानपूर्वम् ।
पीयूषबन्धेर्गुरुदेशनाया जग्राह तत्त्वं च तदन्तिकस्थः ॥ ११९ ॥
निर्वेदमासाद्य भवोत्थसौख्यादाकार्य पुत्रं शतवल्ल्यभिख्यम् ।
राज्ये निवेश्य व्रतमादिताऽसौ तेषां गुरूणां सविधे नरेन्द्रः ॥१२०॥
साधुः सहस्रायुधनामधेयोऽन्येद्युर्विहारं विदधद् धरित्र्याम् ।
वज्रायुधस्य व्रतिपुङ्गवस्य पद्माकरस्येव मिमेल हंसः ॥१२१॥
युक्तौ मुनी रूपरसाविवैतौ द्रव्याश्रयं चित्रमनाश्रयन्तौ ।
भूयस्तरं कालमतीयतुस्तौ पृथ्वीं विहारेण पवित्रयन्तौ ॥१२२॥
तुङ्गं समारुह्य महीध्रमीषत्प्राग्भारसंज्ञं यतिनौ व्यधत्ताम् ।
तत्पादपाख्यानशनं विलीनस्थामाङ्गमास्थाय समाधिमेतौ ॥१२३॥
व्यापत्तिमापद्य ततस्तृतीये ग्रैवेयके तावहमिन्द्रभूयम् ।
आसेदतुः सञ्चितपञ्चविंशत्यब्ध्यायुषा सङ्कलितं त्वितश्च ॥१२४॥
प्राग्द्वीपके पूर्वविदेहमध्ये सीतामहानद्युपकण्ठ एव ।
आस्ते विशालः किल पुष्कलावत्याख्यो महीयान् विजयः प्रतीतः ॥१२५॥
तन्मण्डनं मध्यमखण्डमध्ये पूः पुण्डरीकिण्यभिधाऽस्त्यखण्डा ।
आखण्डलश्रीजयकृत् समृद्धया श्रीपुण्डरीकाक्षजनाधिवासा ॥१२६॥
आसीद् नृपस्तत्र घनो रथान्तः शश्वद् गुणश्रेणिविभूषितात्मा ।
गीर्वाणगीर्वाणविरोधिवृन्दसंसेव्यमानक्रमपद्मयुग्मः ॥१२७॥
यस्य प्रतापेन समं दिनेशः साम्यं समाक्रामति नैव किञ्चित् ।
आशासु सर्वासु नवोदयेन पूर्वोदयः काव्यविवर्णनेन ॥१२८॥
अर्थं दधे यः परदौःस्थ्यभित्त्यै कामं च यः सन्ततिकामनायै ।
विश्वम्भरानर्थनिवर्तनाय धर्मं च यो धर्मवतां पुरोगः ॥१२९॥

गतादृशः शारदशर्वरीशभास्वद्गुणग्रामनिवासभूमिः ।
अन्यः किमस्तीति जगत्त्रयेऽपि बभ्राम यत्कीर्तिरविश्रमेण ॥१३०॥
( चतुर्भिः कलापकम् )
तस्य प्रियाऽभूत् प्रियमत्यभिख्या ज्येष्ठा कनिष्ठा च मनोरमाख्या ।
श्रीनाभिसूनोरिव वित्तिलक्ष्मीमूर्तेः सुनन्दा च सुमङ्गला च ॥१३१॥
ग्रैवेयकायुः परिपूर्य जन्तुर्वज्रायुधस्याऽपि महाशयस्य ।
कुक्षिं महिष्याः प्रियमत्यभिख्याख्यातिं दधत्या अधितिष्ठति स्म ॥१३२॥
स्वप्ने तदा पश्चिमरात्रयामे देव्या निजास्ये प्रविशन् व्यलोकि ।
धाराधरो गर्जितमादधानो वृष्टिं च शम्पासहितः समन्तात् ॥१३३॥
राज्ञी प्रभाते जगतीश्वरस्य स्वप्नं जगौ सोऽपि जगाद तथ्यम् ।
शस्यप्रसूतिः परतापभेत्ता भावी सुतो मेघ इवानघे ! ते ॥१३४॥
श्रुत्वा स्वभर्तुर्वचनं प्रहृष्टा ध्वानं मयूरीव घनाघनस्य ।
देव्युन्नगोत्रस्थितिमादधाना गर्भं दधाना दिवसाननैषीत् ॥१३५॥
च्युत्वा सहस्रायुधराजजीवो ग्रैवेयकादायुषि भुक्तशेषे ।
कुक्षौ स देव्याः सुमनोरमायाः पुण्यस्थितेर्गर्भतयोदपादि ॥१३६॥
स्वप्ने तयाऽपि प्रविशन् मुखान्तस्तस्यां समालोकि दृढो रथश्च ।
उन्नादिजाम्बूनदकिङ्किणीको वातप्रकम्प्रध्वजराजमानः ॥१३७॥
सोपायना साऽपि नृपाय सद्यः प्रोचे स्वयं सेवधिलाभवत् तम् ।
हर्षप्रकर्षाद् नृपतिस्तदर्थमाख्यच्च भावी तव देवि ! पुत्रः ॥१३८॥
ते द्वे अपि प्रीणितविश्वविश्वौ पुत्रौ किलाऽजीजनतां सुलग्ने ।
उच्चेषु केन्द्रेषु च सद्ग्रहेषु पुंरूपमेताविव पुष्पवन्तौ ॥१३९॥
कृत्वोत्सवं वाञ्छितदानपूर्वं स्वप्नानुसारेण नृपोऽकृताऽऽख्याम् ।
ज्येष्ठं सुतं मेघरथं बभाषे पश्चाद् द्वितीयं च दृढं रथान्तम् ॥१४०॥
धात्रीभिरेतौ परिपाल्यमानौ वृद्धिं गतौ शिक्षितवेद्यविद्यौ ।
पुष्पेषु लीलोपवनं क्रमेण तौ यौवनं प्रापतुरेककालम् ॥१४१॥
श्रीमन्दिराख्यस्य पुरस्य भर्तुर्द्वेधा हतारेर्नृपतेर्नियोगात् ।
मन्त्री समागादपरेद्युरुद्यद्बुद्धिप्रशस्यः खलु शस्यबुद्धिः ॥१४२॥
आवेदितो वेत्रभृतां वरेणाऽमात्यः प्रणम्यावनिवासवं तम् ।

---

१ प्राप्तौ ।

सुक्षत्रनक्षत्रसुधांशुबिम्बं बद्धाञ्जलिर्व्यज्ञपयद् विधिज्ञः ॥१४३॥
गङ्गा पवित्रं भुवनं करोति चेतश्चमत्कारकरं न चैतत् ।
त्वत्कीर्तिगङ्गा तु महेश्वराणां मौलिस्थिता देव ! करोति चित्रम् ॥१४४
स्वामिन् ! मम स्वाम्यपि ते सखा प्राक् प्रीतिं बिभर्तीति च पौनरुक्त्यम्
तिस्रः सुतास्तस्य गुणाधिवासाः साधोर्यथा गुप्तय एकशीलाः ॥१४५॥
दत्त्वोभिके मेघरथाय चैकां तस्याऽनुजायैव महारथाय ।
प्रेमाणमुत्तेजयितुं सतेजाः सम्बन्धतो वाञ्छति विश्वबन्धो ? ॥१४६।
युक्तं तदेतद्यदि राजराज ! तल्लग्नमुद्वाहमहोत्सवाय ।
ज्योतिर्विदाऽऽवेदयत प्रसद्य प्रत्युत्तरं यच्छत वा ममाऽपि ॥१४७॥
एतत् तदुक्तं हृदये निधाय दैवज्ञमाकार्य तदैव भूपः ।
लग्नं कुमारागमवासरं च निर्दिश्य सत्कृत्य विसृष्टवांस्तम् ॥ १४८ ॥
कैश्चिद् दिनैर्मन्त्र्यपि पत्तनं स्वं संप्राप्य संप्राप्तविशिष्टमानः ।
कार्यस्य सिद्धिं विनिवेद्य हृद्यां संतोषयामास धराधिनाथम् ॥१४९॥
प्रस्थापयामास वितीर्य शिक्षां क्षोणीपतिर्मेघरथं कुमारम् ।
सेनाऽनुजेनाऽथ समं समीरः पुष्पं च गन्धेन यथा पुरं तत् ॥ १५० ।
सामन्तसेनापतिमन्त्रिपुत्रसेनावितानेन नियोजितेन ।
सार्धं कुमारौ चलतः स्म भम्भावाद्यप्रणादेन पुराकृतेन ॥ १५१ ॥
यातोस्तयोर्वर्त्मनि राजसून्वोर्यः प्राभृतं सम्भृतमानिनाय ।
तद्दत्तदीनारकदम्बकैः स दारिद्र्यमुद्रां प्रलयं निनाय ॥ १५२ ॥
आमोदयन्तौ क्वचनाऽपि देशाद्यध्यक्षकान् न्यायनिरीक्षणेन ।
संमानयन्तौ क्वचनाऽपि भट्टान् सौवर्णभूषावसनप्रदानैः ॥१५३॥
आलोकयन्तौ क्वचनाऽपि किञ्चिद् रम्यं विनोदादवलोक्यमानम् ।
संलापयन्तौ क्वचनाऽपि वृद्धान् प्रत्नप्रवृत्तिं वदतोऽनुयुक्तान् ॥१५४॥
इत्थं प्रयान्तौ प्रतिवासरं तौ कैश्चित् प्रयाणैर्विगलद्विलम्बैः ।
विक्रान्तभूमीन्द्रसुरेन्द्रदत्तदेशस्य सीमान्तिकमभ्यगाताम् ॥१५५॥
( त्रिभिर्विशेषकम् )

क्ष्मापेण तेन प्रहितोऽथ दूत एत्याऽवदद् मेघकुमारमेवम् ।
स्वामी द्विधा मेऽस्ति सुरेन्द्रदत्तो हर्यक्षवत् शौर्यनिवासभूमिः ॥१५६।
किञ्चित्तिरस्कारमदृष्टपूर्वी सत्त्वावलिप्तः सुकुमार ! स त्वाम् ।

वक्त्रेण मे वक्त्यद एतकेनाऽऽगम्यं त्वया नैव पथा कथञ्चित ॥१५७॥
सैन्येन यीता तव मामकीनदेशोपसर्गः क्रियते परत्वात् ।
मद्देशसीमानमपास्य तत् त्वं वर्त्माऽपरं श्रेयसे मङ्गलाय ॥१५८॥
एष्यत्यथो यद्यमुनैव मानाद् गोमायुयूथस्य दशां पुरा तत् ।
पारीन्द्रविभ्राजितकन्दरान्तं सावेगमायातवतः प्रयासि ॥१५९॥
इत्युद्धतां तस्य निशम्य वाचं प्रोवाच मेघोऽपि सधैर्यमेनम् ।
नैवेश्वराणां न च किङ्कराणां माहात्म्यमालोकितमस्ति दूत ! ॥१६०॥
सोऽपि त्वदीयः प्रभुरात्मगेहे शौर्यं वदन् स्वस्य कथं निषेध्यः ? ।
किं वा न दृष्टाः स्वमठे निविष्टाः स्वं स्वं मतं दर्शनिनो वदन्तः ?॥१६१॥
गेहे समायान विनिवार्यते न कश्चिद् महद्भिः किमु वापि देशे ? ।
अस्मान् निषिध्यन् स तु दृप्तोऽपि यत् सात्त्विकोऽवाचि स पक्षपातः ॥
देशस्य सीमामपि संस्पृशन्तो ये चोपसर्गं रचयन्ति तेऽन्ये ।
स्वाभासमन्यं खलु मन्यमाना यद्वा खलाः क्वापि न विश्रमन्ति ॥१६३॥
न क्षत्रियाणां तनयाः परेऽपि पन्थानमूरीकृतमुत्सृजन्ति ।
राजाधिराजस्य वयं तु पुत्रास्त्यक्तुं किमुत्साहमपि प्रकुर्मः ? ॥१६४॥
एतेन मार्गेण समाव्रजामस्तत्सिंहवृत्तेः समवेक्षणाय ।
दूतस्त्ववध्यस्त्वमहो ! प्रयाहि वृत्तान्तमेतं प्रवदाऽऽशु तस्य ॥१६५॥
इत्युद्भटां तस्य निशम्य वाचं प्रोवाच दूतः स तदैव गत्वा ।
स्वस्वामिने मानममुन्नताय कुत्राऽपि दूता न हि वञ्चकाः स्युः ॥१६६॥
तत्सर्वमाकर्ण्य सुरेन्द्रदत्तक्ष्मापोऽपि तस्मात् प्रतिघाऽरुणाक्षः ।
संवर्मयामास तदैव सैन्यं योद्धुं पुनः प्रास्थित वाद्यनादैः ॥१६७॥
सैन्योत्थितान्यभ्यधिकं रजांसि विन्यासयन् मूर्धसु सैनिकानाम् ।
शान्तप्रतापानलधूमभानि संग्रामभूप्राङ्गणमासदत् सः ॥१६८॥
अभ्यापतत् सैन्यमवेक्ष्य शत्रोः सुत्रामसैन्यस्य जये समर्थः ।
आरूढवान् मेघरथो रथं स्वं सार्धं बलाढ्येन निजाऽनुजेन ॥१६९॥
सैन्यद्वयस्याऽपि महाभटास्ते स्वस्वामिनिर्देशभृतेऽपि बाणान् ।
अन्योन्यविध्वंसनमानसाः स्म सावेगहुङ्कारभृतः क्षिपन्ति ॥१७०॥
अभ्यापतन्ती पतितारिमुक्ता बाणावली मेघरथस्य वीरैः ।

१ गच्छता ।

दूराद् विलूना निशितैः क्षुरप्रैः स्वस्वामिकार्याऽकरणादिवाऽरम् ॥१७१॥
बाणेन भिन्नो हृदि कश्चनाऽपि वैरिप्रणुन्नेन ममार वीरः ।
नैवाऽसिना कश्चन मस्तकेऽपि कर्माऽऽर्हतास्तेन विदुर्बलीयः ॥१७२॥
पृथ्वीभुजो मेघरथस्य सैन्ये प्रत्यर्थिवीरैर्निहताः पृथिव्याम् ।
केचिद् निपेतुः परिरम्भवृत्त्या प्रख्यापयन्तः प्रियतामिवैके ॥ १७३ ॥
सैन्यं विलोक्याऽऽकुलितं स्वकीयं तौ वैरिसैन्येन ततः कुमारौ ।
जन्याय सामर्षमुदस्थिषातां यद् दुःसहो वैरिपराभवोऽत्र ॥ १७४ ॥
सादी प्रसादी न बभूव कश्चित् कश्चिन्निषादी न तथा विषादी ।
कश्चित् पदातिर्विपदाऽतिरिक्तस्तस्थौ तयोर्यः पुरतो भटोऽपि ॥१७५॥
निर्वासितं सैन्यमवेक्ष्य सर्वं सर्वंसहाधीशसुरेन्द्रदत्तः ।
तावभ्यधावद् युवराट्समेतः किं वा न कुर्वन्त्यसमानमानाः ?॥१७६॥
साकं कुमारेण महाबलेन नानायुधैरेष ततान युद्धम् ।
तस्यानुजेनाऽपि समं तदीयः सूनुः प्रसूनायुधरूपधेयः ॥१७७॥
बाढं शराशर्यभितोऽपि खड्गाखड्गि प्रकृष्टं च भुजाभुजीदम् ।
तेषां चतुर्णामपि तत्र तन्न वृत्तं न यत् तद्व्यवहारभाजाम् ॥ १७८ ॥
ताभ्यां चिरं राजकुमारकाभ्यां तौ खेदयित्वेति रणानभिज्ञौ ।
सन्मार्गभङ्गप्रवणावितीव संप्रापितौ बन्धनकष्टकर्म ॥ १७९ ॥
देशे तदीयेऽपि नियोगिनः स्वानावास्य संवासितकीर्तिवासौ ।
श्रीमन्दिरं पत्तनमीयतुस्तौ प्रोत्तुङ्गसौधावलिमालितं तत् ॥ १८० ॥
श्रीमन्दिराभिख्यपुराधिनाथः श्रुत्वा पुराऽभ्यर्णमुपागतौ तौ ।
प्रत्युज्जगाम प्रसरत्प्रमोदः सैन्योर्मिभिः सिन्धुरिवेन्दुवृद्धौ ॥१८१ ॥
तावर्थकामाविव पुण्ययोगाद् न्यायप्रतापाविव मूर्तिबद्धौ ।
प्रावीविशत् तोरणराजिराजि क्ष्मावासवः स्वीयपुरं सपौरः ॥१८२॥
पुत्र्योर्द्वयोर्मेघरथेन पाणिमग्राहयद् भूमिपतिः सुलग्ने ।
प्राग्वत्सलायाः प्रियमित्रिकायाः किञ्चित् ततोऽस्याश्च मनोरमायाः १८३
तस्याऽनुजन्मा सुमतिं द्विधाऽपि कन्यां कनिष्ठां कनकावदाताम् ।
शस्तामुपायंस्त गुणैर्विचित्रै रामानुजन्मोर्मिलिकामिवाऽऽर्यः ॥१८४॥
दत्त्वा दुकूलानि विभूषणानि राज्यस्वभूतानि गजाश्वकानि ।
त्रीणि प्रयाणान्यनुगम्य चाथ जामातरौ तौ विससर्ज भूपः ॥१८५॥

पुत्रान्वितं तं च सुरेन्द्रदत्तं व्यापार्य तन्नीवृति निर्वृतौ तौ ।
तां राजधानीं जनकस्य पुण्यैः क्षेमेण संप्रापतुरृद्धिऋद्धौ ॥१८६॥
लोकोत्तरं तातपदारविन्दसेवाफलं वैषयिकं सुखं तौ ।
ताभिः प्रियाभिः सह संश्रयन्तौ कालं चिरं निन्यतुरेकचित्तौ ॥१८७॥
ज्येष्ठा प्रिया मेघरथस्य पुत्रं सूते स्म काले किल नन्दिषेणम् ।
अन्या पुनः सज्जनचित्ततापमेघप्रभं मेघमुपान्तसेनम् ॥ १८८ ॥
भार्या क्रमात् तस्य कनीयसोऽपि प्रासूत सूनुं रथसेनसंज्ञम् ।
जाम्योस्तयोः स्वस्य सुतोपपत्त्या प्रद्योतयन्तीव तृतीयभावम् ॥१८९॥
अन्तःपुरान्तर्गतशालिकायामन्येद्युरासीनमिलाबलारिम् ।
पुत्रैः कलत्रैः सह नप्तृभिश्च ताराभिरृक्षैरिव चन्द्रमध्ये ॥१९०॥
नत्वा सुसेनापणसुन्दरी तं सेनासमाक्रान्तचतुर्दिगन्तम् ।
पाणौ दधाना कृकवाकुमीदृक् चित्रं मुदा विज्ञपयाम्बभूव ॥१९१॥

( युग्मम् )

स्वामिन ! मदीयः कृकवाकुरेष नो जीयतेऽन्यैः कृकवाकुचक्रैः ।
श्येनः कदाचिच्चटकैरिवोग्रैर्बलाद् द्विजिह्वैरिव वैनतेयः ॥१९२॥
एतं मदीयं यदि ताम्रचूडमन्यस्य कस्याऽपि हि ताम्रचूडः ।
उद्दामसारस्तु पराजयेत दीनारलक्षं वितरामि तस्मै ॥१९३॥
अत्राऽपि कस्याऽपि जनाधिनाथ ! यद्यस्ति शक्तः कृकवाकुरङ्ग ! ।
एतं प्रतिज्ञापणमुद्धतं मे बुद्धिप्रसक्तः स पराकरोतु ॥१९४॥
एतत् समाकर्ण्य दृढस्य मात्रा प्राणेश्वरक्रोडनिविष्टयोचे ।
एतेन निर्दिष्टपणेन तन्मे स्वं कुक्कुटं योधय कुर्कुटेन ॥१९५॥
आमेति राज्ञाऽभिहिते प्रसन्ना देवी ततः सा सुमनोरमाख्या ।
स्वं वज्रतुण्डं चरणायुधं तमानाययामास तदैव दास्या ॥१९६॥
संतुष्टया वाहनतोऽपि किञ्चित् पद्मावतीदेवतया वितीर्णम् ।
मूर्ध्ना प्रतापं प्रवरप्रसादं शोणाभचूडोपधिना दधानौ ॥१९७॥
आनीतमात्रावपि तत्र चैतौ पदैर्विचित्रां गतिमादधानौ ।
स्फारैर्नखैरुन्क्लितकेसराग्रौ क्रोधोद्धतौ युद्धमहो ! व्यधत्ताम् ॥१९८॥

( युग्मम् )

व्योम्न्युत्पतन्तौ सुतरां पतन्तौ भूमौ चिरं सङ्गरमाधिपाताम् ।

कौतूहलं विश्वदृशां दिशन्तौ धात्रा प्रयुक्ताविव कन्दुकौ तौ ॥१९९॥
अन्योन्यचञ्चुक्रमघातनिर्यद्रक्तौघसंरक्तमभूच्छरीरम् ।
सिन्दूरसंवासनकेलिकर्म कुर्वाणयोरेतकयोरिवाऽत्र ॥२००॥
एतं जयश्रीरधुना वृणीते भूयस्तमां प्रोचुरिदं जनौघाः ।
माध्यस्थ्यमास्थाय तयोरतिष्ठद् युद्धातिरागादिव साऽपि भीता ॥२०१॥
मेहाविवैतावतियुध्यमानौ वीक्ष्याऽवदद् भूमिभुजां पुरोगः ।
नैवैतयोरेकतरोऽपि जेता बिभ्राणयोः सारमिवैकतुल्यम् ॥२०२॥
नीत्वा वचः कर्णपथे सकर्णस्तातस्य तद् मेघरथो बभाण ।
किं कारणं नाथ! न चैतयोर्यत् कस्याऽपि भङ्गोऽत्र जयो न चाऽपि?॥
राजा ततो वित्त्रितयाश्रयोऽसौ प्रोचे जनाः! प्राग्भववृत्तवृत्तम् ।
आख्यायमानं मयका यथावत् कृत्वाऽवधानं शृणुतेदमीयम् ॥२०४॥
प्राग्द्वीपगैरावतवर्षमध्येऽस्त्याढ्यं पुरं रत्नपुरं समृद्ध्या ।
तत्रातिहार्दौ वणिजावभूतां दत्तस्तथाऽन्यो धनवस्वभिख्यः ॥ २०५ ॥
दाहज्वरार्ताविव तावशान्ततृष्णौ पुरग्रामसुगोकुलेषु ।
संभृत्य पण्यैः शकटाननेकैर्लोभार्थिनावभ्रमतामजस्रम् ॥ २०६ ॥
तृष्णाबुभुक्षापरिभूयमानान् श्रान्तान् परिक्लान्तियुजोऽतिभारैः ।
तौ सौरभेयान् दृढयष्टिघातसञ्जातनैर्वाहयतः स नित्यम् ॥ २०७ ॥
उच्छूनपृष्ठानि तपोपतापाद् भारातिरेकाच्च गवामपुण्यौ ।
निस्सार्य रक्तं निशितक्षुरेण तप्तायसा तापयतः स्म हा! धिक् ॥२०८॥
मध्याह्नकालेऽप्यविमुक्तिखिन्नांश्छायाभिगांस्ताडयतः स्म गाढम् ।
क्रूराशयौ स्वेन वहत्स्वनःसु[3] प्सातः स्म बालाविव कल्य एव ॥२०९॥
( युग्मम् )
कूटैस्तुलानाणकमानमुख्यैः कं वञ्चयेते स्म न तौ विमूढौ ? ।
मिथ्यादृशौ निष्करुणौ व्यधत्तां तावन्यदाऽर्थाय मिथो युधं च॥२१०॥
तावित्यपध्यानपरौ मिथोऽपि युद्ध्वा पुनः श्रीतदिनीतटान्ते ।
मृत्वा च तत्रैव सुवर्णकूटानद्याः प्रतीरे करिणावभूताम् ॥ २११ ॥
नाम्ना पुनः काञ्चनताम्रपूर्वौ स्थाम्ना लसन्तौ कलभौ भ्रमन्तौ ।
याद्दच्छिकौ स्वस्वकयूथयुक्तावन्योऽन्यमालोकयतां मदान्धौ ॥ २१२ ॥

१ महिषौ । २ ज्ञानत्रयभृत् । ३ शकटेषु ।

प्राग्जन्मवैरात् कुपितौ नितान्तं प्रध्माततात्राभविलोचनौ तौ ।
अम्भोदवद् गर्जितमाचरन्तावधावतां मङ्क्षु मिथो वधाय ॥ २१३ ॥
दन्तैः कराभ्यां च परस्परेण स्थामानुमानेन चिरं प्रहृत्य ।
क्षीणायुषौ युग्मभवाविवेभौ कीनाशवेश्मोपगताविनश्च ॥ २१४ ॥
जम्बूमहाद्वीपगमुख्यवर्षे साकेतसंज्ञे नगरे बभूव ।
श्रीनन्दिमित्रो वणिजो वणिज्याव्यापारभाराजितऋद्धिपात्रम् ॥२१५॥
तस्याऽश्वविद्विपकलत्रयूथे तौ वाहशत्रू भवतः स्म पुष्टौ ।
दुग्धं पिबन्तावुचितं चरन्तौ तारुण्यमासेदतुरेककालम् ॥ २१६ ॥
साकेतशत्रुञ्जयराजदेवनन्दाङ्गजौ श्रीधरनन्दिषेणौ ।
आलोक्य तौ योधयतः स्म वाढं मृत्युं यथा प्रापतुरात्मवैरात् ॥ २१७॥
तत्रैव पुर्यां सममण्णभूतां तौ मेषकौ प्रौढतराङ्गसारौ ।
एकस्तयोः काल इति प्रसिद्धो नाम्ना महाकाल इति द्वितीयः ॥२१८॥
तौ दैवयोगाद् मिलितौ कदाचिदेकत्र वित्रस्तभयौ बलेन ।
युद्ध्वा तथैवोपगतौ गतौ च जन्मान्तरं कुक्कुटभूयमेतौ ॥२१९॥
प्राग्वज्जयो भाव्यनयोर्न नाऽपि सारेण तुल्येन पराजयोऽपि ।
जन्मान्तराभ्यासवशेन जन्तोः स्यातां जयश्चाऽपि पराजयश्च ॥२२०॥
वैज्ञानिको मेघरथो न्यगादीज्जन्मान्तरावर्जितमेव वैरम् ।
नैवैतयोः, किन्तु निबोध नाथ ! विद्याधराधिष्ठितवर्ष्मजं च ॥२२१॥
तस्यैव तातोऽपि तमादिदेश भ्रूसंज्ञया ज्ञातविशेषतत्त्वः ।
कृत्वाऽञ्जलिं सोऽपि च सम्प्रपश्चं वक्तुं वचः प्राक्रमतेदमेवम् ॥२२२॥
जम्बूमहाद्वीपगमुख्यवर्षे वैताढ्यभूमीधर एव वर्ण्यम् ।
श्रेणेः सदाभूषणमुत्तरस्या आस्ते पुरं नाम सुवर्णनाभम् ॥२२३॥
तत्र क्षितीशो गरुडादिवेगः संवेगरङ्गप्रसरत्नयश्रीः ।
देवी तदीया धृतिषेणिकाऽभूत् सौभाग्यभङ्गीकमनीयकान्तिः ॥२२४॥
आस्यप्रवेशोन्मुखचन्द्रसूरस्वप्नोपलम्भानुमितस्वरूपौ ।
सा चन्द्रसूरोपपदावसूत सूनू सरूपौ तिलकाभिधानौ ॥२२५॥
तावन्यदा साधितसाधुविद्यौ विद्याधरक्ष्मापसुतौ वयःस्थौ ।

१ अश्वद्विषो महिषस्तस्य कलत्रम्, महिषी इति यावत् । २ महिषौ ।
३ प्रासवन्तौ ।

मेरुं गतौ शाश्वतचैत्यनामं निर्माय तच्छायमवेक्षमाणौ ॥२२६॥
कुत्राऽपि सौवर्णशिलातलस्थं चन्द्रप्रभं चन्दनसागराख्यम् ।
दृष्ट्वा मुनिं न्चारणमिद्धभक्ती नत्वाऽर्हतः शुश्रुवतुः सुधर्मम् ॥२२७॥
( युग्मम् )

तद्देशनान्ते च मुनिं विनम्य तौ प्राञ्जली प्रोचतुरेकतानौ ।
विज्ञानदारिद्र्यपराभवार्तैः पुण्येन सर्वज्ञ इवासि लब्धः ॥२२८॥
तन्नौ प्रभो ! प्राच्यभवाभिधानात् कारुण्यसर्वस्वनिधे ! प्रसीद ।
ज्ञानं यतो ज्ञानवतां परार्थं गाम्भीर्यभाजां सरसामिवाम्भः ॥२२९॥
साधुस्ततोऽभाषत धीरभाषः सद्धातकीखण्डमहान्तरीपे ।
पौरस्त्यभागैरवताख्यवर्षे नाम्ना पुरं वज्रपुरं समस्ति ॥२३०॥
तत्राऽवनीशोऽभयघोषनामा दत्ताभयः शत्रुषु शङ्कितेषु ।
तस्य प्रियोत्तप्तसुवर्णवर्णा स्वर्णादिशब्दा तिलकाह्वयाऽभूत् ॥२३१॥
तस्याः सुतावस्तसमस्तदोषौ निर्व्याजतारुण्यविराजमानौ ।
ज्येष्ठस्तयोः श्रीविजयो बभूव कान्तः कनीयानपि वैजयन्तः ॥२३२॥
किञ्चात्र वर्षेऽस्ति पुरं वरीयः स्वर्णद्रुमाह्वं कविवर्णनीयम् ।
पृथ्वीपतिस्तत्र बभूव शङ्खः शुद्धोऽपि नान्तःकुटिलः परं यः ॥२३३॥
तद्वल्लभा नामत एव पृथ्वी जज्ञे तितिक्षागुणतोऽपि पृथ्वी ।
स्रक्स्वप्नसंदर्शनसूचितेदंकन्या च पृथ्वीपदपूर्वसेना ॥२३४॥
नित्यं कलाभ्यासमधिश्रयन्ती साऽपि क्रमाद् यौवनमाससाद ।
नान्यो वरोऽस्या इति चिन्तयित्वा राट् तां स्म दत्तेऽभयघोषराजे २३५
पृथ्वीपतिः सोऽपि तयैव सार्धं प्रीतिं दधानः परमामरंस्त ।
चित्ते विवेकं कलयन् प्रवेकं योग्यस्य को वा कुरुतामुपेक्षाम् ? ॥२३६॥
आवेदयन्ती सुरभिं समेतं मल्लीसुमानि स्वकरे वहन्ती ।
राजान्तिकं काऽपि समाजगाम चेटी कदाचिच्चतुरा वराऽऽस्या ॥२३७॥
ज्यायोमहिष्या समवेक्ष्य तां च प्राणेशिता व्यज्ञपि विज्ञवृत्त्या ।
सर्वर्तुकं नाम वनं नृदेव ! पुष्पाधिवासं सुममासवासम् ॥ २३८ ॥
तद् युज्यते तत्समवेक्षणाय गन्तुं महाराज ! विना विलम्बम् ।
उल्लासकः किं न वनस्पतीनां भूमीपतीनां खलु दृष्टिपातः ? ॥२३९॥
( युग्मम् )

शङ्खावतीनायकनन्दना सा पुष्पाणि पाणौ दधती स्ववासैः ।
आशाः समग्रा अपि वासयन्ती पत्युः समीपं समुपेत तदैव ॥ २४० ॥
आदाय तानि स्वकराम्बुजेन क्ष्मावासवः संमदमादधानः ।
आरामसौन्दर्यविलोकनाय ताभ्यां प्रियाभ्यां सह निःससार ॥२४१॥
पत्युर्नियोगाद् नृपशङ्खपुत्री स्वैरं भ्रमन्ती वनवीक्षणाय ।
दन्ताभिधानं मथनोत्तरस्थं साधुं समालोकत लोकवन्द्यम् ॥ २४२ ॥
विज्ञानमुक्ताफलवारिराशिं हर्षप्रकर्षेण मुनिं विनम्य ।
तद्देशनायाः परमार्थबोधाद् भर्तारमापृच्छय ललौ व्रतं सा ॥ २४३ ॥
राजाऽपि तस्या जननं कृतार्थं जानन् स्वचित्ते जनतासमेतः ।
पुण्यस्थितेः स्वं बहु मन्यमानः स्वावासमाशिश्रियदिन्दुसौम्यः ॥२४४॥
अन्येद्युरेषोऽभयघोषराजः प्रासादवातायनसानुवर्ती ।
दिष्ट्या चतुर्ज्ञानमनन्तमीशं द्वारे विशन्तं सहसा ददर्श ॥ २४५ ॥
उत्तीर्य तस्मात् त्वरितं नरेन्द्रः पादान् ववन्दे परमेश्वरस्य ।
तद्भक्तदत्तैः शुचिभक्तपानैश्चक्रे विभुः पारणकं तदैव ॥ २४६ ॥
आनन्दसन्दोहसमृद्धचित्तैराधायि देवैरपि पञ्चदिव्यी ।
अन्यत्र तीर्थाधिपतिर्विजह्रे यत्तादृशां स्थैर्यमिदं विचित्रम् ॥ २४७ ॥
आसादिताऽनन्तचिदात्मभावः क्ष्मां पावयन् स्वैश्चरणारविन्दैः ।
उद्यानके वज्रपुरस्य रम्ये तीर्थाधिनाथः समवासरत् सः ॥२४८॥
श्रुत्वा समायातमनन्तसार्वमायुक्तपुंभ्योऽभयघोषराजः ।
तीर्थेशमभ्येत्य विनत्य शक्रं स्थित्वाऽनुशुश्राव हितोपदेशम् ॥२४९॥
भूयस्तदन्ते प्रणिपत्य नित्यज्ञानं जिनं तं निजगाद भूपः ।
अस्मादृशां भाग्यभरेण युष्मत्पादाः समायासिपुरत्र नूनम् ॥२५०॥
तिग्मांशुशुभ्रांशुबलाहकानामभ्युन्नतिर्नो जगतां नितान्तम् ।
पुष्णाति सर्वज्ञ ! समीहितानि स्वामिन् ! यथा ते, समता कुतस्तत् ?।
न्यस्याङ्गजं दुर्नयशालमूलप्रोन्मूलने मत्तगजं स्वराज्ये ।
यावत् समायामि जिनेश ! तावदेतां भुवं पावय पावन ! त्वम् ॥२५२।
मा धाः प्रमादं नृप ! वेश्मगस्त्वमित्युक्तिमादृत्य जिनेश्वरस्य ।
राजा ययौ सद्म ततः स्वपुत्रावाकार्य तौ स्वाभिमतं विवव्रे ॥२५३॥
वत्स ! क्रमायातमिदं स्वराज्यमादत्स्व स त्वं विजयाऽतिसत्त्व ! ।

त्वं वैजयन्ताऽस्य च यौवराज्यं तेजोजयन्ताभ ! समाश्रयस्व ॥२५४॥
वत्सावहं संसृतिदुःखभीतस्तीर्थङ्करानन्तपदाब्जमूले ।
दीक्षां समादाय तपांसि तप्त्वा कर्माणि जित्वा च सुरीभवामि ॥२५५॥
ताभ्यां सुताभ्यां विहिताञ्जलिभ्यां प्रोचे यथा तात ! मता तवेयम् ।
साताय दीक्षा न तथैव किं नौ प्रायो हि पुत्रा जनकस्वभावाः?॥२५६॥
युष्मत्समीहानुपलम्भतोऽपि राज्ये सुखं तात ! न तर्कयावः ।
मिष्टं विशालाव्रततीफलं चेद् गोपालबालाः किमु तत् त्यजन्ति?॥२५७॥
दीक्षासुखं तात ! यथा तवेष्टं किं नावयोरेव तथा प्रतीतम् ? ।
रम्भाफलानां हि पचेलिमानां विज्ञो रसं विन्दति किं न बालः?॥२५८॥
दीक्षाऽऽवकाभ्यां च तदभ्युपेया तस्याः फले द्वे कलयाव एते ।
त्वत्पादपद्मद्वयपर्युपास्तिः संप्रत्यमुत्राऽपि परं पदं नौ ॥ २५९ ॥
तत्प्रोक्तमीदृग्घृदये निधाय प्रोवाच भूमीपतिरेव भूयः ।
दीक्षोद्यमो यौवन एव वत्सौ ! मृद्वङ्गयोर्वामतिदुष्करोऽयम् ॥ २६० ॥
दीक्षा तपोभिः सफला, तपांसि कर्तुं न शक्यानि मृदुप्रतीकैः ।
युष्मादृशैः, तद्वचसा ममाऽपि राज्यं युवां पालयत चिराय ॥ २६१ ॥
बाल्ये विशिष्याऽध्ययनं विधेयं तारुण्यकाले पुनरर्थकामौ ।
धर्माय तस्यापगमे तपस्याऽप्येतं क्रमं संश्रयतं श्रिये च ॥ २६२ ॥
श्रुत्वेदमीदृक् स्वपितुस्ततस्तौ प्रत्यूचतुस्तात ! निगद्यतेऽदः ।
स्थाने समस्तं, यदि धर्मराजो दद्यात् प्रसन्नोऽभयदानपात्रम् ॥२६३॥
स स्वाधिकाराऽप्रतिबन्धतस्तत् कस्याऽपि नाऽदाद् न च दास्यतीति ।
जाने प्रजानायक ! तादृशस्य दृष्टेः श्रुतेश्चाविषयोपपत्त्या ॥ २६४ ॥
तत्तात ! दीक्षाग्रहणेऽन्तरायं मा धा महाधामधुतोष्णधामन् ! ।
उत्साहका एव महानुभावा धर्मप्रवृत्तौ न निवर्तकाः स्युः ॥२६५॥
इत्याग्रहं भूमिपतिस्तदीयं मत्वा व्रतादानविधौ विधिज्ञः ।
कस्याऽपि दायादतनूभवस्य विश्राणयामास तदैव राज्यम् ॥ २६६ ॥
ताभ्यामथ क्षोणिपतिः सुताभ्यां सार्धं स गत्वा जिनसन्निधानम् ।
संस्तारनिस्तारनिबद्धकक्षां जग्राह दीक्षां जनवर्ण्यमानः ॥२६७ ॥
आत्तव्रताभ्यां सह सोऽपि ताभ्यां शिक्षां द्विधाऽपि प्रतिपद्यमानः ।
तद्विंशतिस्थानकवित्ततीर्थकृन्नामकर्माऽर्जयति स्म पुण्यैः ॥ २६८ ॥

संचित्य भूयांसि चिरं तपांसि मृत्वा त्रयोऽप्यात्तसमाधिभावाः ।
ते जज्ञिरे द्वादशदेवलोके देवोत्तमा भोगसमृद्धिभाजः ॥ २६९ ॥

अत्रान्तरेऽस्मिन् प्रथमेऽन्तरीपे पूर्वे विदेहे विजये समृद्धे ।
श्रीपुष्कलावत्यभिधे शुभेऽस्ति सा पुण्डरीकिण्यसमा श्रिया पूः ॥२७०॥

हेमाङ्गदः क्ष्मामघवा प्रशास्ति शस्तां सुवर्णैर्विविधैः पुरीं ताम् ।
यस्याऽरयो न्यायमवेक्ष्य भेजुर्हरिणा इवाऽरण्यमपेतमार्गाः ॥ २७१ ॥

तद्वज्रमालिन्यभिधानदेवीकुक्षौ स जीवोऽभयघोषराजः ।
च्युत्वा ततो द्वादशदेवलोकात् पुण्यप्रकर्षादुदपादि नव्यात् ॥ २७२ ॥

समृद्धिरुक्तैः प्रथितप्रभावैः स्वप्नैः समावेदिततीर्थकृत्त्वम् ।
प्रासूत देवी समयेऽथ सूनुं प्राचीव सूरं द्युतिदीपिताशम् ॥ २७३ ॥

सर्वं समाक्रम्य घनै रथौघैर्दिक्चक्रवालं भविता जयाढ्यः ।
इत्युग्रपुण्यप्रसरं पिता यं नाम्ना रथान्तं घनमभ्यधत्त ॥ २७४ ॥

राजव्रजः श्रीणवसुः समीपं यस्याऽऽप्य पूर्णः पुनरेति दूरम् ।
मन्दं द्विषन् मित्रसुहृज्जगत्यां द्वेधा क्षमां संप्रति सोऽपि पाति ॥२७५॥

च्युत्वा तावपि वैजयन्तविजयौ विद्याधरौ वां क्रमा-
ज्जातावित्यभिधाय चारणमुनिर्मौनं समालम्बत ।
तौ तु द्रष्टुमिहागतौ श्रुतचरं प्राग्जन्मतातं त्वका-
मतत्कुर्कुटविग्रहे विदधतुः कौतूहलात् संक्रमम् ॥ २७६ ॥

एतावेव च भोगवर्धनगुरोः पार्श्वे प्रयातावितः
प्रव्रज्यां प्रतिपद्य केवलविदं लब्ध्वा शिवं यास्यतः ।
श्रुत्वैवं चरितं निजं प्रकटितात्मानौ ततस्तौ सुतं-
मन्यौ मान्यनृपं विनम्य भवनं विद्याधरौ जग्मतुः ॥२७७॥

एतत् तावपि कुक्कुटावविकटं श्रुत्वा विरक्ताशया-
वेवं चिन्तयतः स्म धिग्धिगिमिकां दुःखास्पदं संसृतिम् ।
आवाभ्यां सुररत्नसोदरमिदं संप्राप्य मानुष्यकं
हाऽऽर्तध्यानकुकर्मभिः कथमहो ! निर्वासितं सर्वदा ? ॥२७८॥

ध्यात्वैवं चिरमूचतुर्निजगिरा तौ ताम्रचूडौ नृपं
कृत्वाऽनुग्रहमादिश त्वमधुना किं कुर्वहे स्वं हितम् ? ।
ज्ञानज्ञाततदीयगीर्घनरथोऽथोवाद देवो जिनः

साधुर्वा गुरुरस्तु केवलविदा प्रोक्तस्तु धर्मः सदा ॥२७९॥
इत्थं तौ प्रतिपद्य तद् घनरथादिष्टं पुनः कुक्कुटौ
स्वीकृत्यानशनं दिनैः कतिपयैर्मृत्युं समासेदतुः ।
भूतौ भूतपती विभूतिकलितौ तौ भूतरत्नाभिधा-
टव्यां स्वर्णकताम्रशब्दरुचितौ चूलाभिधानौ ततः ॥२८०॥
ज्ञात्वा प्राग्भवमात्मनोऽवधिविदा कृत्वा विमानं महत्
तौ श्रीमेघरथं परोपकृतिकृन्मूर्धावतंसं जवात् ।
अभ्येत्य प्रणिपत्य शुद्धविनयावेनं मुदा प्रोचतु-
र्देवौ भूतपती बभूविव भवद्दृष्टिप्रसक्त्याऽपि नौ ॥२८१॥
तिर्यग्योनिमहाकरालनरके दुःखप्रपञ्चाकुले
पापप्रायकुकर्मवैरिभिरलं क्षिप्तौ प्रसह्याऽपि नौ ।
कारुण्यामृतसागरप्रतिकृतिं स्वामिंस्त्वया बिभ्रता
चञ्चद्वागुपदेशलक्षणगुणेनाऽऽयामिनैवोद्धृतौ ॥२८२॥
तन्नावभ्युपपत्तिलब्धिपरयोरेतद् विमानं विभो-
ऽध्यारुह्य प्रतिपद्विलोकितमिमं लोकं समालोकय ।
इत्थं प्रार्थित आहिताञ्जलितया ताभ्यां परीवारयुक्
तं श्रीमेघरथोऽध्यरोहदसमं दीप्रप्रभामण्डलम् ॥२८३॥
तद् व्योम्न्युत्पतति स्म भास्वरमणिप्रद्योत्यमानाम्बरं
देवावङ्गुलिपूर्वमूचतुरिमं संपश्य संपश्य च ।
द्वीपक्षेत्रसमुद्रभूधरनदीस्वर्णाद्रितच्चूलिका-
वैताढ्याद्रिसनातनार्हतमहाचैत्यानि रम्याण्यपि ॥२८४॥
संख्यामानसमन्वितानि विदितान्यन्यानि सर्वाण्यलं
चित्ताश्चर्यविधायकानि बहुशः संदर्श्य संदर्श्य च ।
आनीय स्वपुरीं विमुच्य भुवने तौ तं प्रणम्याऽधिकं
वृष्ट्वा रत्नसमुच्चयं स्तुतिपरौ स्वं प्रास्थिषातां पदम् ॥२८५॥
अन्येद्युर्वसुधापतिर्घनरथो लौकान्तिकैर्दैवतै-
रभ्येत्य प्रणिपत्य भक्तिकलितैर्विज्ञप्त आज्ञावशात् ।
तीर्थं तीर्थपते ! प्रवर्तयतरामेवं विचिन्त्य स्थितिं
राज्ये मेघरथं निवेश्य तनयं तद्यौवराज्ये दृढम् ॥२८६॥

दानं वात्सरिकं प्रदाय जगतां वात्सल्यकृत्पुत्रयोः
शिक्षां च प्रकृतिप्रपालनविधावादाय दीक्षां विभुः ।
छद्मस्थः कतिचिद् दिनानि भगवान् निर्माय शाढं तपो-
दुष्कर्माणि निहत्य केवलविदा कैवल्यमाप क्रमात् ॥२८७॥
श्रीमान् मेघरथोऽनुजाश्रितपदः क्ष्मामण्डलं पालय-
न्नन्येद्युः सपरिच्छदोऽवनिपतिर्भृत्योपरोधाद् गतः ।
क्रीडानां रचनाय देवरमणोद्याने महावञ्जुल-
द्रोर्मूले महिषीसखो व्यरचयन् संगीतकप्रेक्षणम् ॥ २८८ ॥
प्रादुर्भूय तदैव तस्य पुरतो भूताः परोलक्षकाः
संगीतं विदधुस्तरामभिनयैश्चित्रैर्विचित्रैरपि ।
जिह्वानामभिराद् सहस्रयुगलीमक्ष्णां च यद्वीक्षितुं
स्तोतुं च व्यधितेव सेवकतया प्राज्यैव लक्ष्मीपतिम् ॥२८९॥
ते नारं विविधाकृतिस्वरभृतो यावद् व्यधुस्ताण्डवं
गाढप्रीत्यै दिवि तावदाविरभवच्चैकं विमानं महत् ।
तन्मध्ये ददृशेऽथ कश्चन नरो दृश्याकृतिः कान्तिमान्
पौलोम्येव पुरन्दरः प्रमदया युक्तः कयाऽप्येकया ॥२९०॥
क्ष्मापोऽथ प्रियमित्रया निजगदे देव्या समासन्नया
कोऽयं देव ! नरश्च का पुनरियं नारी किमत्रागतौ ? ।
भूमीशोऽभिदधे ततः प्रथमके द्वीपे प्रिये ! भारते
वैताढ्येऽस्त्यलका पुरी परमुदक्श्रेणिमहाभूषणम् ॥२९१॥
श्रीविद्युद्रथखेचरप्रभुरलं तां पालयामासिवान्
देवी मानसवेगिका समभवत्तस्य प्रशस्याशया ।
नाम्ना सिंहरथस्तयोः समजनि प्रद्युम्नरूपः सुतो-
मात्रा प्रेक्षितसिंहयुग्यकरथस्वप्नप्रणीताभिधः ॥२९२॥
कन्यां वेगवतीं विवाहितचरोऽभाद् यौवराज्यश्रिया
क्रीडाभूधरदीर्घिकावनसरित्स्थानेषु सार्धं तया ।
रेमे सिंहरथश्च मन्मथसमः सौभाग्यभङ्ग्या युवा
विद्वांसः परिकीर्त्तयन्ति यदि वा क्रीडाफलं यौवनम् ॥२९
बुद्ध्वाऽन्येद्युरसारमेव सकलं संसारमुर्वीपतिः

पुत्रं सिंहरथं निधाय निजके राज्ये विराजन्नयम् ।
प्रव्रज्यां प्रतिपद्य वन्द्यसुगुरोः पादारविन्दान्तिके
चारित्रं प्रतिपाल्य चारु सुचिरं लेभे क्रमाद् निर्वृतिम् ॥२९४॥
राजा सिंहरथोऽपि विक्रमतया विद्याधराधीश्वरान्
सर्वानेव विजित्य चक्रिकमलालीलास्पदं सोऽजनि ।
सौर्ये जाग्रति यस्य केवलमहो ! सूरे स्थिता सूरता
शून्ये व्योम्नि पलाय्य तस्थुषि तथा चाभ्रे लयं भेजुषि ॥२९५॥
भूमीन्द्रः स परेद्यविर्निशि परं विद्राणनिद्राभरो-
दध्यौ निष्फलमेव मे गतमिदं जन्मेक्षुसूनं यथा ।
यन्नाऽवन्दिषि नाऽऽर्चयं जिनपतीन् नो केवलज्ञानिनः
कांश्चित् काऽपि महाप्रमादजलधौ मज्जन्मनोमीनकः ॥२९६॥
तत् संप्रत्यपि भावतो जिनपतीन् नत्वा कृतार्थीकरो-
म्यात्मानं स कथं भवेन्न हि भटो नंष्ट्वाऽपि युध्येत यः ? ।
ध्यात्वैवं हृदि धातकीशकलके द्वीपे विदेहेषु सो-
ऽप्राचीनेषु च सत्रनाम्नि विजये सङ्केतगेहे श्रियाम् ॥२९७॥
सीतोदोत्तरतीरगे पुरवरे गत्वैव खड्गे पुरे
वन्दित्वाऽमितवाहनं जिनपतिं देव्या समं भक्तिभाक् ।
आकर्ण्याऽमृतसोदरामधिरसां तद्देशनां शर्मदां
भूयोऽपि प्रणिपत्य तं च ववले हृष्टः पुरीं स्वां प्रति ॥२९८॥
( युग्मम् )
अत्रोर्ध्वं व्रजतो जवादतितरामस्य प्रिये ! चस्खले
यानं मानपरिग्रहाद् विनयवद् वादाच्च सौजन्यवत् ।
एतस्य स्खलनं बभूव किमिति ज्ञातुं त्वधस्ताद् दृशं ?
यावत् प्रैरयदेष तावदपि मामत्र स्थितं प्रैक्षत ॥२९९॥
एष क्रुद्धिवशः समागमदथोत्क्षेप्तुं चकोराक्षि ! मां
वामो वामकरेण नाम मयकाऽप्याक्रम्यते स्मैषकः ।
वीक्ष्यैतं विरसं रटन्तमियमप्येतत्प्रिया दैन्यभाग्
भीता मां शरणं बभाज रभसात् किंवाऽबलाः कुर्वताम् ? ॥३००॥
कारुण्येन मया व्यमोचि सुभगे ! तन्मुक्तमात्रः पुरः
शक्तिं मे कलयन् विकृत्य बहुधा भूतान् प्रभूतानिमान् ।

सङ्गीतं रचयांचकार चतुरः सङ्गीतकर्मण्ययं
  भक्तिं कां न विभावयन्ति यदि वा दत्ताभयाः प्राणिनः ?॥३०१॥
प्रोचेऽथ प्रियमित्रया पुनरिदं प्राणेश्वर ! प्राग्भवे
  हार्य किं कृतमेतकेन सुकृतं जातो यतोऽयं विभुः ?।
राजाऽप्याऽऽख्यदिदं च पुष्करवरद्वीपार्धके पूर्वगे
  क्षेत्रे मुख्यतमेऽस्ति शङ्खपुरकं नाम्ना समृद्धं पुरम् ॥३०२॥
गाङ्गुसाह्वय आस्त नीतिविदुषां चूडामणिस्तत्र च
  प्रख्यातः कुलपुत्रकः समभवद् दारिद्र्यविश्रामभूः।
प्रेष्यत्वाधिगताशनः प्रतिदिनं तस्य प्रिया शङ्खिका
  साऽपि स्वप्रियवत् परोदवसिते कर्माणि नित्यं व्यधात् ॥३०३॥
स्त्रीपुंसावपि सङ्खपर्वतगिरिं तावन्यदा प्रस्थितौ
  नानाशालसमाकुलं फलभरानानेतुमुत्कण्ठितौ।
अद्रां तत्र यदृच्छया विदधतौ धर्मोपदेशे रतं
  वीक्षामासतुरात्मगुप्तिपरमं श्रीसर्वगुप्तं मुनिम् ॥३०४॥
विद्याभृत्कुलमध्यगं मुनिपतिं तौ तं स्फुरत्संमदौ
  वन्दित्वा पुरतो निषेदतुरिलापृष्ठप्रतिष्ठासनौ।
आचष्टेप विशेषतः शुभमतिर्धर्मं तयोरार्हतं
  दुःस्थादुःस्थकथाविशेषविलयाद् यत साधवः स्युः समाः ॥३०५॥
दिष्ट्या धर्ममत्रभिथते मुनिपतौ तावेवमाचख्यतु-
  र्जातं जन्म च जीवितं च सफलं त्वद्दर्शनाद् नौ प्रभो !।
स्वेनैवोपकृतौ च यद्यपि कृतौ तत् त्वं तथाऽप्यर्थितो-
  दुःखोच्छेदनिबन्धनं समुचितं किञ्चित्तपो नौ दिश ॥३०६॥
तद्योग्यत्वमयं विचार्य भगवान् श्रीसर्वगुप्तस्तपो-
  द्वात्रिंशत्पदपूर्वकं च तकयोः कल्याणनामादिशत्।
तत्तावभ्युपगम्य सद्मानि गतौ भावाच्चतुर्थैस्तपो-
  द्वात्रिंशत्प्रमितैस्त्रिरात्रियुगलैर्नैतो विधत्तः स्म तत् ॥३०७॥
द्वारे निक्षिपतः स्म यावदिमकौ दृष्टिं तपःपारणे-
  ऽभ्यायान्तं मुनिपुङ्गवं धृतिधरं द्वेधाऽपि तावद् गृहे।
अद्राष्टां सुकृतस्य सञ्चयमिव प्रोन्मीलदानन्दतः
  शुद्धान्नैः प्रतिलाभ्य शेषममृताहारं च तौ जक्षतुः ॥ ३०८

---

१ उदवसितं गृहम्।

ग्रामादौ विहरन् कदाचिदभयः श्रीसर्वगुप्तो गुरु-
स्तत्राऽऽगात् स च पुण्यरश्मिभिरिवाकृष्टस्तयोरायतैः ।
गत्वा तं प्रणिपत्य भक्तिकलितौ पीत्वा पुनर्वाक्सुधां
वैराग्योपचयाद् विभिन्नकलुषौ तावादिषातां व्रतम् ॥ ३०९ ॥

आचामाम्ललसत्पदोपपदगं तद्वर्धमानाभिधं
गीतार्थः सुगुरोर्गिरा स विदधे शुद्धं तपः शुद्धधीः ।
प्रान्ते चानशनं विधाय सुकृती स ब्रह्मलोके दिवे
देवत्वं दशसागरस्थितिमितं संप्राप पापक्षये ॥ ३१० ॥

सा शङ्खिकाऽपि विहितोग्रतपःप्रपञ्च-
संप्राप्तपञ्चमसुरालयलक्षसौख्या ।
आयुः स्वकीयमुपभुज्य दशाब्धिमानं
प्राणप्रियाऽस्य समजायत दृश्यरूपा ॥ ३११ ॥

एतर्ह्येष निजं पुरं परिगतो राज्ये निवेश्याङ्गजं
भर्तातस्य पदान्तिके भवभिदे दीक्षामुपादास्यते ।
दुष्कर्माणि निहत्य तीव्रतपसा विज्ञानमासाद्य चै-
तस्मिन्नेव भवे सनातनसुखं मोक्षं पुनः प्राप्स्यति ॥ ३१२ ॥

इत्थं सिंहरथो निशम्य तदिदं वैराग्यसम्पादकं
श्रीमन्मेघरथोदितं निजपुरं गत्वा निधायात्मजम् ।
प्राज्ये राज्यभरे ततो घनरथाभ्यर्णे गृहीत्वा व्रतं
निर्मायैव तपांसि निर्ममवरः स्वर्लोकमासेदिवान् ॥३१३॥

नरपतिरयं तत्रोद्याने स्वयं प्रियमित्रया
सह दयितया क्रीडां कृत्वा चिराय वसन्तजाम् ।
नरपतिकुलैः सङ्गीतेक्षासविस्मयमानसैः
प्रकटितपथः कल्याणेनाऽविशद् नगरीं निजाम् ॥ ३१४ ॥

आसीत् श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुश्चारित्रभाजां गुरुः ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽयमेकादशः ॥ ३१५ ॥

## ॥ इति श्रीशान्तिनाथचरिते एकादशः सर्गः ॥

सकलतारकमण्डलनायकः प्रबलमन्मथतापविनायकः ।
जिनपतिर्भवतात् सततं मुदे शुभवतां भवतां मृगलाञ्छनः ॥ १ ॥
अथ स मेघरथः श्रितपौषधः सदनमध्यगपौषधसद्मनि ।
समुपदेष्टुमुपाक्रमताऽन्यदा वसुधियां सुधियां सुवृषं पुरः ॥ २ ॥
क्षितिभुजोऽस्य तदाङ्कतले पतत्कलरवो न्यपतत् सभयोऽवगात् ।
त्वमेव मामिति मर्त्यगिराऽवदत् स जगदे जगदेकनियोगिना ॥ ३ ॥
अयि ! विहङ्गम ! भीतिरपास्यतां निजकुलायवदत्र निवास्यताम् ।
इति नृपेण कृपारससिन्धुनाऽभ्यभिहितेऽभिहिते स समाश्वसत् ॥ ४ ॥
अशनभूतमिमं मम भूपते ! अर्दिति सुश्च च तत्क्षुदीरयन् ।
इति तदैव शशादनपक्षवाननुपदं नु पदं दददाऽऽगमत् ॥ ५ ॥
नृपतिरेवमुवाच शशादनं कथमहं तवैनकमर्पये ? ।
न खलु बाहुभवा गणनाङ्कके प्रददते ददते शरणागतम् ॥ ६ ॥
द्विज ! तवाप्युचितं न भवेदिदं यदपरासुमदर्दनजाङ्गलैः ।
स्ववपुषः क्रियते परिपोषणं नयवताऽर्थवता च विगीयते ॥ ७ ॥
अरतिगोचरतामुपपादितेऽपि पतगेऽत्र विनाशमवापिते ।
सुहितता क्षणिका तव सेत्स्यते जननमाननमाऽस्य तपस्विनः ॥ ८ ॥
असव एव न तेऽपि सतानना: पिशितभक्षणलक्षणकर्मणा ।
खग ! भवांश्च भविष्यति निश्चितं कुगतिसङ्गतिसर्वजनदुःखभाक् ॥ ९
निरपराधशरीरिनिबर्हणं तदितजाङ्गलभक्षणनिर्मितिः ।
द्वयमिदं नरकाध्वनि शम्बलं निजगदुर्जगदुत्तमशेखराः ॥ १० ॥
भवति पिच्छविकर्षणतो यथा ननु तवाऽपि सुदुःसहवेदना ।
किमपरस्य तथा न विचिन्त्यतामनुभवो नु भवोत्तर एव तत् ? ॥ ११
वपुरिदं शरदब्दचलाचलं विगणयंश्चपलाचपलं बलम् ।
इह परत्र च निर्वृतिमर्हतामतनुतां तनुतां वधमेव कः ? ॥ १२ ॥

१ वसुसंख्यका अष्टौ धियो गुणाः शुश्रूषादयो येषां तेषां. कारणे कार्योपचारात् । २ रक्ष । ३ स्वस्थानवत् । ४ श्येनपक्षी । ५ भाग्यवता ।

वामाक्षिनिरीक्षणपरो धनञ्जय ऊर्ध्वबाहुरधोमुखः सर्वैः सभासद्भिर्दृष्टः। तदाऽर्जुनो धनुराचकर्ष ।

यतः—

"कटाक्षैः सह कृष्णायाः कुन्त्याः प्रस्रवनिर्झरैः ।

पितुरानन्दबाष्पैश्च चकर्ष धनुरर्जुनः" ॥ १ ॥

सोऽर्जुनो बाणकेङ्कारशब्देनाद्रितटं भिन्दन्, शब्दाद्वैतमयं जगत् कुर्वन्, धरां धुन्वन्, विश्वं बधिरयन्, दिग्गजान् त्रासयन्, मार्गणेनैकेन प्रतिपक्षराज्ञां हृदयैः समं राधाया वामं चक्षुर्बिभेद । ततः संतुष्टैरपि सुरौघैः फाल्गुनोपरि पुष्पवृष्टिर्वितेने । तस्मिन्नवसरे कुन्त्याः पाण्डोश्च सकलं जगदानन्दैकमयं जातम्, तथा यशोमयं संजातम् । पाञ्चाली पाण्डुसुतान् दृशः कोणेन साकाङ्क्षं पश्यन्ती लोकपालानिव पञ्चापि पाण्डवान् वरीतुकामाऽपि लोकापवादशङ्किता किरीटिनः कण्ठपीठे कराभ्यां वरमालां निचिक्षेप। सा वरमाला सर्वेषां पश्यतां दिव्यानुभावत एकाऽपि प्रत्येकं तेषां पञ्चानामपि कण्ठेऽदृश्यत । तदैव चाकाशे वाणी बभूव ।

यथा—

"उच्चचार ततस्तारा व्योम्नि वागशरीरिणी ।

साधु साधु वृतं राजकन्यया मा स्म शङ्क्यत" ॥ १ ॥

तत् श्रुत्वा द्रुपदश्चिन्तयति । पञ्चानां पाण्डुपुत्राणामेकां तनयां ददानः सर्वेषां साधुजनानामुपहास्यतां गमिष्यामि, तर्हि किं करोमि ?, इति चिन्तां प्रपन्नो द्रुपदो यावदभूत्; तावद् गगनाध्वना प्रवरप्रवर्द्धमानाऽसमशमदमसमाकुलं विमलं देहद्युतिद्योतितदिग्मुखं चारणश्रमणमुनिपुङ्गवं समागतं दृष्ट्वा ते सर्वेऽपि राजानस्तं मुनिपुङ्गवमुच्चासिंहासने निवेश्य धात्रीलुठितमूर्द्धानः प्रणमन्ति स्म । मुनीश्वरोऽपि सर्वेषां राजन्यानां

देशनां ददाति स्म ।

यथा—

"सुकुलजन्म विभूतिरनेकधा
प्रियसमागमसौख्यपरम्परा ।
नृपकुले गुरुता विमलं यशो
भवति पुण्यतरोः फलमीदृशम् ॥ १ ॥

नरकान्तं तदा राज्यं यदि राजा न धार्मिकः ।
धार्मिके तु परं तत्र सौख्यमत्र परत्र च" ॥ २ ॥

मणिसिंहासनस्थो मुनिः सर्वेषां सभासदामेवंविधां देशना दत्त्वा यावता स्थितस्तावता जनार्दनेनोक्तम् हे मुने ! पाञ्चाल्या एते पञ्च धवाः कथं संजाताः ? । मुनिनोक्तम् राजन् ! पूर्वकृतनिदानेन एते पञ्च धवाः संजाताः । एषा पञ्चभर्तृका द्रौपदी भविष्यति, अत्र काचिच्चिन्ता न विधेया ।

यतः—

"भवितव्यं भवत्येव नालिकेरफलाम्बुवत् ।
गन्तव्यं गच्छत्येव हि गन्तव्यं गजभुक्तकपित्थवत्" ॥ १ ॥

अतो यद्भावि तद्भवत्येव । अनया पूर्वजन्मनि निदानं कृतम् कृतनिदानैषा पञ्चभर्तृका भविष्यति । अथ मुनिः स पाञ्चाल्याः पूर्वभवानाह—पुरा हि चम्पायां नगर्यां त्रयो ब्राह्मणा अभवन् सोमदेवः, सोमभूतिः, सोमदत्तश्चेति । तेषां त्रयाणां तिस्रो भार्या अभवन् ; यथाऽनुक्रमेण नागश्रीः, भूतश्रीः, यक्षश्रीश्चेति नाम्ना तेषां त्रयाणां धनाढ्यानां प्रेमपराणां विप्राणां परस्परमेषा व्यवस्थितिरासीत् यथाऽनुक्रमेण सर्वैरेकस्य वेश्मनि भोक्तव्यम् अथान्यदा नागश्रीभुक्तिवारकवासरे समायाते नागश्रियाऽने करसा रसवती व्यधीयत । तस्यां रसवत्यां व्यञ्जने संस्क्रियमाणे तयैकं कटुतुम्बं बहुद्रव्यसंस्कृतं सज्जीकृत्य तस्यांशं करतले

कृत्वा किञ्चिदास्वाद्य तत्कटुकमखाद्यममनोज्ञं ज्ञात्वा चिन्तितम्—हा ! हा ! मयाऽज्ञानतयाऽस्मिन् व्यञ्जने बहुस्नेहव्ययः कृतः, तर्हि साम्प्रतमेकान्ते संस्थाप्य कस्यचिद् भिक्षोर्दास्यामि। इति विचिन्त्य तया नागश्रिया तदेकान्ते मुक्त्वाऽन्यत् मिष्टं तुम्बं संस्कृत्य सर्वेषां विप्राणां भोजनावसरे तया रसवत्या सन्तोष्य सर्वेऽपि विसर्जिताः स्वस्थानं गताः ।

तदा सुभूमिभागाऽऽख्ये उद्याने धर्मघोषाभिधः सूरिश्चतुर्ज्ञानवान् समागात् । तस्य धर्मरुचिः शिष्यो मासक्षपणपारणे किरात्या गृहे कल्पद्रुरिव नागश्रीगृहे समाययौ । तया नागश्रिया पापिन्या तत् कटुतुम्बं स्नेहद्रव्यसंस्कृतं तस्मै मुनये सर्वं व्यसृज्यत । मुनिरपि प्रासुकमशनं ज्ञात्वा तस्या अनुग्रहेच्छया सर्वं गृहीत्वा वसतिमागत्य गुरूणामदर्शयत् । गुरवोऽपि तद्गन्धमाघ्राय धर्मस्नेहादिदमूचिरे—हे वत्स ! यदि त्वमेतद्विषतुम्बकं भोक्ष्यसे, तदा शीघ्रं मृत्युमवाप्स्यासि, अत्रार्थे सन्देहो नास्ति। अतस्त्वं विशुद्धे स्थण्डिले गत्वा परिष्ठापय, इति गुरोरादेशान्नगराद्बहिर्गतो मुनिः । तत्र शुद्धे स्थण्डिले कथञ्चित् पात्रादेको बिन्दुर्निपतितः। तदासक्ताः पिपीलिका म्रियमाणा विलोक्य मुनिना चिन्तितम्—अहो ! एकेनापि बिन्दुना एतावत्यः पिपीलिकाः मृतास्तर्हि सर्वस्मिन् परिष्ठाप्यमाने कियन्तो जीवा निधनं यास्यन्ति ?; ततो वरं ममैकस्य मृत्युः, परं कोटिशो देहिनां मृत्युर्वरं न, इत्यालोच्य स धर्मरुचिर्मुनिस्तत्कटुतुम्बं सर्वं बुभुजे । तमाहारं भुक्त्वा कृतानशनो नमस्कारस्मरणं विधाय सर्वान् जीवान् क्षमयित्वा समाधिना स मुनिः प्राणान् विहाय सर्वार्थसिद्धिविमानमगमत् । ततो धर्मघोषगुरुस्तं धर्मरुचिं मुनिं चिरगतं ज्ञात्वा तद्विलोकनायान्यान् मुनीन् प्रेषयामास । तेऽपि मुनयो निरीक्षमाणास्तत्र गता यत्र स्थण्डिले स मुनिः पतितोऽस्ति । तं मृतं पतितं दृष्ट्वा ते साधवो दुःखभराक्रान्तास्त-

द्रजोहरणादिकं धर्मोपकरणमादाय गुरुपादान्ते समागत्य सर्वं निवेदयामासुः। ते चतुर्ज्ञानधरा गुरवोऽवधिना नागश्रीविलसितं सर्वं ज्ञात्वा स्वान सर्वान मुनीनाकार्यैवं कथयामासुः--भोः साधवः! यूयं नगरे गत्वा सर्वत्र त्रिकचतुष्कादिषु बाढस्वरेणेत्याघोषयत। ततस्ते तत्र नगरे गत्वा गुरुकथितं कथयामासुः भो भो लोकाः! एषा नागश्रीः सोमदेवपत्नी, यया साधुर्मारितो विषतुम्बेन; अतो धिगस्त्वेनां पापिनीमित्यादि। तत् श्रुत्वा सोमदेवादिविप्रैर्नागश्रीः गृहान्निर्वासिता, लोकैस्तिरस्कृता, लेष्टुयष्ट्यादिभिस्ताडिता सर्वतो बभ्राम।

तथा

"कासश्वासज्वरोत्कम्पकुष्ठाद्यैः क्रान्तविग्रहा।
रोगैः षोडशभिर्लेभे साऽत्रैव नरकव्यथाम्॥ १॥
क्षुत्पिपासार्दिता लोके निन्द्यमाना पदे पदे।
दुःखं भ्रमन्ती सा मृत्वा षष्ठं नरकमासदत्"॥ २॥

नरकादुद्धृत्य मत्स्येषूत्पन्ना, ततः सप्तमं नरकं ययौ। पुनर्मीनत्वे, ततः पुनः सप्तमे नरके। एवं द्विर्द्विर्वारान सर्वान नरकान सिषेवे। ततः पृथ्वीकायादिषु पञ्चसु वारं वारमुत्पेदे। विशेषतो वनस्पतिषु कटुवृक्षेषु विषवृक्षेषु कण्टकिवृक्षेषु कुत्सितवृक्षेषु भूयो भूयो मृत्वा तत्रैवोत्पन्ना। एवमनन्तकायिकेष्वपि; एवं द्वित्रिचतुरिन्द्रियेषु पञ्चेन्द्रियेष्वपि मत्स्यादिजलचरेषु व्याघ्रसिंहचित्रकादिदुष्टचतुष्पदेषु गृध्रघूकादिदुष्टपक्षिजातिषु गृहगोधासरटकादिभुजपरिसर्पेषु कृष्णसर्पादिषु सर्वेषूरःपरिसर्पेषु वारं वारमुत्पन्ना। एवमनन्तं कालं संसारे भ्रान्त्वा कथमपि कर्मलाघवाच्चम्पानगर्यां सागरदत्तगृहे सुभद्राभार्याकुक्षौ सुकुमालिका नाम्ना पुत्रीत्वेनोत्पन्ना, क्रमेण वृद्धिं गता सकललक्षणसंपूर्णा कन्या बभूव।

यतः—

"श्यामा यौवनशालिनी मधुरवाक् सौभाग्यभाग्योदया
कर्णान्तायतलोचनाऽतिचतुरा प्रागल्भ्यगर्वान्विता ।
रम्या बालमरालमन्थरगतिर्मत्तेभकुम्भस्तनी
बिम्बोष्ठी परिपूर्णचन्द्रवदना भृङ्गालिनीलालका" ॥ १ ॥

सा सुकुमालिका ईदृशी संजाता। इतस्तस्यामेव नगर्यां जिनदत्तनामा श्रेष्ठी परिवसति स्म, भद्रा भार्या, तयोः पुत्रः सागरनामा । सोऽपि संप्राप्तयौवनो द्वात्रिंशद्गुणोपेतोऽस्ति । यथा—सत्त्ववान्, कुलीनः, वशीकर्ता, बलवान्, सततजयः, प्रीतिमान्, सत्यरङ्गः, सावयवः, प्रियंवदः, कीर्त्तिमान्, दानव्यसनी, विवेकी, शृङ्गारवान्, अभिमानी, श्लाघ्यः, समुज्ज्वलगुणः, सकलकलाकुशलः, सत्यवाक्, सर्वजनप्रियः, सर्वदाता, सुगन्धिप्रियः, संवृतमन्त्रः, क्लेशसहः, अनुगतप्रियः, वाक्यपण्डितः, उत्तमसत्त्वः, धार्मिष्ठः, महोत्साही, गुणग्राही, सुपात्रसंग्रही, क्षमी, प्रभावकश्चेति । एकस्मिन् दिने सागरपिता जिनदत्तः सुकुमालिकागृहसमीपे व्रजन् कनककन्दुकैः क्रीडन्तीं सुकुमालिकां वेश्मस्थां ददर्श । तद्रूपमोहितो जिनदत्तो मनसि चिन्तयति—एषा कन्या मत्तनययोग्या, अनयोर्मणिस्वर्णमुद्रिकयोरिव संयोगो यदि भवेत्, तदा स्रष्टिकर्तुर्विधेः प्रयासः प्रशस्यो भवेत्; न मुधा स्यात् ।

यतः—

"कनकभूषणसंग्रहणोचितो
यदि मणिस्त्रपुणि प्रतिबध्यते ।
न च विरौति न चाप्यवभासते
भवति योजयितुर्वचनीयता" ॥ १ ॥

अतोऽनयोः संयोगं करोमि । इति विचिन्त्य जिनदत्तः

स्वजनपरिवृतः सागरदत्तगृहे गत्वा तत्पुत्रीं सुकुमालिकां सागरार्थेऽयाचत। ततः सागरदत्तोऽप्यूचे -भो जिनदत्त! तवाङ्गजः सागरो यदि मम गृहजामाता भवति, तदैषा मम पुत्री सुकुमालिका दीयते नान्यथा। यत एषा मम पुत्री प्राणप्रिया, अस्या विरहं क्षणमपि सोढुं न समर्थः। तच्छ्रुत्वा जिनदत्तश्रेष्ठी गृहमागात्। ततः पुत्रमपृच्छत्--भोः सागर! त्वं सागरदत्तस्य गृहजामाता भविष्यसि?। सोऽपि सुकुमालिकारूपमोहितो मौनमाधाय स्थितः। 'अनिषिद्धं ह्यनुमतं' इति न्यायात् तदभिप्रायं ज्ञात्वा सागरदत्ताग्रे प्रोक्तम्--मम पुत्रः सागरस्तव गृहजामाता भविष्यति, त्वं सुकुमालिकां पुत्रीं मत्पुत्राय सागराय देहि। सागरदत्तेन मानितम्। ततस्तयोः सागरसुकुमालिकयोराश्चर्यकृत् पाणिग्रहमहोत्सवः संजज्ञे। पाणिमेलापकावसरे तस्याः करस्पर्शं सागरोऽङ्गारतुल्यं विवेद। तथा कृतपाणिग्रहणौ तौ दम्पती रात्रौ वासवेश्मन्येकं पल्यङ्कं शिश्रियतुः, तथैव पुनः सागरस्तस्या अङ्गस्पर्शं ज्वलदङ्गारतुल्यं विवेद। तस्याः शेषकर्मवशादङ्गस्पर्शोऽङ्गारसोदरः समभवत्। अहो! कर्मवैचित्र्यम्।

यथा--

"सुखस्य दुःखस्य न कोऽपि दाता
परो ददातीह कुबुद्धिरेषा।
पुरातनं कर्म तदेव भुज्यते
शरीर! हे निस्तर यत्त्वया कृतम्" ॥१॥

तत्र पल्यङ्के महता कष्टेन क्षणं स्थित्वा तस्यां सुखसुप्तायां स नंष्ट्वा स्वगृहमागात्। निन्द्राऽत्यये सा जागरिता कान्तमपश्यन्ती भृशं रुरोद। प्रातः सुभद्रया तस्या मात्रा दन्तशौचहेतवे दन्तकाष्ठं जलभृतभाजनं च दास्या हस्ते प्रेषितम्। तया दास्या सुकु-

मालिका रुदती दृष्टा पृष्टा च । हे स्वामिनि ! किं रोदिषि ? । तयोक्तम्--सागरो गतस्तेन रोदिमि । दास्या तत् शीघ्रं गत्वा सुभद्रायै प्रोक्तम् । सुभद्रयाऽपि स्वप्रियः सागरदत्त उपालब्धः। ततः सागरदत्त उपालम्भं दातुं जिनदत्तगृहे गतः । तत्र गत्वा जामातुरुपालम्भं ददौ । तदुपालम्भं श्रुत्वा जिनदत्त उपरितनभूम्यां पुत्रसमीपे गतः । तत्र गत्वा पुत्रं प्रत्याह-हे वत्स ! त्वया युक्तं न कृतं, यद् मद्वचोऽन्यथा कृतं, गृहजामातृत्वमङ्गीकृत्य त्वरितमेवाद्य समागतः, तर्हि साम्प्रतं त्वरितं याहि, मद्वचो मन्यस्व । तेनोक्तम् , हे तात ! तस्याअङ्गसङ्गो ज्वलदङ्गारवत् सोढुं न शक्यते, अतस्तत्र न यामीत्यधः स्थितः सागरदत्तः तच्छ्रुत्वा विषण्णचित्तः स्वगृहं गतः । ततः स्वोत्सङ्गे सुकुमारिकां सुतां निधाय कोमलया गिरा सागरदत्तः पुत्रीमेवमुवाच--हे वत्से ! केनापि हेतुना सागरस्तव भर्त्ता त्वयि विरक्तः । अथ त्वं कामपि चिन्तां मा विधेहि, मया तवान्यः कोऽपि प्रेमपरो भर्त्ता विधास्यते। अथान्यदा गवाक्षस्थः सागरदत्तः कौपीनाम्बरधरमात्तकर्परं मक्षिकापरिवृतं कञ्चिद् भिक्षुकमद्राक्षीत्। सागरदत्तस्तं भिक्षुकं समाहूय सुगन्धयम्भोभिः स्नपयित्वा सुगन्धिभिश्चन्दनैर्विलिप्य दिव्यवासांसि परिधाप्य सुकुमालिकान्ते नीत्वैवमवोचत् ।

यथा—

"ऊचे तुभ्यं मया दत्ता पुत्रीयं सुकुमारिका ।
मदीयां विलसन् लक्ष्मीं सुखमास्स्व सहाऽनया" ॥१॥

तच्छ्रुत्वा स द्रमकस्तया सह वासवेश्मन्यागात् , यावत्तया सह पल्यङ्के निविष्टस्तस्या अङ्गसङ्गं करोति, तावत्तस्या अङ्गं ज्वलदङ्गारतुल्यं विवेद । सोऽपि तथैव सहसोत्थाय स्वं घटकर्परादि भिक्षुकवेषं समादाय पलायितः । तथैव निद्रान्ते गतं द्रमकं

ज्ञात्वा रुदतीं तां विलोक्य जनको जगाद- हे पुत्रिके ! त्वं मा रोदीस्तवायं प्राक्कर्मविपाकः समुपस्थितः, तत्त्वं स्वकृतं कर्म भुङ्क्ष्व ।

यतः—

"यथा भूमिगतं बीजमङ्कुरादनुमीयते ।
सुखदुःखात्तथा प्राच्यधर्माधर्मविनिश्चयः ॥ १ ॥
व्रजत्यधोऽधो यात्युच्चैर्नरः स्वैरेव कर्मभिः ।
खनितेव हि कूपस्य प्रासादस्येव कारकः" ॥ २ ॥

एवं कर्मविपाकं विरसं विज्ञाय शान्तात्मा सुकुमालिका धर्मपरायणा दानं ददाना पितुर्गेहे तिष्ठति स्म । अथैकस्मिन दिने तस्या गृहे गोपालिकानाम्न्यः साध्व्यो भिक्षार्थं भ्रमन्त्यः संप्रापुः । सा सुकुमालिका शुद्धान्नपानैस्ता गोपालिकाः प्रत्यलाभयत् । ततस्तदन्तिके धर्मं श्रुत्वा संजातवैराग्या व्रतमग्रहीत् । सा गृहीतव्रता षष्ठाष्टमादितपःसंयुक्ता आर्यिकाभिः सह विहारमकरोत् । एवं दिनानि यान्ति स्म । एकदा सुकुमालिका गोपालिकाः प्रत्यूचे हे स्वामिन्यः ! भवदाज्ञयाऽहं सुभूमिभागोद्याने गत्वोर्ध्वस्थिता रविबिम्बनिविष्टदृष्टिरातापनां तनोमि । ततो गोपालिकाः सुकुमालिकां प्रत्यूचुः--हे वत्से ! हे विनीते ! आगमे कुत्रापि साध्वीनामातापना वसतेर्बहिर्नोक्ता । अतस्त्वमपि वसत्यन्तरातापनां विधेहि । ततः सा गोपालिकानां तद्वचोऽनाकर्ण्यैव तस्मिन् वने गता । तत्र गत्वा यावता सूर्याभिमुखी आतापनां करोति, तावत्तत्र वने एका देवदत्ता गणिका दिव्यरूपा परिहितदिव्यांशुका दिव्यनेपथ्या चतुःषष्टिगणिकागुणोपेता एकेन पुंसा निजोत्सङ्गे धृता, अपरस्याङ्के मण्डनार्थं निवेशितांह्रियुग्मा, एकेन पुंसा शिरसि धृतातपत्रा, द्वाभ्यां वीजितचामरा, एवं पञ्चपुरुषैः सेविता तैः सह देवीव

सुखमनुभवन्ती दृष्टा। तां वेश्यां सुखमनुभवन्तीं दृष्ट्वाऽपूर्णभोगेच्छा सुकुमालिकैवं निदानमकरोत्—यद्यस्य मे तपसः फलं भवेत्, तर्हि भवान्तरेऽहं पञ्चपतिका भवेयम्। इति निदानं कृत्वा स्वाश्रयमागात्। ततः शरीरवातकुशिका जाता। हस्तपादमुखकक्षास्तनान्तरोरुधावनानि वारं वारं कुर्वती आर्याभिर्वारिताऽपि न न्यवर्त्तत। केवलमार्याणामुपरि द्वेषमुद्वहन्तीत्यचिन्तयत्।

यथा—

"पुरा बहुमताऽभूवमार्यिकाणामगारिणी।
तिरस्कुर्वन्ति मामेता भिक्षुकीमधुना पुनः" ॥ १ ॥

इत्यालोच्य विभिन्नवसतिस्थिता स्वच्छन्दवर्त्तिनी सा सुकुमालिका व्रतं चिरं पालयामास। प्रान्ते चाऽष्टौ मासान् संलेखनां कृत्वाऽन्ते समाधिना मृत्वा तत्कृतनिदानमनालोच्य सौधर्मदेवलोके नवपल्योपमायुष्का साधारणदेवीत्वेनोत्पन्ना। ततश्च्युत्वा सैषा द्रौपदी जाता। प्राचीननिदानतोऽस्या ह्येते पञ्च पतयः संजज्ञिरे। अत्र काश्चिद् विस्मयो नास्ति। यतः सिद्धान्ते नव पापनिदानान्युक्तानि।

यथा—

"निवसिद्धिइत्थिपुरिसे परपविआरे अ सपविआरे अ।
अप्परयसुरदरिद्दे सड्ढे हुज्जा नव निआणा" ॥ १ ॥

अस्य व्याख्या—काश्चित् साध्वादिर्निदानं कुर्यात्—देवाः केन साक्षात् दृष्टाः?, इमे राजान एव देवाः; ततो यद्यस्ति तपोऽनुष्ठानादीनां फलं, तदाऽहं राजा भवेयम्। स स्वर्गं गतश्च्युत्वा राज्यं लभते, न तु सम्यक्त्वादिधर्मम्। एवं दुर्लभबोधिः स्यात् ॥१॥ एवं बहुचिन्ता बहुव्यापारा राजानः, ततः श्रेष्ठ्यादिकुले भवेयम् ॥२॥ पुमान् बहुव्यापारः संग्रामादिदुष्करकारी चेति स्त्रीत्वम् ॥३॥ एवं स्त्री नित्यं पराधीना पराभवपदं चेति पुंस्त्वम्

॥४॥ अशुभा नृभोगास्ततो ये देवा अन्यं देवं देवीं वा ऽऽत्मानं वा देवदेवीरूपं विकृत्य प्रविचरन्ति तथाहमपि स्याम् ॥५॥ आत्मानमेव देवदेवीरूपं विकृत्य ये प्रविचरन्ति तथा स्याम् ॥६॥ निर्विण्णकामभोगत्वात् यत्र न प्रविचारणा तत्र स्याम् । स ततश्च्युतः सम्यग्दर्शनं लभते, न तु देशविरत्यादि ॥७॥ तत एवात्मा मे सुनिस्तारः स्यात्, इति दरिद्रः स्याम् । स स्वर्गादागतो दरिद्रीभूय प्रव्रजत्यपि, न तु सिध्यति ॥८॥ एवं श्राद्धत्वं साधु इति श्राद्धः स्याम् । स सर्वविरतिं नाप्नोति ॥९॥ एवं नव निदानान्युक्त्वा, द्रौपद्याः पूर्वभवांश्च कथयित्वा, कृतनिदानत्वादेषा द्रौपदी पञ्चभर्तृका भविष्यतीति कथयित्वा च मुनिपुङ्गवो यथैवागतस्तथैव नभसा जगाम । यतः साधवो नैकत्रस्थायिनो भवन्ति । ततः पाण्डवानां स्वजनभूभृतो वधूलाभे विकाशं दधुः, स्वैरुदयेऽरविन्दाकरा इव । अथ पाञ्चालभूपो द्रौपद्याः पुत्र्या वैवाहिकं कर्म प्रारेभे । यथा प्रथमं सा स्नानमण्डपं गत्वा स्नानं विधाय कृतमङ्गलकर्मा शुद्धवस्त्राणि परिधाय मज्जनगृहात् प्रतिनिस्सरति स्म । ततो यत्राऽस्ति जिनगृहं तत्रानुप्रविश्य जिनं प्रणमति स्म । ततो लोमहस्तकं गृहीत्वा जिनं प्रमार्जयति स्म । ततः सूर्याभदेववत् पूजां कृत्वा धूपं दहति स्म । ततो वामजानुमूर्ध्वीकृत्य दक्षिणजानुं महीपीठे निधाय शक्रस्तवं पठति स्म । ततो जिनगृहाद् निष्क्रम्यान्तःपुरे समागच्छति स्म । ततः प्रसाधिकाभिः प्रसाधिता यथा पुनः स्नानं कारयित्वा शरीरं संमार्ज्य सचन्दनादिभिर्विलिप्य स्वर्णखचितदिव्यवासपरिधापनपूर्वं सा स्वर्णमणिरत्नाभरणैर्भूषयामासे । पाण्डुराडपि तथैव भासुरं वैवाहिकोत्सवं स्वपुत्राणां प्रारेभे । यथा ते प्रथमं स्वजनैर्मङ्गलस्नानपूर्वकं वस्त्राद्यैरलङ्कृताः पृथक् पृथक् वारणेन्द्रसमारूढाश्छत्रचामरैः शोभिताः सकलराजमण्डलीपरिवृता नागरिकलोकैः संवीक्षिताः पाञ्चालीं

परिणेतुं मङ्गलतूर्यपूर्वकं द्रुपदावासं प्रति प्रतस्थिरे । तदा कुन्तीमाद्रीगान्धारीप्रमुखाः स्त्रियो धवलमङ्गलानि गायन्ति स्म। एवं सकलसामग्र्या सहिताः पाण्डवाः क्रमाद् दानं ददाना-द्रौपद्याः मण्डपद्वारि समाजग्मुः। ततस्ते गजेभ्योऽवतीर्य मण्ड-पान्तः समागताः। तत्रोपविश्य दैवज्ञकोपादिष्टवेलायां स्वदाक्षि-णकरैः पाञ्चाल्या दाक्षिणपाणिं जगृहुः। पाञ्चाल्यपि त्रपाऽवन-तकन्धरा वस्त्रावृतवदना वृद्धावचोभिः पाण्डवैः समं वह्निं प्रद-क्षिणीचक्रे । द्रुपदोऽपि पाण्डुपुत्राणां द्रौपद्याः पाणिमोचनक-र्मणि दारान् विनाऽन्यत् आत्मनः सर्वं गृहसारमुपदीचक्रे । अथ पाण्डवा द्रौपदीं पाणिग्रहणानन्तरं रथे समारोप्य निजावासमुपागमन्। द्वितीयेऽह्नि पाण्डुराट् कृष्णादिभिर्नृपैः परिवृतो वध्वा समं सबलवाहनो द्रुपदान्वितः स्वपुरं प्रति प्रतस्थे । द्रुपदराडपि कियतीं मेदिनीमतिक्रम्य पश्चात् पाण्डु-ना विसृष्टः स्वपुरमाविशत्। पाण्डुराट् स्वपुरमागत्य कृष्णं विना सर्वं राजचक्रं गजाश्वादिभिः सत्कृत्य विससर्ज । अथ ते पाण्डवाः क्रीडाशैलादिषूद्यानकाननादिषु वापीसरो-वरादिषु द्रौपद्याः समं क्रीडन्तो यामवत् वर्षाण्यतीयुः । एवं सुखमनुभवतां तेषां काले यात्येकस्मिन् दिने देहद्युति-द्योतितदिग्मुखो नेत्रपीयूषनीरदो नारदो नाम देवमुनिर्व्योम्नि संचरन् पाण्डवगृहेऽवततार। तस्मिन्नवसरे केनचित् कारणेन कृष्णोऽपि तत्रागात्। ततः कृष्णो द्रौपदीं पाण्डवांश्च दृष्ट्वा मनसि किंचिद् विचिन्त्य नारदं प्रत्याह—भो नारद ! एतेषां द्रौपदीपाण्डवानां काचिद् व्यवस्था भवेत्, तदा वरम्। पश्चान्ना-रदः पाण्डवानाकार्य व्यवस्थां करोति स्म। यथा हे पाण्डवाः ! हे वत्साः ! कर्णपीयूषं युष्मद्विवाहमङ्गलमाकर्ण्य व्यवस्थां कर्तुं समागतोऽस्मि । यत एका द्रौपदी अनेकबान्धवपरिभोग्या बान्धवचेतसां द्विधाभावकरी मा भवत् ।

यतः—

"भवस्य बीजं नरकद्वारमार्गस्य दीपिका ।
शुचां कन्दः कलेर्मूलं दुःखानां खानिरङ्गना ॥ १ ॥
वत्साः! कुटुम्बसंहारकारणं हरिणेक्षणा ।
यथा समभवत् पूर्वमाकर्णयत तां कथाम्" ॥ २ ॥

यथा--रत्नपुरे नगरे श्रीषेणनामा न्यायवान् सम्यक्त्वधारको जनवत्सलः सकलगुणालङ्कारधारको महाराजोऽभूत् । तस्य राज्ञोऽभिनन्दिताशिखिनन्दितानाम्न्यौ द्वे प्रिये बभूवतुः, कामस्य रतिप्रीती इव । तयोराद्याऽभिनन्दिता जगदुद्द्योतकारकौ द्वौ नन्दनौ सूते स्म । तयोराद्य इन्दुषेणः, द्वितीयो बिन्दुषेणः । क्रमेण तौ वृद्धिं गतौ शस्त्रशास्त्रविचक्षणौ यौवनं प्रापतुः । तयोस्तातेन बहुशः कन्यका राजपुत्र्यः परिणायिताः । एवं सुखेन सुखमनुभवतोः दिनानि यान्ति स्म । अथ तस्मिन्नेव पुरे सर्वकलानां पारदृश्वरी अनङ्गसेनाभिधा गणिकाऽभूत् । लावण्यरसनिम्नगायास्तस्या रूपमोहितौ द्वावपि राजनन्दनौ मिथो वने गत्वा संनद्धबद्धावकलहायताम्, करिण्याः करिणाविव । ततो द्वावपि पुत्रौ राज्ञा निवारितौ, परं तथापि कामक्रोधाद् न विरेमतुः । ततो राजाऽचिन्तयत् -धिक्कामचेष्टितम्, यतः--सुवंशजातावप्येतौ मत्तनयौ वेश्यार्थे परस्परं युद्ध्येते । धिग् वेश्याविलसितम् ।

यतः—

"मनस्यन्यद् वचस्यन्यद् क्रियायामन्यदेव हि ।
यासां साधारणस्त्रीणां ताः कथं सुखहेतवः?" ॥ १ ॥

ततस्तयोः पिता राजा श्रीषेणः पुत्रविलसितेन विषमं विषमास्वाद्य परलोकं ययौ । पत्युर्वियोगेन तस्य द्वे अपि पत्न्यौ अभिनन्दिताशिखिनन्दिते तथैव विपेदाते । तावपीन्दुषेणबिन्दुषेणौ वेश्यार्थं युद्धं कृत्वा क्रोधोद्धतौ मृत्युमापतुः । भोः पाण्डवाः!

स्त्रीनिमित्तमित्थं कुटुम्बसंहारः पूर्वमभवत् । साम्प्रतमप्येकस्त्री-रिरंसूनां भवतां निश्चितं क्षेमं न पश्यामि । अत एवाऽहं मर्यादां कर्तुं समागतोऽस्मि । तस्मात् सर्वैरपि बन्धुभिरहर्निशमनया मर्यादया वर्तितव्यम् ।

यथा—

"यदा युष्माकमेकः स्याद् द्रौपदीवासवेश्मनि ।
कार्यतोऽपि तदाऽन्येन न गन्तव्यं कथञ्चन ॥ १ ॥
कथञ्चिदथ यः कोऽपि भिनत्ति समयं यदि ।
वनवासाय गन्तव्यं तेन द्वादशवत्सरीम्" ॥ २ ॥

इति नारदगिरमायतिक्षेमकारिणीं श्रुत्वा हृष्टाः कौन्तेयाः मुनिनाऽऽदिष्टं सर्वमनुमेनिरे । एवंविधां मर्यादां कृत्वा नारदर्षिः स्वेच्छयाऽम्बरे उत्पपात । हृषीकेशोऽपि पाण्डुपुत्राननेकैरुपचारैः संभाष्य स्वां पुरीं द्वारकां समाययौ ।

"इति समयनिरुद्धकामचाराः
प्रणयप्रह्वधियः परस्परेण ।
सहविहितसमस्तकेलिरम्यं
गमयन्ति स्म दिनानि पाण्डवेयाः" ॥ १ ॥

इति श्रीमत्तपागच्छभट्टारक–श्री ५ श्रीहीरविजयसूरिपट्टालङ्कारभट्टारक-श्रीविजयसेनसूरिराज्ये पण्डितश्रीदेवविजयगणिविरचिते गद्यबन्ध-बन्धुरे श्रीपाण्डवचरिते द्रौपदीस्वयंवरवर्णनो नाम
चतुर्थः सर्गः ॥ ४ ॥



अर्हम्

# अथ पञ्चमः सर्गः ।

अथ तेषां पाण्डुपुत्राणामन्वहं मुनेः समयमनुजग्मुषां परस्परमखण्डा प्रीतिरभूत् । सा पाञ्चाली वारं वारं वारकेण पाण्डवैः सह विलसन्ती तेभ्यः पाण्डवेभ्यः पृथक् पृथक् पुत्रान् प्राप । ते पुत्राः पञ्च पञ्चधात्रीभिर्वर्धितास्त्रिजगत्प्रिया लोकपालोपमा भिन्नाभिधानाः पञ्चाऽपि पाञ्चालापराभिधाः पृथिव्यां पप्रथिरे । पाण्डुपुत्राणां सौभ्रात्रं द्रौपद्याश्च सतीव्रतमवलोकयितुकाम इव शरदृतुरुपागमत् । ततस्ते पाण्डवेया द्रौपद्या सममुद्यानकेलिभिः क्रीडन्ति स्म । एकस्मिन् दिने धनञ्जयेन धनुर्विद्यानिपुणेन विद्यागुरुपुरत एषा प्रतिज्ञा जगृहे यदहं चौरापहृतं पुरधेनुकं श्रुत्वा यावत् प्रत्यावर्त्य नानयामि, तावदन्नपानादिकं न करोमि । एवं दिनानि यान्ति स्म । एकस्मिन् दिने सर्वं तत्पुरधेनुकं तस्करैरपाहारि । ततस्ते वल्लवास्तैः सह किञ्चिद् युद्धं कृत्वा तस्करैस्तिरस्कृता नगरद्वारे समागत्य हता गाव इत्युक्त्वा वाढं पूच्चक्रुः । तच्छ्रुत्वा धाविता लोकाः । शौण्डीर्यचूडामणिः फाल्गुनोऽपि गोग्रहं श्रुत्वा क्रोधाग्निनाऽन्तर्जज्वाल । तदाऽर्जुनेन प्रजाकृते प्राणानपि त्यक्तुमिच्छता नारदकृतसमयभेदोऽप्यकारि । यतो युधिष्ठिराधिष्ठिते द्रौपदीक्रीडावासवेश्मनि गाण्डीवं धनुरक्षयतूणीरमादातुं फाल्गुनोऽविशत् । ततः स वीरमुख्यो धनञ्जयः सधनुस्तूणीरो रथमारुह्य तद्धेतुरनुधावितः, तस्करान्निर्जित्य हेलया पौरैरभिनन्दितः पुरस्कृत्य धेनूर्नगरं निनाय । ता दृष्ट्वा हृष्टैर्नागरिकैः स्तुतो धनञ्जयो गोपैः परिवृतो नारायणोपमः पुरद्वारे समागात् । ताधेनवो वत्सोत्सुकाः पार्थस्य यश इवोज्ज्वलं क्षीरं क्षरन्त्यः स्वस्वधामन्युपतस्थिरे । अथाऽर्जुनो नगरगोपुरस्थितो नारदर्षिकृतस्वप्रतिज्ञाभङ्गं ज्ञात्वा कुन्तीपाण्डुयुधिष्ठिराणां च प्रष्टुं

कुटुम्बं च प्रष्टुं कञ्चित् पुरुषं प्रेषयामास। स पुरुषः मातापित्रोरन्तिके गत्वा संयोजितकरकमलयामल एवमवोचत्।

यथा—

"अभिद्यत मुनेरद्य प्रजार्थे समयो मया।
विवेचयन्ति नो किञ्चित् कुरुवंश्या हि तत्कृते॥ १ ॥
करिष्ये तीर्थयात्रां तद् वने द्वादशहायनीम्।
ताः प्रमाणीभवन्त्यद्य गरीयस्यो मुनेर्गिरः॥ २ ॥
तन्मे तीर्थाद्रिकान्ताराविहाराय प्रसीदत।
अविघ्नं च करिष्यन्ति युष्मत्पादाः स्थिता हृदि"॥ ३ ॥

इत्यर्जुनवाचिकं सेवकमुखात् श्रुत्वा जननीजनकौ सपरिवारौ धनञ्जयान्तिके समागत्य करे धृत्वैवमवोचताम्—हे वत्स! बाले वयसि कोऽयं तव तीर्थारण्यमनोरथः?, यतः कुरवो हि सुतोपहितभारा वनवासिनो भवन्ति। अतस्त्वमपि पुत्रे राज्यभारधुरन्धरे जाते तीर्थारण्यमनोरथं विधेहि, यतो महोक्षवाह्ये भारे तर्णकः किं योज्यते?। त्वमपि तर्णकप्रायो राज्यलीलया गृहे तिष्ठ। पुनर्मात्रोक्तम्—हे पुत्र! त्वां विना वासरो मम वत्सरायते। तथा दधिदुग्धादिभिः पोषितमेतत्तव वपुर्वनफलाहारैः कथं वर्धिष्यते?। तथा पुरा छत्रै रुद्धप्रतापो भानुः सेर्ष्य इवाधुना पथि त्वां स्वकरैर्व्यथयिष्यति। तथैतां त्वय्यासक्तां भर्तृभक्तामिन्दुमुखीं तव विरहे साश्रुलोचनां स्नुषां द्रौपदीं विहातुं कथमीहसे?। इति जनन्यां वदन्त्यां युधिष्ठिरो ज्येष्ठबन्धुरस्तोकशोकसमाकुलो लघुबान्धवमर्जुनमेवमभाषत—हे बन्धो! मातापितरावतिक्रम्य यत् कार्यं क्रियते, तत् सफलं नो भवति। भवतापि कोऽयं मुनेर्वाक्यस्य भेदोऽकारि?, अत्र किञ्चित्तव दूषणं नास्ति, त्वया तु परोपकृतये एतद्विहितम्; परार्थे कृतस्य कार्यस्य दूषणं न भवति, अतो विदेशगमनं मा विधेहि। अथ भीमोऽर्जुनं जगाद-भो बान्धव!

युक्त्या न युज्यते स्थैर्यं कया वैकस्वभावतः ।
नानाकार्यसमुत्पादः स्वात्मना चिन्त्यतामिदम् ? ॥१२॥
यथाऽनेकस्वभावं तत् सर्वेषां सर्वदर्शिनाम् ।
करोत्यनेकं विज्ञानमिदमित्थं कथं न ते ? ॥ १३ ॥
स्वरूपमेव सर्वेषां सर्वज्ञानां तथाविधम् ।
विज्ञानं न तु तत्तेन तत्त्वतः क्रियते यतः ॥ १४ ॥
अतीतादेरसत्त्वेन न स्याद् ग्रहणमन्यथा ।
तस्यापि ज्ञानकर्तृत्वेऽतीतत्वादिविरोधतः " ॥ १५ ॥

अत्राह—**स्वो भाव इत्यादि** । स्वो भावः स्वभाव इत्यन्वर्थयोगात्, पार्थिवद्रव्यस्यैवात्मीया सत्ता अबाद्यसत्त्वं वर्त्तते, न धर्मान्तरमित्येवं, एकस्वभावतैव पार्थिवद्रव्यसत्त्वस्येति चेत् । एतदाशङ्क्याह— **नेत्यादि** । न नैतदेवं, ततः पार्थिवद्रव्यात् सदेकान्तैकस्वभावात्, सदसत्प्रत्ययासिद्धेः सच्चाऽसच्च सदसती तयोः प्रत्ययौ तदसिद्धेः। कथमित्याह— **द्वयनिमित्ताभावात्** द्वयोः सदसत्प्रत्यययोर्निमित्ताभावात्, पार्थिवद्रव्ये सदेकान्तैकस्वभावतयैवेति प्रक्रमः । नैवातो यथोदितं प्रत्ययद्वयमित्याशङ्कापोहायाह— **अस्य चानुभवसिद्धत्वात्** । अस्य च सदसत्प्रत्ययद्वयस्य, अनुभवसिद्धत्वात् पार्थिवद्रव्ये हि तद्रूपतया सदनुभवः, अबादिरूपतया चासदनुभवः प्रतिसत्त्वं प्रतिष्ठितः । विकल्परूपोऽयमयुगपच्चेत्यादौ तु स्वयमेव वक्ष्यत्युपरिष्टाद् निर्विकल्पकविचारे। अत्राह— **तदेवेत्यादि** । तदेव प्रक्रमात् पार्थिवद्रव्यं पार्थिवद्रव्यसत्त्वं वा, तदितरविविक्तताविशिष्टं तदितरे अबादयः अबादिसत्त्वं वा तद्विविक्तताविशिष्टं तद्राहितताविशिष्टं, सद्भवति । किमित्याह— **सदसत्प्रत्ययनिमित्तं** तत्त्वत एकरूपमेवेत्याभिप्रायः, इत्येवं, चेन्मन्यसे। एतदाशङ्क्याह—**नेत्यादि** । न नैतदेवम् । कुत इत्याह—**विचाराक्षमत्वात्** । कथमित्याह— **तदितरेत्यादि** । तदितरविविक्ततायाउक्तलक्षणायाः, तदव्यतिरेकेण पार्थिवद्रव्यसत्त्वाव्यतिरेकेण हेतुना, वस्तुतः परमार्थतः, तन्मात्रत्वात् पार्थिवद्रव्यसत्त्वमात्रत्वात् । ततः

किमित्याह- तनश्चेत्यादि । ततश्चैवं च सति, सर्वथा सर्वैः प्रकारैः, अभिन्ननिमित्तत्वे सति, पार्थिवद्रव्यसत्त्वस्यैकान्तेनैकरूपतया, सदसत्प्रत्ययानुपपत्तिरुभयनिमित्ताभावादिति हृदयम् । इत्थं चैतदङ्गीकर्त्तव्यम् । अन्यथैवमनभ्युपगमे, हेतुभेदेन फलभेदाभ्युपगमविरोधः अत्रैव हेतुभेदमन्तरेणापि फलभेदोपपत्तेः; भिन्नौ हि सदसत्प्रत्ययौ, एवं च "अयमेव भेदो भेदहेतुर्वा भावानां यदुत विरुद्धधर्माध्यासः कारणभेदश्च" इति वचनमात्रम् । तत्तदित्यादि । तत पार्थिवद्रव्यसत्त्वं, तदुभयजननैकस्वभावं सदसत्प्रत्ययोभयजननैकस्वभावम्, इत्येवं, चेद् मन्यसे । एतदाशङ्क्याह- नेत्यादि । न नैतदेवम् । कुत इत्याह-उभयोः सदसत्प्रत्ययोः, उभयरूपतापत्तेः सदसद्रूपतयोभयरूपतापत्तेः, उभयजननैकस्वभावाद्धेतोर्द्वयोरपि भावादित्यर्थः । अत्राह- असङ्कीर्णेत्यादि । असङ्कीर्णं च तदुभयं च सदसत्प्रत्ययोभयं तज्जननैकः स्वभावो यस्य तत् तथा, तत्पार्थिवद्रव्यसत्त्वमिति वर्त्तते, ततश्च यथोक्तदोषाभावः; इत्येवं, चेन्मन्यसे । एतदाशङ्क्याह- नेत्यादि । न नैतदेवम् । कुत इत्याह-युक्त्यनुपपत्तेः। कथमित्याह- असङ्कीर्णेत्यादि। असङ्कीर्णोभयभावे विभिन्नसदसत्प्रत्ययोभयभावे, पार्थिवद्रव्यसत्त्वादेरिति प्रक्रमः । किमित्याह- बलात् सामर्थ्येन, तत्स्वभावभेदप्रसङ्गात् तस्य पार्थिवद्रव्यसत्त्वस्य स्वभावभेदापत्तेः । एतद्भावनायैवाह- तथाहीत्यादि । तथाहीत्युपप्रदर्शने, यतः स्वभावतः कारणगतात्, जातमेकं सत्प्रत्ययादि कार्यं, नान्यदसत्प्रत्ययादि, ततः स्वभावाद्, भवेत् । किमित्यत आह- कृत्स्नं संपूर्ण, प्रतीत्याश्रित्य, तं स्वभावं, भूतिभावत्वात् उत्पत्तिस्वभावत्वादेकस्य कार्यस्य, तत्स्वरूपवत् अधिकृतैककार्यस्वरूपवत्, न हि तदन्यत्; न सत्प्रत्ययोऽसत्प्रत्ययस्तदभिन्नहेतुजश्चेति चित्रम् ॥१॥ आह-अन्यच्चेत्यादि । अन्यच्च कार्यान्तरं च, एवंविधं चेति कृत्स्नं प्रतीत्य तं भूतिभावं चेति, यदि स्यात्तदि भवेत्, किं विरुध्यते ? । अत्रोत्तरमाह- तत्स्वभावस्य कारणगतस्य, कार्त्स्न्येन सर्वात्मना, हेतुत्वं प्रतीत्योत्पादापेक्षया, प्रथमं प्रति आद्यं कार्यं प्रति

विरुध्यते, तत्रैव सर्वात्मनाऽस्योपयोगादिति ॥२॥ एतदेवाह—**कार्त्स्न्येने-त्यादि** कार्त्स्न्येन सर्वात्मना, तस्य कारणगतस्य स्वभावस्य, हेतुत्वे एकं कार्यं प्रति कारणत्वे, तत्र कार्ये, वीर्योपयोगतः प्रतीत्य समुत्पादेन, कुतोऽन्यभावः कुतः स्वभावात् कार्यान्तरोत्पादः?, भावे वा अन्यस्य कार्यान्तरस्य तत एव स्वभावात्, सर्वतद्वीर्यतः सर्वस्मात् तत्सामर्थ्यात्, भव उत्पादः, कुतोऽन्यस्य तस्य चेति ? ॥३॥ अत्रैव निदर्शनमाह—**सर्वे-त्यादिना** । सर्वस्मात् तद्वीर्यात् कारणगतात् स्वभावसामर्थ्यात् तद्भावे विवक्षितकार्यभावे। किमित्याह—**सेतिकाजन्यतृप्तिवत्** इति निदर्शनम्। तत एव सेतिकातः, न सा तृप्तिरन्यस्य, कार्त्स्न्येन तस्यास्तत्रोपयोगात्। अथेष्यत इत्याह— **तद्देशात्** सेतिकादेशात्, अन्यथा तु सा तृप्तिराद्यस्येतरस्य च, यद्यन्यस्यापि स्यात् एकान्तेनैकरूपाया न कार्त्स्न्येन द्वयोरुपयोग इति भावना ॥४॥ अवधारणद्वारेणाधिकृतदोषपरिजिहीर्षयाह—**कार्त्स्न्येनेत्यादि** । कार्त्स्न्येनैव नाकार्त्स्न्येन, अस्याऽधिकृतकारणगतस्वभावस्य, तत्कर्तृ विवक्षितकार्यकर्तृ, वीर्यं सामर्थ्यं, तस्यैव विवक्षितकार्यस्य, किंतु न कर्तृ किं तर्ह्यन्यस्यापि, तत्र तु तदकर्तृ न भवति, अयोगव्यवच्छेदमात्रं न पुनरन्ययोगव्यवच्छेदः । युक्तस्ततोऽन्यभावोऽपि अन्ययोगाव्यवच्छेदात्तत एव। एतदाशङ्क्याह—**सेतिकाज्ञाततः** सेतिकोदाहरणात्, न हि नैव युक्तस्ततोऽन्यभाव एव ॥ ५ ॥ एतद्भावनायैवाह— **नावधारणेत्यादि** नावधारणसामर्थ्यात् शाब्दन्यायानुगतात्, वस्तु तादात्म्यमुज्झति तदात्मत्वं परित्यजति । कुत इत्याह— **उक्तावधारणेऽपि** सति, एकतृप्तये हि एकतृप्त्यर्थमेव, उक्तसेतिका तथा हि— अत्राप्येवमवधारणं कर्तुं शक्यत एव—कार्त्स्न्येनैव सेतिकैकतृप्तिजननस्वभावा, एकतृप्तिजननस्वभावैवेत्येतत्तु न । न चैवमपि सा कार्त्स्न्येनैकतृप्तिं विधायान्यस्यापि विधत्ते, न सा तत्त्वत उभयतृप्तिजननैकस्वभावेति कोऽत्रापवादहेतुः ?, तस्या एवातत्स्वभावता, कथमिदं ज्ञायते?, तथाविधकार्यद्वयाभावेन, तदेकान्तैकरूपतायामयमेवायुक्तः, भावे वाऽस्य प्रस्तुतहेतुस्वभावादपि तद्भा-

वोऽस्तु, एकरूपत्वाविशेषादित्यलं प्रसङ्गेन ॥ ६ ॥ एवं **नाकारण-मित्यादि** । नाकारणं यतः यस्मात्, कार्यं सदाभावादिप्रसङ्गात्, अन्यकारणकारणं नैकान्तेनाऽत एव हेतोः, एवं चैतदङ्गीकर्त्तव्यम् । इत्याह— **अन्यथा** एवमनभ्युपगमे, न व्यवस्था स्यान्नियमवती, कार्यकारणयोः काचन इदमस्य कारणमिदमस्य कार्यमित्येवं, तदभावेऽपि तत्त्वतस्तदुत्पत्तेरिति ॥ ७ ॥ **ततश्चेत्यादि** । ततश्च कार्यनानात्वं कार्यभेदलक्षणं, सर्वथा कारणैकतां तथाविधैकस्वभावरूपाम् । किमित्याह— **बाधते** निराकरोति, अनेकतायां च कारणस्य, स्थिताऽनेकस्वभावता तत्स्वभावभेदेन, कार्यभेदोपपत्तेः ॥ ८ ॥ **एतेनेत्यादि** । एतेनानन्तरोदितेन, एकस्वभावोऽपि भावः, तत्स्वभावत्वतः कारणात्, परैः बौद्धैः, य इष्टोऽभ्युपगतः, अनेकफलकृत् अनेककार्यकरणशीलः, भावः सोऽपि निराकृतः ॥ ९ ॥ एतदेव प्रकटयति— **एको हीत्यादिना** । एको यस्मात्, अनेकजननस्वभावस्तद्विचित्रतां स्वभावविचित्रतां, ऋते विना, न युज्यते यस्मात् उक्तदोषप्रसङ्गतः ॥ १० ॥ अत्रैवोपचयमाह— **तथेत्यादिना** । तथादर्शनतोऽप्यनेकविज्ञानजनकत्वेन, अस्य भावस्य, तत्स्वभावत्वकल्पना अनेककार्यकरणैकस्वभावत्वकल्पना । किमित्याह— **अत एव तथादर्शनात्**, स्थिरत्वादिसिद्धिप्रसङ्गात् कारणात्, न सङ्गता ११ आह— **युक्तेत्यादि** युक्त्या क्रमयौगपद्याभ्यामर्थक्रियाविरोधभावलक्षणया, न युज्यते स्थैर्यं भावानाम् । अत्रोत्तरम्—कया वा युक्त्या, एकस्वभावतो भावात्, नानाकार्यसमुत्पादो युज्यते ?, स्वात्मना चिन्त्यतामिदं न सर्वथा तत्स्वभावभेदमन्तरेण, तथानेकविज्ञानजनकत्वमपि दिगादिभेदेन तथाप्रतीत्ययोगादिति ॥ १२ ॥ आह— **यथेत्यादि** । यथानेकस्वभावं तत् कार्त्स्न्येनैवैकत्रोपयोगमधिकृत्य सर्वेषां सर्वदर्शिनां वीतरागाणां, करोत्यनेकं विज्ञानं, यावन्तस्ते, अन्यथा तदसर्वदर्शित्वप्रसङ्गात्, इदमधिकृतं वस्त्वेकस्वभावमेव, इत्थं कथं न ते तव करोत्यनेकं विज्ञानं कार्त्स्न्येनोपयोगाविशेषात्? इति ॥ १३ ॥ अत्रोत्तरम्— **स्वरूपमित्यादि** । स्वरूपमेव सांसिद्धिकं सर्वेषां सर्वज्ञानां वीतरा-

गाणाम्, तथाविधं तत्कार्त्स्न्यग्रहणप्रकारं, विज्ञानं न पुनस्तत्तेन वस्तुना, तत्त्वतः परमार्थतः, क्रियते यतः; अतो नेदमित्थं ममेति योजना॥१४॥ इत्थं चैतदङ्गीकर्त्तव्यमित्याह– अतीतादेरित्यादि। अतीतादेर्भावस्य, असत्त्वेन हेतुना, न स्याद् ग्रहणम्, अन्यथैवमनभ्युपगमे, न ह्यसद् ज्ञानकर्तृ। तथा चाह– तस्यापि अतीतादेः, ज्ञानकर्तृत्वेऽभ्युपगम्यमाने, अतीतत्वादिविरोधतः कारणात्, स्वरूपमेव सर्वेषामित्यादिक्रियायोगः । अतः सदसत्प्रत्ययभेदादनेकरूपं वस्त्विति स्थितम्॥ १५ ॥

न च पार्थिवद्रव्यसत्त्वप्रत्यय एवाबाद्यसत्त्वप्रत्ययः, तथाऽप्रतीतेः । असतोऽनुपाख्यत्वेन प्रत्ययहेतुत्वानुपपत्तिरिति चेत् । न । सदनुवेधेन सर्वथानुपाख्यत्वासिद्धेः, असत्प्रत्ययाविरोधाच्च । असदननुविद्धस्य च सतस्तन्मात्रत्वाद्विशेषानुपपत्तेरितरेतरानुवेध इति कुत एकस्वभावत्वसिद्धिः ? । स्यादेतत् तत्राऽबादिद्रव्यासत्त्वस्य परिकल्पितत्वात् यथोक्तदोषाभाव इति। सोऽयं गड्डप्रवेशेऽक्षितारकाविनिर्गमन्यायः। तथाहि–तत्राबादिद्रव्यासत्त्वस्य परिकल्पितत्वात् स्वसत्त्वासत्त्ववदसत्त्वात् तद्रूपेणाप्यस्तित्वप्रसङ्गः, अनिष्टं चैतदिति । स्यादेतत् पार्थिवद्रव्यसत्त्वव्यतिरिक्तमबाद्यसत्त्वं परिकल्पितम्, पार्थिवद्रव्यसत्त्वमेव पुनरबाद्यसत्त्वस्वभावमिष्यत एवेत्यतोऽनपराध इति । अहो ! दुरन्तः स्वदर्शनानुरागः, प्रत्युक्तमपि नावधारयति। यतो- न च तद्येनैव स्वभावेन पार्थिवद्रव्यत्वेन सत्, तेनैवाबादिद्रव्यत्वेनासत्, इत्यादि तदेवावर्त्तते; इत्यलं स्वदर्शनानुरागाकृष्टचेतसा सह प्रसङ्गेनेति ॥

न चेत्यादि । न च पार्थिवद्रव्यसत्त्वप्रत्यय एव सर्वथैकरूपतया निरंशः, अबाद्यसत्त्वप्रत्ययः, तथा तदेकरूपतयाऽप्रतीतेः, किन्तु प्रत्यान्तरमयम् । अत्राह– असत इत्यादि । असतोऽनुपाख्यत्वेन हेतुना, प्रत्ययहेतुत्वानुपपत्तिरतः कथमबाद्यसत्त्वप्रत्ययः ?, इत्येवं, चेन्मन्यसे ।

एतदाशङ्क्याह–नेत्यादि । न नैतदेवम् । कुत इत्याह– **सदनुवेधेन** पार्थिवद्रव्यसत्त्वानुवेधेन हेतुना, सर्वथा सर्वैः प्रकारैः, अनुपपत्त्यन्तरासिद्धेरबाद्यसत्त्वस्य । उपपत्त्यन्तरमाह– **असत्प्रत्ययाविरोधाच्च** । असत इति प्रक्रमः । सत इवासतोऽसत्प्रत्ययभाव इति भावः। **सदनुवेधेनेत्यादि** । मौलं हेतुं समर्थयन्नाह– **असदित्यादि** । असदननुविद्धस्य च सतः पार्थिवद्रव्यसत्त्वादेः, तन्मात्रत्वात् सन्मात्रत्वात्, विशेषानुपपत्तेः कारणात्, इतरेतरानुवेधः सदसतोः, इत्येवं, कुत एकस्वभावत्वसिद्धिः ? नैवेत्यर्थः । **स्यादेतदित्यादि** । स्यादेतदथैवं मन्यसे, तत्र पार्थिवद्रव्यसत्त्वे, अबादिद्रव्यासत्त्वस्य परिकल्पितत्वात् कारणात् । किमित्याह— **यथोक्तदोषाभाव इति** उभयरूपत्वाभावः परमार्थतस्तदसत्त्वादिति । एतदाशङ्क्याह– **सोऽयमित्यादि** । सोऽयं गड्डुप्रवेशेऽक्षितारकाविनिर्गमन्यायः प्रस्तुतदोषपरिहारेणाधिकतरदोषान्तरापत्तिरित्यर्थः । एतदेवाह– **तथाहीत्यादिना** । तथाहि–तत्र पार्थिवद्रव्यसत्त्वे, अबादिद्रव्यसत्त्वस्य परिकल्पितत्वात् परमार्थतः स्वसत्त्वासत्त्ववदसत्त्वात् । किमित्याह– **तद्रूपेणापि** अबादिद्रव्यसत्त्वरूपेणापि, अस्तित्वप्रसङ्गः पार्थिवद्रव्यसत्त्वस्य, अनिष्टं चैतदिति तथा हि– न तत्र स्वसत्त्वासत्त्वमिति स्वसत्त्वम्, एवमबाद्यसत्त्वाभावे स्यात् तत्सत्त्वम्, अन्यथा तदभावाभाव इति भावना । **स्यादेतदित्यादि** । स्यादेतदथैवं मन्यसे, पार्थिवद्रव्यसत्त्वव्यतिरिक्तं धर्मान्तरम्, अबाद्यसत्त्वं परिकल्पितं, पार्थिवद्रव्यसत्त्वमेव पुनरेकरूपं, अबाद्यसत्त्वस्वभावं वस्तुस्थित्या, इष्यत एवेत्यतोऽस्मात् कारणात्, अनपराध इति नास्ति कश्चिद्दोषः । एतदाशङ्क्याह– **अहो ! दुरन्तः स्वदर्शनानुरागः** । कथमित्याह– **प्रत्युक्तमपि नावधारयति** । एतत्सामर्थ्यात् । एतदेवाह– **यत इत्यादिना** । यतो न च तथैव स्वभावेन पार्थिवद्रव्यत्वेन सन्, तेनैवाबादिद्रव्यत्वेनासन्, इत्यादि तदेवावर्त्तते पूर्वोक्तं चक्रकम्, इत्यलं स्वदर्शनानुरागाकृष्टचेतसा सह प्रसङ्गेन नैव प्रज्ञापनाविषयः ॥

“अपरस्त्वाह—सदसद्रूपं वास्त्वित्यत्रासत्पक्षे प्रसज्यप्रतिषेधो वा स्यात्, पर्युदासो वा; किञ्चातः, उभयथापि दोषः। तथाहि—यदि सन्न भवतीत्यसत् सन्निवृत्तिमात्रं निरुपाख्यमसत्, ततश्च तस्य प्रमाणगोचरातीतत्वाद् वस्तुधर्मत्वानुपपत्तिः, अभ्युपगमे वा वस्तुन एव निरुपाख्यत्वप्रसङ्गः । तथाहि—न निरुपाख्यस्वभावं सोपाख्यं भवितुमर्हति । अथ सतोऽन्यदसत् सदन्तरमेवासदिति, एवमपि तस्य सदात्मकत्वादेव सदसद्रूपत्वानुपपत्तिः । तथाहि— न सत् सदन्तरात्मकमिति सचेतसो वक्तुं युज्यत इति । एतदप्ययुक्तम्, भगवदर्हन्मतापरिज्ञानात् । भगवदर्हन्मतं हि वस्त्वेव सदसद्रूपतयोभयात्मकं, न सत्त्वाननुविद्धमसत्त्वं नाम तत्र, यदपेक्षयैतदुभयरूपमिति । उक्तं च वादिमुख्येन—स्वपरसत्त्वव्युदासोपादानापाद्यं हि वस्तुनो वस्तुत्वम्, अतो यद्यपि सन्न भवतीत्यसत्, तथापि परद्रव्यादिरूपेण सतः प्रतिषेधात् तस्य च तत्रासत्त्वात् तत्स्वरूपसत्त्वानुवेधात् न निरुपाख्यमेव तत्। इति प्रसज्यप्रतिषेधपक्षोदितदोषाभावः” ॥

अपरस्त्वाह—सदसद्रूपं वस्त्वित्यत्रासत्पक्षे प्रसज्यप्रतिषेधो वा स्यात् सद् न भवतीत्यसत्, पर्युदासो वा सतोऽन्यदसदिति, किंचातइत्याह— **उभयथापि दोषः** । कथमित्याह— **तथाहीत्यादि** । तथाहि— यदि सद् न भवतीत्यसत्, किमुक्तं भवति—सन्निवृत्तिमात्रं निरूपाख्यमसत् प्रसज्यप्रतिषेधरूपम् । ततः किमित्याह— **ततश्च तस्य** असतः, प्रमाणगोचरातीतत्वात् कारणात्, वस्तुधर्मत्वानुपपत्तिः । अभ्युपगमे वाऽसतो वस्तुधर्मत्वस्य । किमित्याह— **वस्तुन एव निरुपाख्यत्वप्रसङ्गः । तथाहि— न निरुपाख्यस्वभावं** न तुच्छधर्मकं, सोपाख्यं भवितुमर्हति अतुच्छं भावितुमर्हति । द्वितीयं विकल्पमधिकृत्याह— **अथेत्यादि** । अथ सतोऽन्यदसत् सदन्तरमेवासत् पर्युदासरूपम्, इत्येवमपि तस्यासतः, सदात्मकत्वादेव कारणात्, सदसद्रूपत्वानुपपत्ति-

वस्तुनः । तथाहीत्यादि । तथाहि—न सत् सदन्तरात्मकमित्येवं, सचे-
तसो वक्तुं युज्यते, प्राप्नोति चैतदस्मिन् पक्षेऽसतोऽपि सदन्तरत्वादिति ।
अत्राह— एतदप्ययुक्तम् । कुत इत्याह— भगवदर्हन्मतापरिज्ञानात् ।
कथमपरिज्ञानमित्याह— भगवदर्हन्मतं हि यस्मात्, वस्त्वेवात्मघटादि,
सदसद्रूपतयोभयात्मकं वर्त्तते, न सत्त्वाननुविद्धमसत्त्वं नाम, तत्र
वस्तुनि, तदपेक्षयैतदुभयरूपं वस्त्विति । उक्तं च वादिमुख्येन मल्लवादिना
सम्मतौ— स्वपरेत्यादि । स्वपरसत्त्वयोर्यथायोगं ये व्युदासोपादाने
ताभ्यामापादिते व्यवहारविषयतयेत्येवंभूतमेव, वस्तुनो वस्तुत्वम्,
अतो यद्यपि सत्र भवतीत्यसत् प्रसज्यप्रतिषेधरूपम्, तथापि परद्र-
व्यादिरूपेण सतः प्रतिषेधात् तस्य च परद्रव्यादिरूपेण सतः, तत्र
विवक्षितसत्त्वे, असत्त्वात्, तत्स्वरूपसत्त्वानुवेधात् तत्स्वरूपस्य तत्प्र-
तिषेधायातोऽसत्त्वरूपस्य सत्त्वानुवेधाद्विवक्षितसत्त्वानुवेधात् कारणात्,
न निरुपाख्यमेव तुच्छमेव, तदसत्त्वम् । इत्येवं, प्रसज्यप्रतिषेधपक्षोदि-
तदोषाभावः ॥

पर्युदासप्रतिषेधपक्षदोषस्त्वत्र व्यतिकरेऽनभ्युपगमादेव न
नः क्षतिमावहति, एतदुक्तं भवति वस्त्वेव तत् सदसदात्मकं, न
तत्र स्वरूपसत्त्वपृथग्भूतं पररूपासत्त्वम्, न च पररूपासत्त्वासं-
पृक्तं स्वरूपसत्त्वम् । न चानयोरेकत्वमेव, अविगानतः सम्य-
गुभयोपलब्धेः । न च नानात्वमेव, तद्व्यवस्थायोगात् तथानु-
पलब्धेः । इत्यन्योन्यानुविद्धं भेदाभेदवृत्ति तत्स्वभावं विशि-
ष्टमुभयमेव तत्, अन्यथा वस्तूनां वैशिष्ट्यानुपपत्तिरिति ।
एतेन 'अवादेर्नियतदेशस्वरूपव्यतिरेकेण सर्वत्रासत्त्वात्, तस्य च
पार्थिवद्रव्यसत्त्वेनानुवेधाभ्युपगमात्, तद्व्याप्तेर्घटस्य प्रायो विभु-
त्वप्रसङ्गः' इत्येतदपि कुशाग्रीयबुद्धिपरिचोदितं परिहृतमवगन्त-
व्यम् । वस्त्वेव तत्सदसदात्मकमित्यादेर्ग्रन्थस्यान्यथा भावा-
र्थायोगात् । अथवा विश्वजगदन्तर्गतानां सकलवस्तुसत्त्वानामेव
तदसत्त्वानुवेधः, अन्यथा स्वस्वरूपवत्तेषु तत्सत्त्वापत्तिः; न च

वस्त्वन्तरेणाप्यनुवेध इष्यते, इति न विभुत्वप्रसङ्गः । न च तद्-सत्त्वेनाऽननुवेधस्तस्य, तदन्यानात्मकेनानुवेधात् । न चेत्थं तत्सदेशतापत्तिः, तदन्येषामेव तत्त्वतस्तदात्मकत्वात् । न चात एव तत्सद्रूपतैव, असद्बुद्ध्याऽवगमात् । न चातदनु-वेधतस्तथा तदसत्त्वप्रतीतिहेतुता, अन्यगतनिजासत्त्वेन व्यभि-चारात् । तथाहि—नान्यगतं तदसत्त्वं तत्रासत्त्वप्रतीतिकारणं तेनाननुवेधादिति । एवमन्यदपि कुचोद्यमनया दिशा परिहर्त्त-व्यमिति ॥

पर्युदासप्रतिषेधपक्षदोषस्त्वत्र व्यतिकरे उभयरूपवस्तुचिन्ताधि-कारे, अनभ्युपगमादेव कारणात्, न नः नास्माकं, क्षतिमावहति । भावार्थमाह— **एतदुक्तं भवति—वस्त्वेव तत् सदसदात्मकं** शबलम्, न तत्र वस्तुनि, स्वरूपसत्त्वपृथग्भूतमन्यदेव, पररूपासत्त्वम्; न च पर-रूपासत्त्वाऽसंपृक्तं स्वरूपसत्त्वं केवलम् । न चानयोः स्वरूपसत्त्वपर-रूपासत्त्वयोः, एकत्वमेव सर्वथा, अविगानतोऽविगानेन, सम्यक् तद्-भावभावित्वनीतितः, उभयोपलब्धेरुक्तवत्सदसत्प्रत्ययभावादिति । न च नानात्वमेवैकान्तेनानयोरिति, वव्यवस्थायोगात् तयोः स्वरूप-सत्त्वपररूपासत्त्वयोर्व्यवस्थायोगात्, तथानुपलब्धेर्नानात्वेनादर्शनात् । इत्येवम्, अन्योन्यानुविद्धं मेचकमणिवर्णकल्पनया, भेदाभेदवृत्ति एकान्तभेदाद्यपोहेन, तत्स्वभावं भेदाभेदवृत्तिस्वभावं, विशिष्टमि-त्थमेव नियतं तथास्वभावतया, उभयमेव स्वरूपसत्त्वपररूपासत्त्वो-भयमेव, तद् वस्तु । अन्यथैवमनभ्युपगमे, वस्तूनां घटादीनां, वैशिष्ट्यानुपपत्तिरिति । एतेनोक्तवदुभयरूपत्वस्य व्यवस्थापनेन, अबा-देर्नियतदेशस्वरूपव्यतिरेकेण सर्वत्राऽसत्त्वात् तथाहि— यत्रैवाबाद-यस्तत्रैव ते, अन्यत्र तु तदभावः; तस्य चाबाद्यसत्त्वस्य, पार्थिवद्रव्य-सत्त्वेनानुवेधाभ्युपगमात् कारणात् । कुत इत्याह— **तद्व्याप्तेः** पार्थिव-द्रव्यसत्त्वव्याप्तेः । किमित्याह— **घटस्य प्रायो** बाहुल्येन, अबादेर्नि-यतदेशस्वरूपं विहाय; विभुत्वप्रसङ्गः सर्वगतत्वापत्तिः, यथोदित-

पार्थिवद्रव्यसत्त्वात्मकत्वाद् घटस्येति भावः इति । एतदपि चोद्यं, कुशाग्रीयबुद्धिपरिचोदितं सूक्ष्मबुद्धिपरिचोदितम्, परिहृतमवगन्तव्यम् । कुत इत्याह– **वस्त्वेव तत् सदसदात्मकमित्यादेर्ग्रन्थस्य** अनन्तरोदितस्य, अन्यथा प्रकारान्तरेण, भावार्थायोगादिति भावनीयमेतत् । परिहारान्तरमाह– **अथवेत्यादिना** । अथवा विश्वजगदन्तर्गतानां सकलवस्तुसत्त्वानामेव । किमित्याह– **तदसत्त्वानुवेधः** अबाद्यसत्त्वानुवेधः । इत्थं चैतदङ्गीकर्त्तव्यमित्याह– **अन्यथेत्यादि** । अन्यथैवमनभ्युपगमे, स्वस्वरूपवदिति दृष्टान्तः अबादीनामात्मीय इव स्वरूपे तदसत्त्वाननुवेधात् कारणात्, तेषु सकलवस्तुसत्त्वेषु, तत्सत्त्वापत्तिरबादिसत्त्वापत्तिः, न चैवम्, इत्यतस्तदसत्त्वानुवेधस्तेषामिति स्थितम् । यदि नामैवं ततः किमित्याह– **न चेत्यादि** । न च वस्त्वन्तरेणापि सह, अनुवेध इष्यते पार्थिवद्रव्यसत्त्वस्येति प्रक्रमः । इत्येवम्, न विभुत्वप्रसङ्गः घटस्येति वर्त्तते । **न चेत्यादि** । न च तदसत्त्वेनाबाद्यसत्त्वेन, अननुवेधस्तस्य पार्थिवद्रव्यसत्त्वस्य । कुत इत्याह– **तदन्यानात्मकेन** अपरासंसृष्टेन, अनुवेधादसत्त्वेन । **न चेत्यादि** । न चेत्थमेवम्, तत्सदेशतापत्तिः अबाद्यसत्त्वसदेशतापत्तिः । कुत इत्याह– **तदन्येषामेव** । वस्तुसत्त्वानाम्, तत्त्वतः परमार्थेन, तदात्मकत्वात् अबाद्यसत्त्वात्मकत्वात्, न पुनरबाद्यसत्त्वं केवलं नाम यस्य सदेशतापत्तिरित्यर्थः । **न चेत्यादि** । न चात एव कारणात्, तत्सद्रूपतैव तदन्येषां वस्तुसत्त्वानां सद्रूपतैव । कुत इत्याह–**असद्बुद्ध्या** प्रक्रमादबाद्यसत्त्वविषयया, अवगमात् परिच्छेदात्; न ह्यतत्स्वभावानां तया तथाऽवगमः शुक्लानामिव नीलतयेति भावनीयम् । **न चेत्यादि** । न चातदनुवेधत अबाद्यसत्त्वाननुवेधतः, सर्वथेतरेतररूपापत्त्या, तदसत्त्वप्रतीतिहेतुता तेषामन्यवस्तुसत्त्वानां अबाद्यसत्त्वप्रतीतिकारणतेति भावः । कुत इत्याह— **अन्यगतनिजासत्त्वेन** तथा तदननुवेधतः कारणाद्, व्यभिचारात् । एतद्भावनायैवाह– **तथाहीत्यादि** । तथाहीत्युपप्रदर्शने, नान्यगतं पृथिव्यादिगतं, तदसत्त्वमबाद्यसत्त्वम्, तत्राबादौ, असत्त्वप्रतीतिकारणम् । कुत-

इत्याह-- **तेनाननुवेधात्** तेनाबाध्यसत्त्वेन, अननुवेधाद्धेतोः, अतोऽबाध्यसत्त्वेनानुवेधोऽन्यवस्तुसत्त्वानाम्, अन्यथा त्वबादिसत्त्ववत्तदसत्त्वप्रतीत्यभाव इति भावना। इत्येवमन्यदपि कुचोद्यमनेकान्ते, अनया दिशा परिहर्त्तव्यमिति ॥

**ततश्चैवं न सर्वथा सत्त्वमसत्त्वपरिहारेण व्यवस्थितम्, न चासत्त्वं सत्त्वपरिहारेण । न चानयोराविशेष एव, भिन्ननिमित्तत्वात् । तथाहि–स्वद्रव्यादिरूपेण सत्, परद्रव्यादिरूपेण चासदित्युक्तम् । ततश्च तद्यत एव सत्, अत एवासत्, परद्रव्यादिरूपासत्त्वे सति स्वद्रव्यादिरूपेण सत्त्वात् । यत एव चासत्, अत एव सत्, स्वद्रव्यादिरूपसत्त्वे सति परद्रव्यादिरूपेणासत्त्वात् । अत एव चैकत्र सदसत्त्वयोर्विरोधोऽपि न सम्भवति, भिन्ननिमित्तत्वात्, स्वद्रव्यपरद्रव्यादीनां सदसद्धेतुत्वात्, अनुभवसिद्धत्वाच्च । तथाहि– स्वपररूपानुवृत्तव्यावृत्तरूपमेव तद् वस्त्वनुभूयते । स्यादाशङ्का स्वरूपाव्यावृत्तिरेव पररूपव्यावृत्तिरिति । एषाप्ययुक्ता, विहितोत्तरत्वात् । यस्मादेवम्, तस्मात् समुत्सारितपक्षपातैर्न्यायविद्भिर्युक्तियुक्तत्वात् सदसद्रूपं वस्त्वङ्गीकर्त्तव्यमिति । आह च–**

**"यस्मात् सत्त्वमसत्त्वं च न विरुद्धं मिथो द्वयम् ।
वस्त्वेकं सदसद्रूपं ननु तत् किं न युज्यते ?"॥ १**

**ततश्चेत्यादि** । ततश्चैवमुक्तेन प्रकारेण, न सर्वथा सत्त्वमसत्त्वपरिहारेण व्यवस्थितम्, न चासत्त्वं सत्त्वपरिहारेण; व्यवस्थितमिति वर्तते । न चानयोः सत्त्वासत्त्वयोः, अविशेष एवाऽभेद एव । कुत इत्याह– **भिन्ननिमित्तत्वात्** । एतदेव भावयति– **तथाहीत्यादिना** । तथाहि– स्वद्रव्यादिरूपेण सत् परद्रव्यादिरूपेण चासदित्युक्तमिति निमित्तभेदः। **ततश्चेत्यादि** । ततश्च तद्वस्तु, यत एव सत्, अत एवासत् । कुत इत्याह– **परद्रव्यादिरूपासत्त्वे सति** तद्-

नात्मकत्वेन, स्वद्रव्यादिरूपेण सत्त्वात् । तथा, यत एव चासत्, अत एव सत्; तदिति प्रक्रमः । युक्तिमाह— स्वद्रव्यादिरूपसत्त्वे सति भावात्मकत्वेन, परद्रव्यादिरूपेणाऽसत्त्वात् । अत एवेत्यादि । अत एव च कारणात्, एकत्र वस्तुनि, सदसत्त्वयोर्विरोधोऽपि न संभवति भिन्ननिमित्तत्वात् कारणात्, स्वद्रव्यपरद्रव्यादीनाम् । किमित्याह— सदसद्धेतुत्वात्, स्वद्रव्यादयः सत्त्वकल्पनाया निमित्तम्, परद्रव्यादयश्चासत्त्वकल्पनाया इति, तथा अनुभवसिद्धत्वाच्च; एकत्र सदसत्त्वयोर्विरोधोऽपि न संभवति । एतद्भावनायाह— तथाहीत्यादि । तथाहि—स्वपररूपाभ्यां यथासङ्ख्यं अव्यावृत्तव्यावृत्तरूपमेव तद्वस्त्वनुभूयते, अनुभवे च सद्बाधासंनेकरूपतायामिव को विरोधः ? । स्यादाशङ्केत्यादि । स्यादाशङ्का स्वरूपाव्यावृत्तिरेवैकरूपा, पररूपव्यावृत्तिरिति ।

आह च—

"सर्वे भावाः स्वभावेन स्वस्वभावव्यवस्थितेः ।
स्वभावपरभावाभ्यां यस्माद् व्यावृत्तिभागिनः ॥ १ ॥
तस्माद् यतो यतोऽर्थानां व्यावृत्तिस्तन्निबन्धनाः ।
जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः" ॥२॥ इत्यादि ॥

एषाऽप्ययुक्ता आशङ्का । कुत इत्याह— विहितोत्तरत्वात् न स्वरूपसत्त्वमेव पररूपासत्त्वमित्यादिना । अनन्तरोदितमपि श्लोकद्वयं सदसद्रूपवस्तुव्यवस्थापकमेव, तत्त्वतोऽन्यरूपाभावमन्तरेणान्यतोऽन्यव्यावृत्त्यसिद्धेः स्वव्यावृत्तिवद् व्यावृत्त्यन्तराभावे न प्रकल्पना बीजाभावादिति निर्लोठितमेतदर्थतः । यस्मादेवं तस्मात् समुत्सारितपक्षपातैर्न्यायविद्भिर्युक्तियुक्तत्वात् कारणात्, सदसद्रूपं वस्त्वङ्गीकर्त्तव्यमित्याह च— यस्मात् सत्त्वमसत्त्वं च । किमित्याह— न विरुद्धं मिथो द्वयम् । उक्तवदिति । वस्त्वेकं सदसद्रूपं शबलतया, ननु तत्किं न युज्यते ? युज्यत एव; एवं पूर्वपक्षश्लोकपरावर्त्तना ॥

यदप्युक्तम्–सदसद्रूपं वस्त्वभ्युपगच्छता सत्त्वमसत्त्वं च वस्तुधर्मतयाऽभ्युपगतं भवतीति। एतदिष्यत एव। यत्पुनरिदमुक्तम्-ततश्चात्राऽपि वक्तव्यं धर्मधर्मिणोः किं तावद् भेद इत्यादि। अत्रापि सर्वथा भेदपक्षोदितोऽभेदपक्षोदितश्च दोषोऽनभ्युपगमतिरस्कृतत्वादेव न नः क्षितिमावहति। भेदाभेदपक्षस्त्वभ्युपगम्यत एव। आह–नन्वत्रापि येनाकारेण भेदस्तेन भेद एवेत्यादि दूषणमुक्तम्, उक्तमिदम्; अयुक्तं तूक्तम्, भेदाभेदपक्षे तदसंभवात्। असंभवश्चान्योऽन्यव्याप्तिभावेनाऽस्य जात्यन्तरात्मकत्वात्, केवलभेदाभेदानुपपत्तेः। ततश्च येनाकारेण भेदस्तेन भेद एव, येन चाभेदस्तेनाभेद एव; इत्यत्यन्तपरित्यक्तानेकान्तवादविषयमेतत्, अभेदाऽननुविद्धस्य केवलभेदस्यासिद्धेः, भेदाऽननुविद्धस्य चाभेदस्येति॥

भूयोऽपि पूर्वपक्षग्रन्थमुपन्यस्य तत्परिहारमाह–यदप्युक्तमित्यादिना। यदप्युक्तं पूर्वपक्षग्रन्थे, सदसद्रूपं वस्त्वभ्युपगच्छता सत्त्वमसत्त्वं च वस्तुधर्मतयाऽभ्युपगतं भवतीत्येतदिष्यत एव, न ह्यभ्युपगमा एव बाधायै भवन्ति। यत् पुनरिदमुक्तं पूर्वपक्षग्रन्थ एव, ततश्चात्रापि वक्तव्यं धर्मधर्मिणोः किं तावद्भेद इत्यादि, अत्राप्युक्ते, सर्वथा भेदपक्षोदितोऽभेदपक्षोदितश्च दोषः। किमित्याह– अनभ्युपगमतिरस्कृतत्वादेव कारणात्, न नो नास्माकम्, क्षितिमावहति, भेदाभेदपक्षस्तु तृतीयः, अभ्युपगम्यत एव, अत्रापि नाभ्युपगमा एव बाधायै भवन्ति। आहेत्यादि परः। नन्वत्रापि भेदाभेदपक्षे, येनाकारेण भेदस्तेन भेद एवेत्यादि दूषणमुक्तं पूर्वपक्षग्रन्थ इति। अत्राह– उक्तमिदं दूषणम्, अयुक्तं तूक्तम्। कुत इत्याह–भेदाभेदपक्षे अस्मदभिमते, तदसम्भवात् उक्तदूषणासंभवात्, असंभवश्चोक्तदूषणस्य, अन्योन्यव्याप्तिभावेन हेतुना, अस्य भेदाभेदपक्षस्य, जात्यन्तरात्मकत्वात् केवलभेदाभेदानुपपत्तेः, न ह्यन्योन्याननुविद्धावेताविति जैनं दर्शनम्। ततश्चेत्यादि। ततश्चैवं च सति, येनाकारेण भेदस्तेन भेद एव येन चाभेद-

१ क्षि क्षये इत्यस्य क्तौ रूपम्।

स्तेनाभेद एवेत्येतत् पूर्वपक्षवचनमिति योगः । किमित्याह— अत्यन्तपरित्यक्तानेकान्तवादविषयं न तद्वाचकं ढौकतेऽपीति । कुत इत्याह— अभेदाननुविद्धस्य केवलभेदस्यासिद्धेः कारणात्, भेदाननुविद्धस्य चाभेदस्येत्यसिद्धेरेव, येनाकारेण भेदस्तेन भेद एवेत्यादिस्वत्र प्रवृत्तिनिमित्तशून्य एव शब्द इति भावनीयम् ॥

**यच्चोक्तम्--अथ येनैवाकारेण भेदस्तेनैवाभेद इत्यादि । तदप्यनेकान्तवादानाकर्णनसूचकम् । यतो न ह्येकेनैवाकारेण भेदाभेदावित्यनेकान्तनीतिः, सर्वथैकनिमित्तत्वे भेदाभेदद्वयानुपपत्तेः । किन्त्वेकधर्मिप्रतिबद्धत्वेऽपि धर्माणां मिथो भेदाद् धर्मिधर्मभावेन भेदः, अन्यथाऽन्यतररूपापत्त्या तद्भावानुपपत्तिः, प्रतीतिबाधिता चेयम् । मिथो भेदेऽपि चाशेषधर्माणां धर्मिणा व्याप्तेर्विशिष्टान्योऽन्यानुवेधतोऽभेदः, अन्यथा तस्येति सम्बन्धायोगात्, तद्धर्मिधर्मस्वभावत्वसङ्गस्यापि धर्मेभ्योऽन्यत्वे धर्मिणोऽसम्भवात् । ततश्च धर्माणामभ्यन्तरीकृतधर्मिस्वरूपत्वात् धर्मिणोऽपि चाभ्यन्तरीकृतधर्मस्वरूपत्वात् भेदाभेद इति ।**

यच्चोक्तं पूर्वपक्षग्रन्थ एव, अथ येनैवाकारेण भेदस्तेनैवाभेद इत्यादि, तदपि । किमित्याह— **अनेकान्तवादानाकर्णनसूचकं** वर्त्तते । अनाकर्णनमश्रवणम् । कथमित्याह— **यत** इत्यादि । यतो न ह्येकेनैवाकारेण भेदाभेदावित्यनेकान्तनीतिः । कुत इत्याह— **सर्वथैकनिमित्तत्वे भेदाभेदद्वयानुपपत्तेः** प्रतीतमेतत । किन्त्वेवमनेकान्तनीतिरित्याह— **एकधर्मिप्रतिबद्धत्वेऽपि** द्रव्यदेशानियततया, **धर्माणां** सत्त्वज्ञेयत्वादीनाम्, **मिथः** परस्परं, **भेदात्** कारणात्, **धर्मधर्मिभावेन** तथानुभवसिद्धेन, **भेदः**। इत्थं चैतदङ्गीकर्त्तव्यमित्याह— **अन्यथेत्यादि** । अन्यथैवमनभ्युपगमे, अन्यतररूपापत्त्या तद्भावानुपपत्तिः धर्मधर्मिभावानुपपत्तिः । अस्तु को दोषः ? इत्याशङ्क्याह— **प्रतीतिबाधिता चेयं** धर्मधर्मिभावानुपपत्तिः क्षयोपशमानुरूपं तथा तदुभयप्रतीतेः; तथा **मिथ इत्यादि** । **मिथो भेदेऽपि च** परस्परभेदेऽपि च, **अशेषधर्माणां** सत्त्वज्ञेयत्वादीनाम्,

धर्मिणा द्रव्येण, व्याप्तेः । किमित्याह– **विशिष्टान्योन्यानुवेधतः** कारणात्, अभेदः धर्म्मधर्मिणोरिति । इत्थं चैतदङ्गीकर्त्तव्यमित्याह– **अन्यथेत्यादि** । अन्यथैवमनभ्युपगमे, तस्येति सङ्गायोगात् तस्य धर्मिणो धर्मा इति संबन्धायोगात् । **तदित्यादि** तयोर्धर्मधर्मिणोः स्वभावत्वप्रसङ्गस्याऽपि स एव धर्मी तद्धर्मधर्मिस्वभावः, त एव च धर्मास्तद्धर्मिधर्मस्वभावा इत्येवम्भूतस्य । किमित्याह– **धर्मेभ्योऽन्यत्वे** सति, धर्मिणः सकाशादिति गम्यते । किमित्याह– **धर्मिणोऽसम्भवात्** । तद्धर्मधर्मिस्वभावत्वस्यापि धर्मत्वात् तस्य च ततो व्यतिरिक्तत्वेन धर्मिणो निःस्वभावत्वात् तस्येति संगायोगः । **ततश्चेत्यादि** । ततश्चैवं च सति, धर्माणामभ्यन्तरीकृतधर्मिस्वरूपत्वादितरेतरव्याप्त्या, धर्मिणोऽपि चाभ्यन्तरीभूतधर्मस्वरूपत्वात् उक्तादेव हेतोः । किमित्याह– **भेदाभेद इति** । अन्यथा तत्तत्त्वायोगः ॥

**प्रतीतिसचिवनिमित्तभेदे सति विरोधादित्यपि यदुक्तं तदुक्तिमात्रमेव। तथाहि--यदि येनाकारेण भेदः कथं तेनैवाभेदः अथाभेदः कथं भेद इत्यस्य वचनस्योक्तवद्व्यपेतविषयत्वात् प्रकारान्तरेण भेदाभेदसिद्धेः । सर्वथा भेदाभेदवादिनस्तु तदसत्त्वापत्तिलक्षणो विरोधोऽपरिहार्य एव । तथाहि– एकान्तत एव धर्मधर्मिणोर्भेदे धर्मिणो निःस्वभावत्वापत्तिः, स्वभावस्य धर्मत्वात् तस्य च ततोऽन्यत्वादिति । स्वो भावः स्वभावस्तस्यैवात्मीया सत्तेति शब्दार्थे न निःस्वभावत्वापत्तिरिति चेत् । न । ज्ञेयत्वादिधर्माननुवेधे तदनवगतेः, तथापि तत्कल्पनेऽतिप्रसङ्ग इति ॥**

एवं च प्रतीतिसचिवनिमित्तभेदे प्रतीतिसहायानिमित्तभेदे, सति; धर्मधर्मिणोर्भेदाभेदं प्रतीति प्रक्रमः । किमित्याह– **विरोधादित्यपि यदुक्तं** पूर्वपक्षे अथ येनैवाकारेण भेदस्तेनैवाभेद-इत्येतदप्यचारु विरोधादित्येवम् । किमित्याह– **तदुक्तिमात्रमेव** निरर्थकमित्यर्थः । **तथाहीत्यादि** भावना, तथाहीति पूर्ववत्, यदि येनाका-

रेण भेदः कथं तेनैवाऽभेदः, धर्मधर्मिणोरिति वर्त्तते । अथाभेदः कथं भेद इति निमित्ताभेदेनेत्यर्थः, अस्य वचनस्य पूर्वपक्षसङ्गतस्य, उक्तवक्ष्यपेतविषयत्वात् व्यपेतविषयत्वं च प्रकारान्तरेण जात्यन्तरात्मकत्वेन भेदाभेदसिद्धेः । सर्वथा भेदाभेदवादिनस्त्वेकान्तवादिनः । किमित्याह– **तदसत्त्वापत्तिलक्षणो** धर्मिधर्मासत्त्वापत्तिलक्षणः, विरोधः । किमित्याह– **अपरिहार्य एव** अपरिहरणीय एव । एतदेव भावयति– **तथाहीत्यादिना** तथाहीत्युपप्रदर्शने, एकान्तत एव धर्मधर्मिणोर्भेदेऽभ्युपगम्यमाने सति । किमित्याह– **धर्मिणो निःस्वभावत्वापत्तिः** । कुत इत्याह–**स्वभावस्य धर्मत्वात्** । ततः किमित्याह– **तस्य च** स्वभावस्य, ततो धर्मिणः, अन्यत्वादिति । स्वो भावः स्वभावस्तस्यैव धर्मिणः, आत्मीया सत्ता इत्येवम्, शब्दार्थे सति, न निःस्वभावत्वापत्तिः धर्मिणः, इति चेत् । एतदाशङ्क्याह– **नेत्यादि** । न नैतदेवम्, ज्ञत्वादिधर्माननुवेधे सति, आदिशब्दात् प्रमेयत्वादिपरिग्रहः, तदनवगतेः तस्याधिकृतधर्मिणोऽनवगमात्; न ह्यज्ञेयस्वभावं सदपि ज्ञायत इत्यर्थः । **तथापीत्यादि** । तथाप्यनवगमेऽपि, तत्कल्पने धर्मिकल्पने, अतिप्रसङ्गः अन्यस्य कस्यचिदनवगतस्य कल्पनापत्तेरिति ॥

"धर्माणामपि तदभावे निराश्रयत्वात् केवलानां ग्रहणानुपपत्तेस्तदितराननुवेधादभाव एवेति तदसत्त्वापत्तिः । एकान्ताभेदेऽप्यन्यतराभावतस्तन्नान्तरीयकत्वात् तद्व्यतिरेकेण तत्स्वरूपानुपपत्तेर्निर्बीजकल्पनाऽसम्भवात्, अतिप्रसङ्गाव्याहतेः, अन्यतरभावस्यैवान्यतरकल्पनाबीजत्वायोगात्, एकान्तैकस्वभावत्वहानेः, तथाविधैकस्वभावत्वस्य न्यायविरुद्धत्वात्, शक्तिभेदमन्तरेण कार्यभेदासिद्धेः, तादितरव्यावृत्तेरपि तत्त्वतस्तदव्यतिरेकात्, तद्भेदे च तद्भेदोपपत्तेः, अभिधानभेदतो धर्मसिद्धिर्मिसङ्गादन्यतरस्याप्यभाव एवेति तदसत्त्वापत्तिरेव । एतेन अथ येनाप्याकारेण भेदस्तेनापि भेदश्चाभेदश्चेत्याद्यपि निराकृत-

## तुल्यनक्तंदिने काले विषुवद् विषुवं च तत् ॥ ६० ॥

तुल्ये नक्तंदिने यत्र काले तत्र विषुवत् विषुवं च, विषुर्नाम मुहूर्त्तः साऽस्याऽस्ति विषुवत्, पुंक्लीबलिङ्गः; यद्वैजयन्ती—पुरी तन्महिमा हेम विषुवत् कर्म लोम दोः नृपषण्ढलिङ्गाः । विषु साम्येऽव्ययम् तदस्यास्तीति वा ॥ १ ॥ एवं मण्यादित्वाद् वे विषुवम् । तच्च मेषादौ तुलादौ च भवति ॥ २ ॥ ६० ॥

## पञ्चदशाऽहोरात्रः स्यात् पक्षः

पञ्चदशाऽहोरात्रा अत्र पञ्चदशाहोरात्रः, पचति भूतानि पक्षः "मावावद्यमि—"॥ ( उणा—५६४ ) ॥ इत्यादिना सः ॥ १ ॥

## स बहुलोऽसितः ।

स पक्षोऽसितः कृष्णः, बंहते वर्द्धते तमोऽस्मिन्निति बहुलः ॥ १ ॥

शेषश्चात्र—

पक्षः कृष्णः सितो द्वेधा कृष्णो निशाह्वयोऽपरः ।
शुक्लो दिवाह्वयः पूर्वः ॥

## तिथिः पुनः कर्मवाटी

तन्यते तिथिः पुंस्त्रीलिङ्गः " तनेर्डिद् " ॥ ( उणा—६७४ ) ॥ इति इथिः ॥ १ ॥ कर्मणां वाटीव कर्मवाटी तत्प्रतिबद्धत्वात् तेषाम् ॥ २ ॥

## प्रतिपत् पक्षतिः समे ॥ ६१ ॥

प्रतिपद्यते पक्षस्याऽऽद्यतया प्रतिपत् ॥ १ ॥ पक्षस्य मूलं प्रारम्भः पक्षतिः; स्त्रीलिङ्गौ, "पक्षात्तिः " ॥ ७ । १ । ८९ ॥ इति तिः ॥ २ ॥ ६१ ॥

## पञ्चदश्यौ यज्ञकालौ पक्षान्तौ पर्वणी अपि ।

पञ्चदशानां पूरण्यौ पञ्चदश्यौ ॥ १ ॥ यज्ञस्य कालौ यज्ञकालौ "दर्शपौर्णमासी-भ्यां मिष्टान्नेन यजेत" इति श्रुतेः ॥ २ ॥ पक्षस्यान्तौ पक्षान्तौ ॥ ३ ॥ पूर्यन्ते पितरोऽत्र पर्वणी " स्नामदि— " ॥ ( उणा—९०४ ) ॥ इत्यादिना वन् ॥ ४ ॥

## तत्पर्वमूलं भूतेष्टापञ्चदश्योर्यदन्तरम् ॥ ६२ ॥

पर्वणो मूलं पर्वमूलं, भूतेष्टा चतुर्दशी सा च पञ्चदशी च भूतेष्टापञ्चदश्यौ तयोरन्तरं मध्यम् ॥ १ ॥ ६२ ॥

## स पर्व सन्धिः प्रतिपत्पञ्चदश्योर्यदन्तरम् ।

स सन्धिः पर्वेति संबन्धः, यद् दुर्गः—प्रतिपत्पञ्चदश्योस्तु सन्धिः पर्व । प्राच्या-स्तु पर्वसन्ध्याख्यमाख्यन् ॥ १ ॥

दृष्टेन्दुस्तु सिनीबाली

सिता बाला चन्द्रकलाऽस्यां सिनीबाली पृषोदरादित्वात् ॥ १ ॥

भूतेष्टा तु चतुर्दशी ॥ ६५ ॥

भूतानामिष्टा भूतेष्टा ॥ १ ॥ चतुर्दशानां तिथीनां पूरणी चतुर्दशी ॥२॥६५॥

पक्षौ मासः

माति मिमीते वा मासः, पुंक्लीबलिङ्गः "मावावद्यमि--" ॥ (उणा--५६४) ॥ इति सः । मस्यते परिमीयते सावनचान्द्रसूर्यादिभेदेनेति वा घञ् ॥ १ ॥

शेषश्चात्र—

मासे वर्षांशको भवेत् वर्षकोशो दिनमलः ॥

वत्सरादिर्मार्गशीर्षः सहः सहाः ।

आग्रहायणिकश्च

वत्सरस्यादिर्वत्सरादिः ॥ १ ॥ मार्गशीर्षी पौर्णमास्यस्य मार्गशीर्षः "सास्य पौर्णमासी" ॥ ६ । २ । ९८ ॥ इत्यण् । यौगिकत्वाद् मार्गी पौर्णमास्यस्य मार्गः ॥ २ ॥ सहते सहः, अच् ॥ ४ ॥ सहते लोकोऽस्मिन् शीतमिति सहाः, पुंलिङ्गः "अस्" ॥ ( उणा–९५२ ) ॥ इत्यस् ॥ ४ ॥ आग्रहायणी पौर्णमास्यस्य आग्रहायणिकः "आग्रहायण्यश्वत्थादिकण्" ॥ ६ । २ । ९९ ॥

अथ पौषस्तैषः सहस्यवत् ॥ ६६ ॥

पुष्येण चन्द्रयुक्तेन युक्ता पौर्णमासी पौषी साऽस्यास्ति पौषः ॥ १ ॥ एवं तैषः ॥ २ ॥ सहसि साधुः सहस्यः स इव सहस्यवत् । यथा सहस्यः पौषवाची तथा तैषोऽपीत्यर्थः ॥ ३ ॥ ६६ ॥

माघस्तपाः

माघी पौर्णमास्यस्य माघः ॥ १ ॥ तपति तपाः, पुंक्लीबलिङ्गः ॥

फाल्गुनस्तु फाल्गुनिकस्तपस्यवत् ।

फाल्गुनी पौर्णमास्यस्य फाल्गुनः ॥ १ ॥ एवं फाल्गुनिकः "चैत्री-कार्त्तिकीफाल्गुनीश्रवणाद् वा" ॥ ६ । २ । १०० ॥ इति इकण् ॥ २ ॥ तपसि साधुस्तपस्यः ॥ ३ ॥

शेषश्चात्र—

फाल्गुनालस्तु फाल्गुने ॥

चैत्रो मधुश्चैत्रिकश्च

मेवं मुग्धे ! भवभयहरोऽश्रावि पुण्योपदेशः ।
हारेणेव द्युतिततिभृताऽप्यत्र शश्वद् मनोऽन्तः
प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥ ८४ ॥
(युग्मम्)

जिग्ये कामः सुतनु ! स मया शीलमासाद्य यस्मात्
संज्ञाहीनौ रसकुरुवकावप्यहो ! स्तः सरागौ ।
नार्या एकोऽभिलषति भृशं दर्शनं मण्डिताया
वाञ्छत्यन्यो वदनमदिरां दोहदच्छद्मनाऽस्याः ॥ ८५ ॥

नीरागं मे समजनि मनो ज्ञाततत्त्वस्वरूपं
तेनेदानीं न विषयरसो बाधते कुत्रचिद् माम् ।
पश्याम्येनामपि वनसमां चित्रशालां खलूच्चै-
र्यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद् वः ॥ ८६ ॥

यत्तारुण्ये सति वपुरहो ! विभ्रमं भूरि दत्ते
पुष्टं मुग्धे ! सरसमधुराहारयोगेण शश्वत् ।
अन्यादृक् स्यात् तदपि च गते यौवने देहभाजां
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥ ८७ ॥

मत्वाऽनित्यं जगदिति मनो मे विलग्नं जिनोक्ते
धर्मे शर्माभिलषति परं शाश्वतं शुद्धचित्ते ! ।
मुग्धे ! स्निग्धां रचयसि मुधा मामुदीक्ष्य स्वकीयां
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ ८८ ॥

नारी यस्मिन्नमृतसदृशी मे बभूवाद्य यावद्
रागग्रस्ते मनसि मदनव्यालविध्वस्तसंज्ञे ।
ध्वस्ते रागे गुरुभिरभवत् क्ष्वेडवत् साऽप्यनिष्टा
या तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः ॥ ८९ ॥

अज्ञानं मे सपदि गलितं मोहमूर्च्छाऽप्यनेशत्-
ज्ज्ञातं चित्तं सुतनु ! मम तन्निर्विकारं क्षणेन ।
स्वस्रा मृत्योरिव हि जरसा ग्रस्यमानां तनुं स्वां

---

८४ त्वां प्रेक्ष्यापि मनोऽन्तः शश्वन्निरन्तरमेवोपदेशं स्मरामि अहम् । किंलक्ष० त्वां, द्युतिततिभृता हारेण उपान्तस्फुरिततडितमिव । ८७ शोभाम् । ९० -प्यनश्य- इत्यपि ।

मन्ये जातां तुहिनमथितां पद्मिनीं वाऽन्यरूपाम् ॥ ९० ॥

तस्मिन्नेवं वदति चतुरोवाच तस्या वयस्या
जातं किं ते सुभग ! हृदयं निर्दयं बाढमेतत् ? ।
भूयाऽस्यास्त्वं तव विरहतो वक्त्रमभ्रास्तदीप्ते-
रिन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्त्ति ॥ ९१ ॥

एषाऽनैषीत् सुभग ! दिवसान् कल्पतुल्यानियन्तं
कालं बाला बहुलसलिलं लोचनाभ्यां स्रवन्ती ।
अस्थाद् दुःस्था तव हि विरहे मामियं वार्त्तयन्ती
कच्चिद्भर्तुः स्मरसि रसिके ! त्वं हि तस्य प्रियेति ॥ ९२ ॥

मूर्छान्ते सा सुभग ! रुदती वारिता दीननादं
प्रातः सायं सखि ! वद कदाऽसौ समेतेत्यवग् माम् ।
लातुं वेलां तव सुललितं गीतमुद्गातुकामा
भूयो भूयः स्वयमपि कृतां मूर्छनां विस्मरन्ती ॥ ९३ ॥

पृष्ट्वा पृष्ट्वा गणकनिचयं जीवितं धारयन्ती
नीत्वा नीत्वा कथमपि दिनान्यङ्गुलीभिर्लिखन्ती ।
गत्वा गत्वा पुनरपि पुनर्द्वारि तस्थौ च गेहे
प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥ ९४ ॥

शृङ्गारं स्वं सुभग ! विरहेऽङ्गारवत् संत्यजन्ती
दुःखेनाऽलं निजपरिजनं दुःखदिग्धं सृजन्ती ।
प्रेम्णा बद्धां निपुण ! भवता तां मुहुः संस्पृशन्ती
गण्डाभोगात् कठिनविषमामेकवेणीं करेण ॥ ९५ ॥

नीता रात्रिः क्षण इव पुरा या त्वयेद्धाऽपि सार्द्धं
क्रीडायोगैः सुरतजनितैश्चारुभोगोपभोगैः ।
निःश्वासौघैर्निजतनुगतं चन्दनं शोषयन्ती
तामेवोष्णैर्विरहजनितैरश्रुभिर्व्यापयन्ती ॥ ९६ ॥

दत्त्वा दुःखं मम किमु सुखं हा ! विधातस्त्वयाऽऽप्तं ?
जानात्यन्यो न हि परगतां वेदनां वाऽत्र कश्चित् ।

---

९१ चतुरानाम्नी तस्या वयस्या उवाच । अभ्रास्तदीप्तेरितीन्दोर्विशेषणम् ।
२ कच्चिदिति कोमलामन्त्रणे ।

मेवं मुग्धे ! भवभयहरोऽश्रावि पुण्योपदेशः ।
हारेणेव द्युतिततिभृताऽप्यत्र शश्वद् मनोऽन्तः
प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥ ८४ ॥

जिग्ये कामः सुतनु ! स मया शीलमासाद्य यस्मात्
संज्ञाहीनौ रसकुरुवकावप्यहो ! स्तः सरागौ ।
नार्या एकोऽभिलषति भृशं दर्शनं मण्डिताया
वाञ्छत्यन्यो वदनमदिरां दोहदच्छद्मनाऽस्याः ॥ ८५ ॥
नीरागं मे समजनि मनो ज्ञाततत्त्वस्वरूपं
तेनेदानीं न विषयरसो बाधते कुत्रचिद् माम् ।
पश्याम्येनामपि वनसमां चित्रशालां खलूच्चै-
र्यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद् वः ॥ ८६ ॥
यत्तारुण्ये सति वपुरहो ! विभ्रमं भूरि दत्ते
पुष्टं मुग्धे ! सरसमधुराहारयोगेण शश्वत् ।
अन्यादृक् स्यात् तदपि च गते यौवने देहभाजां
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥ ८७ ॥
मत्वाऽनित्यं जगदिति मनो मे विलग्नं जिनोक्ते
धर्मे शर्माभिलषति परं शाश्वतं शुद्धचित्ते !।
मुग्धे ! स्निग्धां रचयसि मुधा मामुदीक्ष्य स्वकीयां
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ ८८ ॥
नारी यस्मिन्नमृतसदृशी मे बभूवाद्य यावद्
रागग्रस्ते मनसि मदनव्यालविध्वस्तसंज्ञे ।
ध्वस्ते रागे गुरुभिरभवत् क्ष्वेडवत् साऽप्यनिष्टा
या तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः ॥ ८९ ॥
अज्ञानं मे सपदि गलितं मोहमूर्च्छाऽप्यनेश-
ज्जातं चित्तं सुतनु ! मम तन्निर्विकारं क्षणेन ।
स्वस्रा मृत्योरिव हि जरसा ग्रस्यमानां तनुं स्वां

---

८४ त्वां प्रेक्ष्यापि मनोऽन्तः शश्वन्निरन्तरमेवोपदेशं स्मरामि अहम् । किंलक्ष० त्व द्युतिततिभृता हारेण उपान्तस्फुरिततडितमिव । ८७ शोभाम् । ९० -प्यनश्य- इत्यपि

मन्ये जातां तुहिनमथितां पद्मिनीं वाऽन्यरूपाम् ॥ ९० ॥

तस्मिन्नेवं वदति चतुरोवाच तस्या वयस्या
जातं किं ते सुभग ! हृदयं निर्दयं बाढमेतत् ? ।
याऽस्यास्त्वं तव विरहतो वक्त्रमभ्रास्तदीप्ते-
रिन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्त्ति ॥ ९१ ॥

एषाऽनैषीत् सुभग ! दिवसान् कल्पतुल्यानियन्तं
कालं बाला बहुलसलिलं लोचनाभ्यां स्रवन्ती ।
अस्थाद् दुःस्था तव हि विरहे मामियं वार्त्तयन्ती
कच्चिद्भर्तुः स्मरसि रसिके ! त्वं हि तस्य प्रियेति ॥ ९२ ॥

मूर्छान्ते सा सुभग ! रुदती वारिता दीननादं
प्रातः सायं सखि ! वद कदाऽसौ समेतेत्यवग् माम् ।
लातुं वेलां तव सुललितं गीतमुद्गातुकामा
भूयो भूयः स्वयमपि कृतां मूर्छनां विस्मरन्ती ॥ ९३ ॥

पृष्ट्वा पृष्ट्वा गणकनिचयं जीवितं धारयन्ती
नीत्वा नीत्वा कथमपि दिनान्यङ्गुलीभिर्लिखन्ती ।
गत्वा गत्वा पुनरपि पुनर्द्वारि तस्थौ च गेहे
प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥ ९४ ॥

शृङ्गारं स्वं सुभग ! विरहेऽङ्गारवत् संत्यजन्ती
दुःखेनाऽलं निजपरिजनं दुःखदिग्धं सृजन्ती ।
प्रेम्णा बद्धां निपुण ! भवता तां मुहुः संस्पृशन्ती
गण्डाभोगात् कठिनविषमामेकवेणीं करेण ॥ ९५ ॥

नीता रात्रिः क्षण इव पुरा या त्वयेद्धाऽपि सार्द्धं
क्रीडायोगैः सुरतजनितैश्चारुभोगोपभोगैः ।
निःश्वासौघैर्निजतनुगतं चन्दनं शोषयन्ती
तामेवोष्णैर्विरहजनितैरश्रुभिर्व्यापयन्ती ॥ ९६ ॥

दत्त्वा दुःखं मम किमु सुखं हा ! विधातस्त्वयाऽऽप्तं ?
जानात्यन्यो न हि परगतां वेदनां वाऽत्र कश्चित् ।

---

९१ चतुरानाम्नी तस्या वयस्या उवाच । अभ्रास्तदीप्तेरितीन्दोर्विशेषणम् । कच्चिदिति कोमलामन्त्रणे ।

स्वकुचयुग्ममवेक्ष्यदेकिका ध्वनिगदं निगदन्त्यपि चेदृशम् ॥६७॥
वपुरिदं मम संस्पृश तत्क्षणं जनयदेव महाशय ! निर्वृतिम् ।
वचसि मे प्रतिपत्तिमथाचरेति निजगे निजगेहवदेकया ॥ ६८ ॥
प्रतिवचोऽपि ददासि न नः कथं सकरुणं महतां हृदयं खलु ? ।
इति च पर्यनुयुञ्जत ता नृपं नरमणी रमणीव स किं वदेत् ?॥ ६९ ॥
इति निशां सकलां विविधोक्तिभिर्विततभावविभावनयाऽप्यलम् ।
अचलसत्त्वमवेक्ष्य तमानमन् गुणवतो णवतो महनं क न ?॥ ७० ॥
कुसुमकार्मुककार्मुकमेककं वयमहो ! भवताऽवजितं च तत् ।
सुभटता भुवनत्रितयेऽपि ते प्रकटतां कटतां कथमेतु ना ? ॥ ७१ ॥
प्रियतमेन यथा शतमन्युना तव सुसत्त्व ! विवर्णनमादधे ।
तदवलोक्य तथैव सविस्मयाः समुदिता मुदिताः परमास्महि ॥ ७२ ॥
इति विवर्ण्य विवर्ण्यतमं प्रभुं विकृतयौवतमप्यपहृत्य तत् ।
द्विमितताविषनायकनायिके स्वसदनं सदनङ्गमुपेयतुः ॥ ७३ ॥
उषासि पारयति स्म स पौषधं प्रतिमया सह मेघरथो नृपः ।
अलभताऽधिकमेव विरागतां रजनिमाजनिमानमनुस्मरन् ॥७४ ॥
दयितवेदितवृत्तविभावरीचरितसंश्रवणात् प्रियमित्रया ।
भवसुखात् सुतरां निरवेद्यत प्रियमतं यमतन्त्रमतः स्त्रियाम् ॥ ७५ ॥
घनरथः समवासरदन्यदा जिनपतिर्भविकाब्जविबोधनम् ।
विरचयन् रविवत् पुरि तत्र स स्रुतमसां तमसां क्षयकर्मणा ॥ ७६ ॥

आदिष्टशिष्टपुरुषैः समुपेत्य विश्व-
विश्वम्भराधिपतिमेघरथाय तूर्णम् ।
विज्ञप्तिमित्यवहिताय तवेश बाह्यो-
द्याने जिनो घनरथः समुपागतोऽस्ति ॥ ७७ ॥

इत्याकर्ण्य क्षितीशः प्रमुदितहृदयोऽपास्य सिंहासनं तद्
गत्वा सप्ताष्टपादानवनितलमिलन्मौलिमौलिर्विनम्य ।
सम्यक् शक्रस्तवोक्तिप्रतिकृतिकृतकस्तोत्रजातैरुदारैः
स्तुत्वा भूयोऽपि नत्वा त्रिभुवनविनतं भक्तितस्तीर्थराजम् ॥७८॥
पादैस्तैरेव सिंहासनमसममहारत्नकान्तिप्रतान-

१ ज्ञानवतः ।

भ्राजिष्णु स्फूर्तिजिष्णुः कृतसुकृतशताध्यासमध्यास्य हृष्यन् ।
पश्यंस्तानेव ताताऽऽगमकथकजनानग्रतो दौःस्थ्यभेदं
दत्त्वा कल्याणजातं व्यसृजदतितमां स्वस्य कल्याणमिच्छुः ॥७९॥
( युग्मम् )

आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विद्यावतां सद्गुरुः ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽगमद् द्वादशः ॥ ८० ॥

## ॥ इति श्रीशान्तिनाथचरिते महाकाव्ये द्वादशः सर्गः ॥



अर्हम्

## अथ त्रयोदशः सर्गः ।



वचः परास्तव्यभिचारभावाद् यस्याऽऽगमत्वेन बुधैरमानि ।
स केवलालोकविलोक्यलोकः शान्तिप्रभुर्वो ददतां प्रमोदम् ॥ १ ॥
अथाऽनुजेनाऽपि समं स मान्यः क्षोणीभुजां मेघरथः क्षणेन ।
जिनेश्वरं नन्तुमनन्तवेदं वव्राज राजन् स्वपरिच्छदेन ॥ २ ॥
प्रदक्षिणीकृत्य जिनं यथावद् नत्वा नृपे मेघरथे निविष्टे ।
दिदेश धर्मं नरदेवतिर्यग्भाषाधिसंवादकिरा गिराऽर्हन् ॥ ३ ॥
सुखैरनेकैरपि लालितोऽयं जन्तुर्न सन्तोषमुपैति किञ्चित् ।
अनुत्तरस्थानविलुप्तमानसामान्यसौख्यैरपि यद् न तृप्तः ॥ ४ ॥
प्रमादमुत्सार्य तदार्यचित्ताः! मानुष्यसामग्र्यकमप्यवाप्य ।
इदं च चिन्तामणिवद् दुरापं धर्मं विदद्ध्वं प्रयता जनौघाः ! ॥ ५
प्रमादसन्दर्भविमर्दनेन यो धर्ममाराधयितुं यतेत ।
विपत्तयस्तस्य समापतन्त्यः संपत्तयः किं न समुद्भवन्ति ? ॥ ६ ॥
निदर्शनं शूरनृपोऽत्र विज्ञाः ! कृत्वाऽवधानं शृणुत प्रधानम् ।
तथाहि जम्बूपपदेऽन्तरीपे पूर्वेऽत्र वर्षे पुरमास्ति वित्तम् ॥ ७ ॥

१ राजेः शतरि, शोभमान इत्यर्थः ।

क्षितिप्रतिष्ठं नगरप्रतिष्ठं नाम्ना समानन्दितसर्वशिष्टम् ।
मनुष्यधर्माणमुदाहरन्ते यद् धर्मवासेन बुधाः कुबेरम् ॥ ८ ॥
स तत्र दिग्व्यापकवीरसेनः श्रीवीरसेनः समभूद् रैसेनः ।
यदीयकीर्तेः सितिमाऽवलोकाद् ह्रीणः शशाङ्कः क्षयितामधत्त ॥ ९ ॥
प्रिया तदीयाऽजनि धारिणीतिप्रख्यातनामा शुचिशीलधामा ।
तिलोत्तमा नैव तिलोत्तमा सा यद्रूपमालोक्य बुधैरवर्णि ॥ १० ॥
परेद्यविः सा शयिता सुखेन स्वप्ने महेन्द्रं पुरतः प्रयान्तम् ।
विलोक्य चोत्थाय तदैव देवी हृष्टा महेन्द्राय तमुज्जगार ॥ ११ ॥
धराधवोऽप्यभ्यऽधिताधिबुद्धिर्देवेन्द्रवत् ते भविता तनूजः ।
चलः स यत् प्रैक्षि चलाचलाक्षि ! जाने स तेनैव चलोऽचलोरु !॥१२॥
दिनं तदारभ्य बभार देवी गर्भं महापुण्यभरावदाता ।
प्रपूर्यमाणाखिलदोहदा सा राज्ञा सुखं सूनुमसूत राज्ञी ॥ १३ ॥
श्रितेऽत्र गर्भे समवेक्षि मात्रा यद्देवराजः पुरतो जिहानः ।
अतः पिता तं किल देवराजं धाम्ना विराजन्तमुवाच नाम्ना ॥ १४ ॥
कुमारवर्येऽत्र च पञ्चवर्षे जातेऽन्यदा सा महिषी नृपस्य ।
शरत्तडित्वत्प्रतिरूपरूपं स्वप्ने ककुद्मन्तमपश्यदुच्चैः ॥ १५ ॥
ततो दिनादेव नृदेवकान्ता गर्भं दधाना सुतरां बभासे ।
वसुन्धरेवाऽप्रतिमं निधानं दौर्गत्यविच्छेदकरं जनानाम् ॥ १६ ॥
अजीजनत् सा समयेऽथ पूर्णे सूनुं सुवर्णद्युतिवर्ण्यवर्णम् ।
महोत्सवेऽतीयुषि वत्सराजं स्वप्नानुसारेण नृपस्तमाह ॥ १७ ॥
शिशुत्वमारभ्य विवर्धमानं विद्याः समापेतुरमुं समस्ताः ।
रसातिरेकादिव शैवलिन्यो गम्भीरतायाः पदमम्बुराशिम् ॥ १८ ॥
ज्वरादिरोगैः परिताप्यमानो वैद्यैः परैरप्युपचर्य्यमाणः ।
अमात्यवृन्दैः परिचर्यमाणः क्षोणीपतिर्मृत्युदशां स चाऽऽप ॥ १९ ॥
इतश्च पौराः परितोऽपि कुण्डे कुण्डे भृशं साध्वसमाश्रयन्तः ।
विकाशिकाशप्रसराभकूर्चाः आलोचयन्नापणचत्वरेषु ॥ २० ॥
हहा ! वयं स्वामिनि नामशेषे जाते कथं नाम पुरा भवामः ? ।
विनैव ताराधिपतिं हि ताराः पुष्णन्ति तारा अपि किं प्रकाशम् ?॥२१॥

---

१ राजा ।

भ्राजिष्णु स्फूर्तिजिष्णुः कृतसुकृतशताध्यासमध्यास्य हृष्यन् ।
पश्यंस्तानेव ताताऽऽगमकथकजनानग्रतो दौःस्थ्यभेदं
दत्त्वा कल्याणजातं व्यसृजदतितमां स्वस्य कल्याणमिच्छुः ॥७९
( युग्मम् )

आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विद्यावतां सद्गुरुः ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽगमद् द्वादशः ॥ ८० ॥

## ॥ इति श्रीशान्तिनाथचरिते महाकाव्ये द्वादशः सर्गः ॥



अर्हम्

## अथ त्रयोदशः सर्गः ।



वचः परास्तव्यभिचारभावाद् यस्याऽऽगमत्वेन बुधैरमानि ।
स केवलालोकविलोक्यलोकः शान्तिप्रभुर्वो ददतां प्रमोदम् ॥ १ ॥
अथाऽनुजेनाऽपि समं स मान्यः क्षोणीभुजां मेघरथः क्षणेन ।
जिनेश्वरं नन्तुमनन्तवेदं वव्राज राजन्[1] स्वपरिच्छदेन ॥ २ ॥
प्रदक्षिणीकृत्य जिनं यथावद् नत्वा नृपे मेघरथे निविष्टे ।
दिदेश धर्मं नरदेवतिर्यग्भाषाधिसंवादकिरा गिराऽर्हन् ॥ ३ ॥
सुखैरनेकैरपि लालितोऽयं जन्तुर्न सन्तोषमुपैति किञ्चित् ।
अनुत्तरस्थानविलुप्तमानसामान्यसौख्यैरपि यद् न तृप्तः ॥ ४ ॥
प्रमादमुत्सार्य तदार्यचित्ताः! मानुष्यसामग्र्यकमप्यवाप्य ।
इदं च चिन्तामणिवद् दुरापं धर्मं विदद्ध्वं प्रयता जनौघाः ! ॥ ५ ॥
प्रमादसन्दर्भविमर्दनेन यो धर्ममाराधयितुं यतेत ।
विपत्तयस्तस्य समापतन्त्यः संपत्तयः किं न समुद्भवन्ति ? ॥ ६ ॥
निदर्शनं शूरनृपोऽत्र विज्ञाः ! कृत्वाऽवधानं शृणुत प्रधानम् ।
तथाहि जम्बूपपदेऽन्तरीपे पूर्वेऽत्र वर्षे पुरमस्ति वित्तम् ॥ ७ ॥

1 राजेः शतरि, शोभमान इत्यर्थः ।

क्षितिप्रतिष्ठं नगरप्रतिष्ठं नाम्ना समानन्दितसर्वशिष्टम् ।
मनुष्यधर्माणमुदाहरन्ते यद् धर्मवासेन बुधाः कुबेरम् ॥ ८ ॥
स तत्र दिग्व्यापकवीरसेनः श्रीवीरसेनः समभूद् रैसेनः ।
यदीयकीर्तेः सितिमाऽवलोकाद् ह्रीणः शशाङ्कः क्षयितामधत्त ॥ ९ ॥
प्रिया तदीयाऽजनि धारिणीतिप्रख्यातनामा शुचिशीलधामा ।
तिलोत्तमा नैव तिलोत्तमा सा यद्रूपमालोक्य बुधैरवर्णि ॥ १० ॥
परेद्यविः सा शयिता सुखेन स्वप्ने महेन्द्रं पुरतः प्रयान्तम् ।
विलोक्य चोत्थाय तदैव देवी हृष्टा महेन्द्राय तमुज्जगार ॥ ११ ॥
धराधवोऽप्यभ्यऽधिताधिबुद्धिर्देवेन्द्रवत् ते भविता तनूजः ।
चलः स यत् प्रैक्षि चलाचलाक्षि ! जाने स तेनैव चलोऽचलोरु !॥१२॥
दिनं तदारभ्य बभार देवी गर्भं महापुण्यभरावदाता ।
प्रपूर्यमाणाखिलदोहदा सा राज्ञा सुखं सूनुमसूत राज्ञी ॥ १३ ॥
श्रितेऽत्र गर्भे समवेक्षि मात्रा यद्देवराजः पुरतो जिहानः ।
अतः पिता तं किल देवराजं धाम्ना विराजन्तमुवाच नाम्ना ॥ १४ ॥
कुमारवर्येऽत्र च पञ्चवर्षे जातेऽन्यदा सा महिषी नृपस्य ।
शरत्तडित्वत्प्रतिरूपरूपं स्वप्ने ककुद्मन्तमपश्यदुच्चैः ॥ १५ ॥
ततो दिनादेव नृदेवकान्ता गर्भं दधाना सुतरां बभासे ।
वसुन्धरेवाऽप्रतिमं निधानं दौर्गत्यविच्छेदकरं जनानाम् ॥ १६ ॥
अजीजनत् सा समयेऽथ पूर्णे सूनुं सुवर्णद्युतिवर्ण्यवर्णम् ।
महोत्सवेऽतीयुषि वत्सराजं स्वप्नानुसारेण नृपस्तमाह ॥ १७ ॥
शिशुत्वमारभ्य विवर्धमानं विद्याः समापेतुरमुं समस्ताः ।
रसातिरेकादिव शैवलिन्यो गम्भीरतायाः पदमम्बुराशिम् ॥ १८ ॥
ज्वरादिरोगैः परिताप्यमानो वैद्यैः परैरप्युपचर्य्यमाणः ।
अमात्यवृन्दैः परिचर्यमाणः क्षोणीपतिर्मृत्युदशां स चाऽऽप ॥ १९ ॥
इतश्च पौराः परितोऽपि कुण्डे कुण्डे भृशं साध्वसमाश्रयन्तः ।
विकाशिकाशप्रसराभकूर्चाः आलोचयन्नापणचत्वरेषु ॥ २० ॥
हहा ! वयं स्वामिनि नामशेषे जाते कथं नाम पुरा भवामः ? ।
विनैव ताराधिपतिं हि ताराः पुष्णन्ति तारा अपि किं प्रकाशम् ?॥२१॥

१ राजा ।

नृपाङ्गजो यद्यपि देवराजो ज्येष्ठः कथञ्चिद् वयसा तथाऽपि ।
अयं प्रजावत्सल एव वत्सराजस्तु नः संमत एव राजा ॥ २२ ॥
बुधा गुणैरेव विदुर्गुरुत्वं नागेन नो वा वयसो महिम्ना ।
निधीयते मूर्धसु राजलोकैः पुष्पं हि गन्धाद्, न दलं न शाखा ॥२३॥
प्रजानुरागं प्रचुरं चरेभ्यस्तस्मिन् कनिष्ठेऽपि गुणाऽकनिष्ठे ।
मुहुर्निशम्येति स देवराजो राज्यं जिघृक्[2] चिन्तयति स्म चैवम् ॥२४॥
जनानुरागो ध्रुवमस्ति यस्मिन् संपत् तमाश्लिष्यति न भ्रमोऽत्र ।
हृदा विचिन्त्येति स मुख्यमेकं द्रव्यैरमात्यं स्ववशं चकार ॥ २५ ॥
मतङ्गजा जङ्गमदुर्गमेते राज्ञामितीवाऽऽदित तान् पुरा सः ।
ततस्तुरङ्गान् नृपरक्षिवीरान् व्यापाद्य जीवत्यपि राजताते ॥ २६ ॥
किमौचितीमञ्चति देवराजे राज्यप्रदानं सति वत्सराजे ? ।
परं प्रकुर्वे किमहं दुरन्तै रोगैरिदानीमभिभूतगात्रः ॥ २७ ॥
इति स्वचित्ते वसुधाधवोऽस्य ज्येष्ठस्य सूनोरविनीतभावम् ।
विदन् द्विरुक्तामयजाततापः सन्तापमन्तर्निदधद् ममार ॥ २८ ॥
( युग्मम् )
परे तु कृत्यानि नृपस्य चक्रुः श्रीवत्सराजेन सहाऽप्यमात्याः ।
श्रीदेवराजोऽपि शशास राज्यं तत्राऽनुरागं न दधुः प्रजाश्च ॥ २९ ॥
महीपतेस्तस्य च वत्सराजः सेवां चकारेतरवत् स नित्यम् ।
न चाग्रजत्वं हि न चानुजत्वं राज्ञां मतं सेवकतामपास्य ॥ ३० ॥
स एव मन्त्री नृपतेरपायं स्वस्याऽपि जानन्नित एव दुष्टः ।
रहस्यऽवादीद् नृपतिं, खला हि स्वस्यानुमानेन परं विदन्ति ॥३१॥
नृदेव ! सेवाप्रवणोऽपि तेऽयं नैवाऽनुजो वृद्धिमुपागतः सन् ।
क्षयाऽऽमयाऽऽकार इवाङ्गबद्धः स्यादायतौ क्षेमकरः कथञ्चित् ॥३२॥
नरेश्वरस्तस्य वचः स तथ्यं जानन् स्वचित्ते विगलद्विवेकः ।
विनाऽपराधं किल वत्सराजं निर्वासयामास तदैव देशात् ॥ ३३ ॥
न पत्तनग्राममनिवासमात्रत्यागं प्रकुर्वन्ति निषेविता ये ।
त एव केषां प्रभवोऽपि देशत्यागं, समर्थाः पिशुनास्तदत्र ॥ ३४ ॥
निरागसस्तस्य तथाऽपमानं माता समाकर्ण्य समं भगिन्या ।

---

२ महीतुमिच्छुः ।

निवार्यमाणाऽपि नृपेण बाढं व्यावर्तनायेव समन्वयासीत् ।। ३५ ।।
गृहीतसर्वाभरणास्त्रयोऽपि क्षोणीभुजा दुर्जनवाक्यतोऽपि ।
अवन्तिदेशस्य विभूषणं तेऽवन्तीपुरीं प्रापुरृतेऽपि यानम् ।। ३६ ।।
न चिन्त्यते यद् मनसा कदाऽपि स्वप्नेऽपि यस्याऽनुपलब्धिरेव ।
न योगिनां यद्विषयः कदाऽपि दैवं पुनस्तत् सहसा करोति ।। ३७ ।।
अपालयत् तां नगरीं नरेन्द्रः प्रध्वस्तशत्रुर्जितशत्रुनामा ।
द्विधाऽपि देव्या कनकश्रिया यो राज्यं मनः स्वं च वशीचकार ।।३८।।
पुरीसमीपं समुपेत्य शालच्छायां समालम्ब्य विलम्बभाजम् ।
भृशं श्रमार्ता विमलानुजैव तां धारिणीं व्याहरति स्म चैवम् ।। ३९ ।।
क्षणं प्रतीक्षस्व महाशयेऽत्र यावत् पुरोऽभ्यन्तरमेव गत्वा ।
द्विधा स्थितिर्यत्र विधीयते तत् स्थानं समालोक्य न यामि पश्चात् ।।४०।।
इतीरयित्वा त्वरितं नगर्या मध्येऽपि गत्वा परतो गृहान् सा ।
विलोकयन्ती सहसा महेभ्यश्रीसोमदत्तस्य गृहं विवेश ।। ४१ ।।
पुरःस्थितेनेभ्यवरेण साऽपि पृष्टा किमर्थं समुपागताऽसि ? ।
उवाच सा स्वच्छमहेच्छ ! मह्यं यच्छाऽऽश्रयं कञ्चिदनाश्रयायै ।।४२।।
स्वजामिजामेयसमन्विताऽहं तिष्ठामि यत्र त्वदुरुप्रतिष्ठा ।
त्वमास्व मद्भाटक एव किन्तु ब्रूहि स्वयं भाटकमग्रतो मे ।। ४३ ।।
अपास्तलज्जं कृपणोपयुक्तं तेनोदिता सा पुनराह तात ! ।
त्वदालये कर्म पुरा विदद्ध्वो भोज्ये त्वया, भाटकमस्ति नान्यत् ।।४४।।
तथेति तेनाभिहिते त्रयोऽपि स्थाने प्रदत्तेऽस्थुरुरीकृतार्हाः ।
प्रतिश्रुतस्याऽवनमन्तरेण यद्वा सतां न व्रतमन्यदस्ति । ।। ४५ ।।
निरुद्यमो वामपि नन्दनोऽयं सन्नन्दनस्तिष्ठति किं विकर्मा ? ।
निरन्तरं भोजयितास्मि चैनं कृत्येन मत्तर्णकरक्षणेन ।। ४६ ।।
इतीभ्यधुर्यस्य निवेदनेन ताभ्यां कथञ्चिद् भणितो हठेन ।
अनीहमानस्त्रपया सकोपो बाह्ये ययौ तर्णकरक्षणाय ।। ४७ ।।
( युग्मम् )
क्वचित् प्रदेशे विजने स तस्मिन्नाकस्मिकाकर्णिततारनादैः ।
खलूरिकायां श्रममादधानान् ज्ञात्वा कुमारानगमत् कुमारः ।। ४८ ।।
वितन्वतां तत्र कुमारकाणां शस्त्रश्रमं सम्यगवेक्षमाणम् ।

कृताङ्घ्रघातेन मुदं वहन्तं तद्व्यत्ययादास्याविकूणनं च ॥ ४९ ॥
विलोक्य तं लोकविलोकनीयस्वाकारसम्भावितबुद्धिधारम् ।
चमत्कृतस्तद्‌गुणकाम्ययैवाऽपृच्छत् कलाचार्य उदारचित्तः ॥ ५० ॥
अये! महाभाग! समागतोऽसि देशात् कुतः पुण्यतमप्रदेशात् ।
कयाऽऽख्यया ख्यातिमितोऽसि कीदृक् शस्त्रे श्रमस्ते वद मेऽग्रतस्त्वम्? ॥
इति प्रतिश्रुत्य तदुक्तवाचमाचष्ट वाचस्पतिवत् कुमारः ।
अहं महाराष्ट्रमहाभिधानाद् देशात् समागां कुतुकेन चाऽत्र ॥ ५२ ॥
सचेतनः कः स्वत एव नाम ब्रूयाद् विदन् स्वं व्यवहारसारम् ? ।
विलोपतस्तस्य न किं भवेतां नु द्रव्यजीवद्वितयव्ययौ च ? ॥ ५३ ॥
भवेत् परोक्षप्रतिपत्तिरेव नाम्ना न साक्षात् प्रतिभासवासः ।
अपेक्षतां को हि बुधोऽनुमानं प्रत्यक्षमाने व्यवतिष्ठमाने ? ॥ ५४ ॥
परिश्रमः कश्चन मेऽस्ति शस्त्रे संदृष्टमात्रोऽत्र भवत्प्रसङ्गात् ।
इति ब्रुवाणोऽर्पितबाणधन्वा स्वाभ्यासमेभ्यः समदीदृशत् सः ॥ ५५ ॥
अहो ! श्रुतार्थप्रतिपत्तिमत्त्वमेतस्य वक्तृत्वमहो ! महीयः ।
अहो ! धनुर्वेदविशेषवित्त्वमित्यात्तचित्रास्तमवर्णयंस्ते ॥ ५६ ॥
पुराद् नृपादेशवशात् पुरावत् सूदैस्तदाऽऽनीतमभुञ्जतान्नम् ।
कलाविदा तेन समं कुमारा मारानुकारं तमबूभुजंश्च ॥ ५७ ॥
ते तर्णका रक्षकमन्तरेण पस्त्यं सकालेऽपि ययुर्विचर्य ।
प्रदोषकालेऽखिलदोषमुक्तः क्रीडां विधायाऽऽश्रयदाश्रयं सः ॥ ५८ ॥
चिराय किं वत्स ! समागमस्त्वं किं वत्सरूपाणि समागमन् प्राक् ?।
इतीभ्यवर्येण हितेन पृष्टः स प्राह किञ्चिच्छयितोऽस्मि तात ! ॥५९॥
ततः समायासिषुरेतकानि श्रान्तस्य निद्रा सुलभा स्वभावात् ।
इदं द्वितीयेऽह्नि पुनस्तृतीयेऽप्यस्योत्तरं जातमनुत्तरं च ॥ ६० ॥
स वत्सरूपाणि दिनोदयेऽपि लात्वा विमुच्यैव वने प्रयाति ।
कुमारकाणां सविधेऽस्त्रविद्यावैदग्ध्यमुत्तेजयितुं नतानाम् ॥ ६१ ॥
अनारतं तैरुपरोध्य भोज्यं प्राज्याज्यसौन्दर्यमभोज्यताऽयम् ।
गृहं प्रयातेषु च तर्णकेषु सायं समायाति स मुक्तमायः ॥ ६२ ॥
तमेवमाचख्युतुरेकदा ते मातृष्वसा साऽस्य तथा च माता ।
न वत्स ! किं रक्षसि वत्सकांस्त्वं गोपालवृत्तिं प्रतिपद्य हृद्याम् ?॥६३॥

न मातरौ ! वत्सकरक्षणेन गोपालवृत्तिर्विदुषां मताऽस्ति ।
निरन्वयत्वाच्च तथापि युष्मन्निर्देशतोऽहन्नितयं कृतं तत् ॥ ६४ ॥
अतः परं नैव पुनर्नियोज्यो नेदृग् विधातास्मि कथञ्चनाऽपि ।
असून् परित्यक्तुमपि स्पृहावान् स्यात् सज्जनो नाऽनुचितं विधातुम् ॥६५॥
प्रति प्रभावं नृपनन्दनानां धाम्ना समुद्यन्नितरां स वत्सः ।
प्रबोधमापादयति स्म कञ्चित् पद्माकराणामिव भानुमाली ॥ ६६ ॥
स भोजनं तत्सविधे विधाय मध्यन्दिनादूर्ध्वमुपागतश्च ।
अभाणि ताभ्यामपरेद्युरेवं निश्चिन्तता वत्स ! तवाऽपि केयम् ?॥६७॥
न कष्टमस्माकमजातपूर्वं दृष्ट्वा सुखं स्थातुमिहोचितं ते ।
न सन्ति काष्ठान्यपि यद् गृहेऽस्मिन् यैः पच्यतेऽन्नं कृतकृत्यवित्तम् ॥६८॥
इतीरितः सोऽपि कठोरधारं पाणौ कुठारं विनिवेश्य वत्सः ।
विहङ्गिकामंसतले निधाय काष्ठान्युपाहर्तुमगाद् वनान्ते ॥ ६९ ॥
वनाद् वनं वर्धकिवद् भ्रमन् स कान्तारमन्तः सहसा विवेश ।
ददर्श यक्षायतनं च तत्र प्रौढप्रभावोऽपहतोपसर्गम् ॥ ७० ॥
न तद् वनं कश्चन पाणिनाऽपि यक्षस्य निस्सीममहामहिम्ना ।
शशाक संस्प्रष्टुमपि ज्वलन्तं वह्निं यथा तापकृताभ्युपायम् ॥ ७१ ॥
स भाग्यवांस्तत्र परिभ्रमंश्चाऽपश्यद् महाचन्दनशालमेकम् ।
पयोदवृन्दैरिव शम्भुशैलं व्यालैः समालम्बितमूलपादम् ॥ ७२ ॥
अपास्य तान् पापचयानिवाऽयं हस्तेन पुच्छेषु दृढं विधृत्य ।
स पर्शुना तस्य चकर्त शाखां सौरभ्यसंवासितदिग्गणस्य ॥ ७३ ॥
स खण्डशस्तां विरचय्य शाखां तच्छिक्ययुग्मं परिपूर्य सम्यक् ।
विहङ्गिकां न्यस्य निजांसदेश आभीरवद् धीरहितश्चचाल ॥ ७४ ॥
समुत्सुको मन्दिरमायियासुर्यावत् पुरीद्वारमवाप वत्सः ।
दिनाधिनाथोऽस्तमियाय तावत् तत्कष्टमालोकितुमक्षमो व ॥ ७५ ॥
तदैव चारक्षजनैर्नियुक्तैः पुर्याः प्रतोल्यः सकलाः पिनद्धाः ।
तत्रोद्घटन्तेऽभ्युदिते दिनेशे राजीवकोशा इव ताः प्रबद्धाः ॥ ७६ ॥
अनाप्नुवंस्तत्र ततः प्रवेशं स ध्यातवान् चान्ध्यविहीनचित्तः ।
ग्रहीष्यते कश्चन चन्दनं मे निद्रासमाश्लिष्टतनोरिहेदम् ॥ ७७ ॥
विचिन्त्य चैवं विनिवृत्य यक्षगेहान्तरेऽशेत दृढं प्रदाय ।

कपाटयुग्मं स विहङ्गिकां द्रोः शाखाप्रदेशद्वितयेऽवलम्ब्य ॥ ७८ ॥
निशीथकाले किल याममात्रं विद्याधरीवर्ग उपेत्य नृत्यम् ।
सदैव तस्यैलविलस्य चक्रेऽग्रे स्वर्गिकान्ताप्रतिरूपरूपः ॥ ७९ ॥
स्वकञ्चुकं काचन तत्र यान्ती स्थानं विसस्मार मणिप्रकाशम् ।
स कुञ्चिकानिर्व्यथनेन दृष्ट्वा निर्गत्य लात्वा च तदन्तरस्थात् ॥ ८० ॥
प्रभावती सा गुणतोऽपि नाम्ना विद्याधरी स्वालिजनं जगाद ।
गताऽर्धमार्गे स्मृतकञ्चुकाऽऽल्यो हा ! विस्मृतस्तादृशकञ्चुको मे ॥८१॥
प्रभावती वेगवती समेता व्यावृत्य तं प्रैक्षत तत्र साऽपि ।
अवीक्ष्य तं तत्र ततश्च ताभ्यां चित्ते व्यचिन्तीति सचेतनाभ्याम् ॥८२॥
मरुत्प्रणुन्नः स वनान्तरेऽगादुड्डीय कुत्राऽपि न वीक्ष्यते यत् ।
विमृश्य चैवं विपिनं भ्रमित्वा ताभ्यां समस्तं समवैक्ष्यताऽदः ॥ ८३ ॥
अवापि कुत्राऽपि स चाऽपि नैव दृष्टा परं तत्र विहङ्गिका सा ।
पुनर्व्यचिन्ति ध्रुवमस्ति कोऽपि यक्षस्य गेहे पुरुषः प्रसुप्तः ॥८४॥
विहङ्गिका तस्य विलोक्यते यत् सम्भाव्यते नैव विनाऽऽश्रयं सा ।
अनेन नूनं स परं गृहीतो नान्यः समागाद् न गतोऽपि कश्चित् ॥८५॥
तदेनमेवात्र विभीषयावो द्वारं समुद्घाट्य यथाऽर्पयेत ।
न खेचराणामपि वस्तु भीतः कश्चित् परित्रातुमलं यतोऽत्र ॥ ८६ ॥
हृदा विचिन्त्येति चिरं स ताभ्यां द्वाभ्यां स्वयं भीषितभीषितोऽपि ।
अधारयन् भीतिमवस्थितोऽन्तर्नोद्घाटयामास पुनः कपाटे ॥ ८७ ॥
भयान्न यक्षस्य निकेतनस्य द्वारं करेण स्पृशतोऽपि ते च ।
ततो मिथोऽमन्त्रयतामितीमे दूरेण तस्मादपसृत्य किञ्चित् । ८८ ॥
नरोऽत्र यः कश्चिदवस्थितोऽस्ति तस्यैव नूनं पितरावधृत्या ।
किमाविभातं विलपिष्यतो नैतस्यां क्षपायां विरहार्तिदूनौ ?॥ ८९ ॥
ततश्च मध्येनगरि व्रजित्वा श्रुत्वाऽस्य नामाद्यमुपेत्य चात्र ।
विलप्यते तद्ध्वनिना यथाऽयं द्वारं समुद्घाटयतेऽस्य भिन्नः ॥ ९० ॥
इतीदृशं ते लघु मन्त्रयित्वावन्त्यां गते मन्दिरमस्य बुद्ध्वा ।
सुदुःश्रवान् शुश्रुवतुर्विलापांस्तन्मातृमातृष्वसृदुःखजातान् ॥ ९१ ॥
न देवराजं न च देवराजं चित्ते न्यधावोपाचितं श्रियाऽपि ।
त्वदाशया वासितजीवितव्ये तन्माननां नाऽजगणाव वत्स ! ॥ ९२ ॥

न काष्ठभारानयने निदेशं भूयः प्रदद्वस्तव वत्सराज ! ।
अजानतीभ्यां यदिदं निदिष्टं पुत्रावकाभ्यामपि तत् क्षमस्व ॥ ९३ ॥
न जीवितं तिष्ठति नौ विना त्वामित्युक्तिरेषा विफलाऽधुनाऽभूत् ।
इदं कथङ्कारमथाऽपि वाच्यमाशापिशाची प्रबला यदस्ति ॥ ९४ ॥
तथा न कान्तस्य वियोगदुःखं ज्येष्ठस्य पुत्रस्य न चाऽप्यवेदि ।
न देशसाम्राज्यमहापदस्य हा ! हा ! यथा ते सहचारिणोऽद्य ॥ ९५ ॥
उपर्युपर्येव वितत्य दुःखं दुःखस्य नौ दैवमवाप तृप्तिम् ।
यथा तरङ्गस्य तरङ्गमब्धेर्यद्येतदद्यैव परं समीरः ॥ ९६ ॥
तयोरिदं ते परिदेवनं तच्छ्रुत्वा समागत्य तथा व्यधत्ताम् ।
अमन्यत च्छेकतयाऽप्यलीकं सर्वं स तच्चेष्टितमस्तदोषः ॥ ९७ ॥
निशावसाने निजमाश्रयं ते निर्विद्य विद्याधरवामनेत्रे ।
आगच्छतां, कः खलु धर्मराजात् प्राणान् परित्याजयितुं क्षमः स्यात् ?॥
अथ प्रभाकृत्प्रसरत्प्रभाभिर्मत्वा प्रभातं प्रभया परीतः ।
विहङ्गिकां प्रागिव संनिधाय मात्रोर्मुदा सार्धमवाप सद्म ॥ ९९ ॥
ततः स विक्रीय मनीषितार्थैस्तच्चन्दनं मन्दिरसौष्ठवं च ।
प्रसूतियोगेन विधाय योग्यां राज्ञः कुमारैर्निचितां बभाज ॥१००॥
सहोदरादभ्यधिकं कुमारैः संमान्यमानः पृथुमाननाऽर्हः ।
समं स तैरेव सदैव भुङ्क्ते कुत्रार्हणा यद् न गुणाधिकानाम् ?॥१०१॥
अथो कलाचार्ययुतान् महीन्द्रः पुत्रान् कलाकौशलशालमानान् ।
परीक्षितुं शस्त्रविशेषजाताभ्यासं समाजूहवदाप्तभृत्यैः ॥१०२॥
अमी प्रणम्रा नृपतेः पुरस्तात् स्वाभ्यासकौशल्यमदीदृशंस्तत् ।
तदन्तिकं वीक्ष्य च वत्सराजं पप्रच्छ तान् क्ष्मामघवाऽघवारः ॥१०३॥
कुमारकः कोऽयमपास्तमारः कान्त्या, सुतः कस्य किमाह्वयश्च ।
कुतश्च युष्माभिरनेन सङ्ग इत्येतदावेदयताऽङ्गजा मे ? ॥१०४॥
अवादि तैस्तात ! सदा खुरल्यामस्माकमस्यापि मिथोऽस्ति सङ्गः ।
इदं न विद्मः पुनरेष वीरः किंनामधेयस्तनयोऽपि कस्य ? ॥१०५॥
प्रदर्शयामास ततश्च शस्त्राभ्यासं नृपेणाभिहितः स वत्सः ।
पुनः सचित्रं परिपृष्ट एष तेन स्ववृत्तं प्रकटीचकार ॥१०६॥
अथो महिष्या कनकश्रियाऽसौ राज्ञः समीपस्थितया न्यगादि ।

मदीयजामेश्च मदग्रजायाः सूनुः प्रसूनायुधसंनिभस्त्वम् ॥१०७॥
इतीरयित्वा परिरभ्य सा तं देवी निजाङ्के न्यधिताऽधिसातम् ।
स्वजामियुग्मं स्वयमानिनाय श्रीधारिणीश्रीविमलाह्वयं तत् ॥१०८॥
निदेशमासाद्य नरेश्वरस्य सौधे निजेऽस्थापयदेव ते सा ।
अजीहरंस्ता मिलितास्तमोऽस्य तिस्रो यथा विष्णुपदीपदव्यः ॥१०९॥
मनोवचःकायसमुत्थचेष्टाः साधोर्यथाऽभिन्नतया प्रसिद्धाः ।
मिथो महाप्रेमरसानुबद्धास्तिस्रोऽनयंस्ताः समयं सुखेन ॥११०॥
स धारिणेयो धरणीशमेतं ग्रामादिकं तोपभराद्ददानम् ।
अनाथदेवं स्वमुखेन नाथ ! प्रेष्यस्त्वया सद्मनि सर्वदाऽहम् ॥१११॥
प्रमाणमित्याहृतवाचि राज्ञि श्रीवत्सराजोऽपि न संनिधानम् ।
जहौ नरेन्द्रस्य यथैव चेतः क्षेत्रज्ञनाम्नः पुरुषस्य नित्यम् ॥११२॥
विसृष्ट एव प्रभुणा प्रयाति स्वेनाननेनैव निकेतनं सः ।
सदा प्रतिज्ञाप्रतिपालकानामाद्यं च तं रञ्जयति स्म धीरः ॥११३॥
तमप्रहित्यैव स संविवेश वासालये भूपतिरेकदाऽयम् ।
सचन्द्रहासः स च चन्द्रहासस्तद्द्वारि तस्थौ स्थिरचित्तवृत्तिः ॥११४
पराक्रमागारमथार्धरात्रे राजा जजागार कथञ्चनाऽपि ।
तदैव कस्याश्चन दुःखितायाः शुश्राव नार्याः परिदेवितं सः ॥११५॥
विधेर्नियोगात् तव हाऽस्मि दूरे प्राणप्रिय ! प्रीतिरियं मुधा मे ।
विदीर्यते यद्धृदयं न पाकिवालुङ्किवल्लीफलवद् ममेदम् ॥ ११६ ॥
विवर्ण्यतां सैव न कौमुदी किं तस्याः प्रकाशः कथमेव माऽस्तु ? ।
अवाप्य जैवातृकमेव कान्तं या तं विना न क्षणमात्रमस्थात् ॥११७॥
नितम्बिनीषु प्रथमं विवर्ण्या सौदामनी तप्तसुवर्णवर्णा ।
पयोधरे गर्जति वल्लभे या दृष्टा जनैर्नाऽपरथा कथञ्चित् ॥ ११८ ॥
इतीदमीदृग् विनिशम्य सम्यग् भूमीपतिः प्राहरिकानवादीत् ।
प्रमीलया तेऽपि निमीलिताक्षाः सर्वेऽप्यभूवन् सुभटास्तदैव ॥ ११९॥
निदेशदानेन ममाधुनाऽपि स्वामी प्रसादं विदधातु विद्वान् ।
अमी पुनः प्राहरिकाश्च सन्तु निद्रासमाघ्रातविलोचनाब्जाः ॥१२०॥
इतीष्टविज्ञापनयाऽनयाऽपि श्रीवत्सराजस्य जगौ नरेन्द्रः ।
कथं गतस्त्वं भवनं नवाऽद्य स प्राह यद् नाऽनुमतोऽस्मि पादैः ?॥१२१

विलोकतां तर्हि जवेन गत्वा का नव्यशोका परिदीव्यतीयम् ? ।
इति क्षितीशस्य निदेशमाप्य श्रीधारिणेयः प्रचचाल नम्रः ॥ १२२ ॥
करे कृपाणं कलयन् स विद्युदुत्क्षिप्तनाम्ना करणेन शालम् ।
जवादतिक्रम्य पुरो जगाम शब्दानुसारेण विसारिसारः ॥१२३॥
चिताज्वलज्ज्वालकृशानुजालवित्रासितोदग्रमहान्धकारम् ।
प्रलम्बवेतालभयानकं स प्राप श्मशानं भवनं यमस्य ॥१२४॥
विलोक्य चोल्लम्बितमर्त्यपार्श्वे तत्र स्त्रियं काञ्चिदसौ रुदन्तीम् ।
अपृच्छदेतां महताऽऽग्रहेण चार्वङ्गि ! किं रोदिषि सम्प्रति त्वम् ? ॥१२५॥
उवाच सा मे प्रवरो वरोऽयमेतादृशीं दुर्विषहामवस्थाम् ।
अवापितो भूमिभुजा खलोक्त्या वाच्यं परं दुष्कृतमस्य यद्वा ॥१२६॥
तदेनमुद्बद्धमसिद्धपुण्यं निर्माय भुक्त्यै घृतपूरपूरम् ।
समाहृतं भोजयितुं न शक्ताऽऽक्रन्दामि तेनैव विलीनभाग्या ॥१२७॥
विबुध्य तस्या रुदिते निमित्तं प्रोचे स यद्येवमिदं यथार्थम् ।
स्वयं समारुह्य मदीयमंसं संपादय स्वाभिमतं तदाऽऽशु ॥१२८॥
इतीरणानन्तरमेव तेनाऽऽध्यारोपिता स्वांसतले मृताङ्गात् ।
निशातया कर्तिकया चकर्त सा मांसखण्डानि विमत्यखण्डा ॥१२९॥
प्रकुर्वती सा च तथा कथञ्चित् तत्स्कन्धदेशोपरि मांसखण्डम् ।
तदैककं पातयति स्म दुष्टा कस्तादृशीनां यदि वा विवेकः ? ॥१३०॥
तदीयदुर्वृत्तमिदं विलोक्य यावत् स खड्गं सहसा चकर्ष ।
खमुत्पपात प्रति तावदेषा तामञ्चले सोऽपि चलां दधार ॥१३१॥
घनादिपर्यन्तरथाभिधानमत्रान्तरे कोऽपि पुमानपृच्छत् ।
जिनाधिनाथं भगवंश्च केयं दुष्कर्म किं वा विदधाति चेदृक् ? ॥१३२॥
ततः स तीर्थप्रभुराख्यदेषा क्षुद्राशया व्यन्तरवामनेत्रा ।
अनार्यलोकोचितमादधाति दुष्कर्म पुंसां छलनापराऽत्र ॥१३३॥
सुराङ्गना अप्यमृतैकभोज्याः किं मांसमास्वादयितुं यतन्ते ? ।
यदीदृशं कर्म समाचरन्तीत्युक्तः पुनस्तेन जगौ जिनेन्द्रः ॥१३४॥
न जायते कावलिकः सुराणामाहार ईदृक् क कदाचनाऽपि ।
इदं परिक्रीडनमेव चास्या यज्जङ्गलोत्कर्तनमुख्यकर्म ॥१३५॥
धृताञ्चलं तत्परिधानवस्त्रं श्रीवत्सराजेन विहायसाऽगात् ।

विहाय सा मङ्क्षु ततः प्रभाते राज्ञे स तत्प्राभृतकं व्यधत्त ॥१३६॥
महीभुजा पृष्टचरः स नत्वा वृत्तं निशाया निजगाद वत्सः ।
स पट्टदेव्यै मुदितो नृदेवस्तद् दिव्यवासः प्रददौ सवासम ॥१३७॥
तदैव देवी परिधाय देवीवासः प्रवासप्रदमाधिभङ्ग्या ।
न मानसे निर्वृतिमाततान तद्योगसत्कञ्चुकवस्त्वभावात् ॥१३८॥
स धारिणेयोऽप्यधृतां निरीक्ष्य देवीं च विद्याधरवल्लभायाः ।
उपानयत् कञ्चुकमेव दिव्यं तं भूभुजे यद् न सतामदेयम ॥१३९॥
नृदेवदत्तं परिधाय देवी तं कञ्चुकं चाधिकमेव दुःखम् ।
बभार तद्रूपमहोत्तरीयाभावादसंतोषवतां न यच्छम् ॥१४०॥
समाध्यभावं महिषी दधाना नैषाऽपरेद्युर्बुभुजे कथञ्चित् ।
अमात्यधुर्यैरपि बोध्यमाना स्त्रीणां बलीयान् परमाग्रहो हि ॥१४१॥
भृशं तदालोकनतो नरेन्द्रं चिन्तापरिक्रान्तहृदं विचिन्त्य ।
कृताञ्जलिर्विज्ञपयाम्बभूव युक्त्योपयुक्तं स च धारिणेयः ॥१४२॥
न युज्यते मातरयं विधातुं संकल्पमात्रेण कदाग्रहस्ते ।
प्रमाणपूर्वव्यवहारिणस्तं यस्माद् बुधा दूषणमुद्गिरन्ति ॥१४३॥
न शक्यते कारयितुं न कर्तुं यच्छक्तिशैलैरपि नाऽत्र खेदः ।
मनुष्यलोके सुकृतोद्भवेऽपि स्वर्वासिवासांसि न संभवन्ति ॥१४४॥
भवेदथैवं यदि मर्त्यलोकस्वर्लोकयोः केन कृतो विशेषः ।
परिश्रमं कः सुकृताय कुर्यात् को वा निवर्तेत तथा च पापात् ? ॥१४५
घुणाक्षरन्यायवशाद् द्वयं तत् सम्प्राप्तमेवाऽत्र विना प्रयत्नम ।
भविष्यते तत्तव भाग्यभङ्ग्या तस्मादमुं मुञ्च मनोविषादम ॥१४६॥
अपेक्षितं कैश्चन किञ्चनाऽपि बुद्ध्याऽपि शक्त्याऽपि न साधितं यत्
विधिः परापेक्षितभङ्गनिष्ठः स्वापेक्षितं केवलमादधाति ॥१४७॥
नृपो न भुङ्क्ते प्रियतापरस्ते तद्भक्तिकृद् नो सचिवादिलोकः ।
प्रजाऽपि ते गास्यति दुर्यशस्तच्चन्द्रे कलङ्को यदयं ग्रहस्ते ॥१४८॥
इतीदृशैरस्य च वाक्यजातैर्यावद् ग्रहं नैव मुमोच राज्ञी ।
स देवराजानुज एव तावच्चक्रे प्रतिज्ञामविचार्य कार्यम् ॥१४९॥
मनोरथं ते यदि नैव मातः ! षण्मासमध्ये परिपूरयामि ।

१ सुखम् ।

अहं तदा दारुणदारुभारैर्जाज्वल्यमाने ज्वलने विशामि ॥१५०॥
इदं प्रतिश्रुत्य सदःसमक्षं राजानमानम्य जगद्विनम्यम् ।
प्रसूं सजामिं च, चचाल वत्सः प्राप्याऽऽशिषं दुर्लभकार्यसिद्ध्यै ॥१५१॥
शुभैः प्रणुन्नः शकुनैरनेकैर्जातां ब्रुवाणैरिव कार्यसिद्धिम् ।
भ्रमन् पुरग्राममहाकरेषु वीरो महाऽरण्यमसौ विवेश ॥ १५२ ॥
विशंस्तदन्तः स ददर्श चैकं क्षुद्रं पुरं क्षुद्रतया विमुक्तः ।
स चिन्तयामास समाधिहेतोः किं वेधसा निर्विजनेऽरचीदम् ?॥१५३॥
तदुच्चवप्रान्तरयं प्रविश्य क्षिप्रं दधद् विस्मयमस्मयं सः ।
लघिष्ठधामद्वितयोपलक्ष्यं प्रासादमभ्रङ्कषमाससाद ॥ १५४ ॥
तदन्तरध्यास्य सभानिविष्टं प्रैक्षिष्ट चैकं पुरुषं स शिष्टम् ।
अहो ! पुमान् कोऽयमिति प्रकृष्टः पृष्टः पुमांस्तेन च कोऽप्युवाच ? ॥
इतोऽस्त्यदूरे नगरं गरीयः सत्याभिधं भूतिलकाभिधानम् ।
विभूषणं यद् दधती धरित्री वैधव्यतां नो भजते कदाऽपि ॥ १५६ ॥
अशेषभूवल्लभमौलिसिंहश्रीवीरसिंहस्तदधीश्वरोऽभूत् ।
यदोजसा तर्जित एव सिंहः शङ्के त्रपावान् वनमध्युवास ॥ १५७ ॥
विशुद्धबुद्धिर्वसुधेशमान्यो दत्ताभिधस्तत्र महेभ्यकोऽस्ति ।
तदङ्गजा श्रीपदपूर्वदत्ता श्रीदेवकीकुक्षिभवा समस्ति ॥ १५८ ॥
मुदा पितृभ्यामुपलाल्यमाना साऽध्यापकाध्यापितसर्वविद्या ।
क्रमादसौ यौवनमाप बाला दृप्यन्मनोभूनृपरङ्गशाला ॥ १५९ ॥
तदैव तद्दुष्कृतसाहचर्याद् दोषोऽयमुन्मेषमवाप तस्याः ।
स पञ्चतां पञ्चजनः प्रयाति यो यामिकस्तां परिपाति तस्याम् ॥१६०॥
न रक्ष्यतेऽसौ यदि वा कथञ्चित् तत् पञ्चतां यान्ति जनाः प्रभूताः ।
किमायुषः सङ्क्षय एव मृत्युः किंवाऽन्यथा वेति जिनो विवेद ?॥१६१॥
अवेत्य वृत्तान्तमिदं जनोक्त्या राज्ञा स दत्तोऽभिहितः सुता ते ।
पुरक्षये हेतुरभूत् प्रयाहि त्यक्त्वा पुरं मे विषयान्तरं तत् ॥ १६२ ॥
इति क्षितीशस्य निदेशतोऽसौ तत्कालमागत्य वनेऽत्र तस्थौ ।
विधाय वप्राऽऽवृतमात्मसौधं पार्श्वे परीवारगृहद्वयं च ॥ १६३ ॥
तदीयनाम्ना सुतरां निवेशः ख्यातिं गतो दत्तपुराह्वयोऽयम् ।
न कोऽपि शेतेऽत्र परः क्षपायामेतत्परीवारकमन्तरेण ॥ १६४ ॥

विपद्यते चैकक एव मर्त्यः साधोः परीवारगतोऽस्य नित्यम् ।
अनामयं स्वस्य समीहसे चेत् तत्तूर्णमन्यत्र सखे ! प्रयाहि ॥ १६५ ॥
ततः कुमारोऽपि विहस्य किञ्चिद् दत्तेभ्यपार्श्वे दितभीर्जगाम ।
न सज्जनाः क्वापि भयं भजन्ते कर्मानुरूपं फलमामनन्तः ॥ १६६ ॥
अमुं समायान्तमवेक्ष्य सोऽपि पीठादुदस्थात् सह संभ्रमेण ।
असङ्गतानामपि दैवयोगाद् नैवौचिती भ्रश्यति सज्जनानाम् ॥ १६७ ॥
अगोपिताकारनिवेद्यशौर्यं वर्यासने तं विनिवेश्य पार्श्वे ।
महेभ्यदत्तोऽभ्यधित त्वमागाः कस्मात् पुराद् वत्स ! कुमारसार ! ? ॥
अहं समृद्धोज्जयिनीनगर्या अभ्यागमं कार्यवशादिहापि ।
परिभ्रमन् ग्रामपुराकरेषु ताततेति तं प्रत्यवदत् स धीमान् ॥ १६९ ॥
तनुश्रियाऽङ्गार इवाविकारप्रस्फारशृङ्गारधरोऽपि कृष्णः ।
पुमान् परिम्लानमुखस्तदैकस्तत्सान्निधौ मन्दपदः समागात् ॥ १७० ॥
स तं समीक्ष्योन्मनसं समेतमेतद् महेभ्यं स्फुटमभ्यधत्त ।
किमेष शृङ्गारविभासमानोऽप्यालम्बते तात ! सुदुर्मनस्त्वम् ? ॥१७१॥
विमुच्य निःश्वासततिं स दीर्घां वृत्तं सुतायास्तमवोचदिभ्यः ।
अमुष्य च प्राहरिकस्य चाद्य मत्पुत्रिकारक्षणवारकोऽस्ति ॥१७२॥
बिभर्ति तच्छयामलमेष वक्त्रं पञ्चत्वभीतेर्विजितान्यभीतेः ।
स्वभावकारुण्यरसाम्बुराशिः श्रुत्वेति तं व्याहरति स्म वत्सः ॥१७३॥
व्रजामि तां रक्षितुमद्य तात ! तिष्ठत्वयं कातरवर्गतातः ।
विहस्य दत्तोऽप्यवदत् स एष चौरस्य घातः स्वसरेण किं न ? ॥१७४॥
अयं तु मत्तन्त्रतमो मदीयग्रासाधिवासप्रवणः सदैव ।
प्रयातु तां पातुमयं ततस्त्वं निश्चिन्तचित्तः स्वपिहि स्वतन्त्रः ॥१७५॥
इति ब्रुवन्तं स महेभ्यदत्तं सद्वृत्तमापृच्छ्य महाऽऽग्रहेण ।
अगच्छदेतत्तनयाऽवनाय कीर्तिप्रियाकर्षणसाधनाय ॥ १७६ ॥
स्वकर्मनिर्माणविधौ प्रयत्नं कुर्वन्ति ये सन्ति गृहे गृहे ते ।
परार्थनिर्मापणनैपुणा ये सन्तः कियन्तः किल तेऽत्र सन्ति ? ॥१७७॥
अथापतन्तं तमवेक्ष्य धीरं शाणाविनिर्धूतकृपाणपाणिम् ।
महेभ्यदत्तस्य सुता सुरूपं दध्यौ स्वचित्ते धृतविस्मया सा ॥ १७८ ॥
महः समादाय दिनाधिनाथाद् रूपं पुनः शम्बरवैरिणोऽपि ।

मृगेश्वराच्छौर्यमहो ! विधात्रा सृष्टोऽयमेकोऽत्र महाद्भुताय ॥१७९॥
अहं समग्रास्वपि सुन्दरीषु पापीयसी केवलमस्मि यस्याः ।
कृते नृरत्नं तु विनङ्क्ष्यतीदं ज्ञानं यथाऽस्या अविनीततायाः ॥१८०॥
अहं पुरस्थोद्विजनाय जज्ञे कण्डूरिव प्राक् प्रसरं श्रयन्ती ।
ततः परेषामपि, हा ! कुतो मेऽपुण्योदयादेव न तत्क्षयाशा ? ॥१८१॥
विचिन्तयन्तीमिति दत्तकन्यामभ्येत्य स प्राहरिकस्थितिस्थः ।
मनोहरालापविशेषसृष्ट्या तां रञ्जयामास कलाविदग्धः ॥१८२॥
गते रजन्याः प्रथमेऽथ यामे सुष्वाप सा दत्तमहेभ्यकन्या ।
विमुच्य शय्यां स गवाक्षसृत्या सृत्वाऽऽनयत् पुम्भितकाष्ठखण्डम्॥१८३॥
विमुक्तमाच्छाद्य तदात्मतल्पे तेन प्रसर्पद्धिषणाधनेन ।
स्वयं समाकृष्य स मण्डलाग्रं छायां प्रदीपस्य विभीर्बभाज ॥१८४॥
क्षणाद् गवाक्षेण मुखं सुधांशुं संचूर्ण्य पूर्णं विधिनेव सृष्टम् ।
शनैः शनैः स प्रविशद् विलोक्य कृत्वाऽवधानं सविशेषमस्थात् ॥१८५॥
इतस्ततो वीक्ष्य गृहान्तरं तत्तेनापसस्रे वदनेन तूर्णम् ।
अथाविशत् पाणिरुपेतलज्जान् पद्मान् स्वरुच्या रचयन्निवाऽरम्॥१८६॥
महौषधीयुग्ममुरुप्रभावं हस्तेऽस्ति तस्मिन् वलयाकृतिभ्राट् ।
विनिस्सरेदेकत एव धूमो घातव्यथाया विलयो द्वितीयात् ॥१८७॥
विनिर्ययौ फूत्कृतिमात्रतोऽपि धूमस्य राशिः प्रथमादुदग्रः ।
प्रसारिणाऽपूर्यत तेन तस्य पस्त्यं जलौघैरिव वारिराशिः ॥१८८॥
सविस्मयस्तत् समवेक्ष्य वत्सराजोऽपि तस्थौ स गवाक्षपार्श्वे ।
प्रविश्य च प्राहरिकीं स शय्यां पाणिः परामृक्षदितस्ततोऽपि ॥१८९॥
स्वचिन्तितं किञ्चन च प्रपञ्चं पाणिः स यावत् कुरुते पुरावत् ।
जवात् कुमारस्तरवारिणा तं क्रोधारुणस्तावदयं जघान ॥१९०॥
महाप्रहारव्यथितोऽपि तस्या दिव्योऽयमित्यत्रुटदेष नैव ।
अमानवानामिव मानवानां यस्माच्छरीराणि न पार्थिवानि ॥१९१॥
विनिर्गते तत्र करे बहिष्टाद्धा ! वञ्चिता केनचिदस्मि बाढम् ।
आकर्ण्य तस्या इति वाक्यमुच्चैः पृष्ठे गवाक्षेण दधाव वीरः ॥१९२॥
पलायमानस्य जनस्य पृष्ठे धावेल्लघीयानिति सन्निवृत्तः ।
तदौषधीयुग्ममवैक्षताऽयं पाणेः प्रहारात् पतितं तदीयात् ॥ १९३ ॥

द्वयं तदादाय स जाग्रदेव यावत् पुनस्तिष्ठति तावदेषा ।
महेभ्यकन्या रजनीविरामे मीलत्प्रमीला समभूत् सहेला ॥ १९४ ॥
अमुं समीक्ष्याऽक्षतकान्तिगात्रं हृष्टा भृशं चिन्तयति स्म सैवम् ।
अहो! अयं नाऽपि महाप्रभावो व्यालोक्यते लोकविविक्तसत्त्वः ॥१९५॥
अरक्षदेवं स्वमनन्तशक्तिर्यो यामिकत्वं प्रतिपद्य हृद्यम् ।
नृरत्नविध्वंससमुद्भवाद् मां यो वा महापातकतः कृपालुः ॥ १९६ ॥
पराक्रमेणाऽर्जुन एष एव नित्यं यशोभिश्च समुन्नमाद्भिः ।
पितुर्मदीयस्य गतां कलङ्काद् व्यावर्त्तयत् कीर्तिगवीं य एवम् ॥ १९७ ॥
विवक्ष्यते चेदयमेव मां तद् मंस्ये सुखं वैषयिकं स्वतोऽपि ।
भवान्तरे चापरथाऽनुरूपं कान्तं विना किं सुखमस्ति यद्वा ? ॥१९८॥
तथाऽनुयुक्तः स च वत्सराजः स्माह स्वरक्षाचरितं यथावत् ।
विवर्णनीयं वरवर्णिनीयमाकर्ण्य तत् संमदमाससाद ॥ १९९ ॥
तदा जलाऽमत्रकरा भुजिष्या तत्राऽऽगमत् तत्करणीयनिष्ठा ।
तयाऽर्पितं साऽपि च दन्तकाष्ठं कृत्वा मुखं क्षालयति स्म तुष्टा ॥२००
निशम्य जीवन्तममुं महेभ्यो दासीमुखाद् विस्मित एत्य मङ्क्षु ।
निषद्य पीठे तनयावितीर्णे पप्रच्छ वत्सं तमुषाप्रबन्धम्[2] ॥ २०१ ॥
स धारिणेयोऽपि यथास्थितार्थां रात्रिप्रवृत्तिं निजगाद तस्य ।
गिरं विसंवादपदप्रयोज्यां प्राणात्ययेऽपि प्रवदन्ति न ज्ञाः ॥ २०२ ॥
तमभ्यधाद् दत्त उदारचित्तः पुत्रीप्रबन्धेन विवर्धमानः ।
मदन्ववायस्य कलङ्कपङ्कस्त्वच्छौर्यगाङ्गेयजलेन मृष्टः ॥ २०३ ॥
इमां ततस्त्वं स्वगुणार्थशक्तिक्रीतां समादत्स्व महानुभाव ! ।
निमित्तमात्रेण मया प्रदाने संबन्धवृत्त्यैव भविष्यतेऽस्याः ॥ २०४ ॥
अवोचदेषोऽपि कथं कुलाद्यविज्ञाय मे तात ! ददासि कन्याम् ? ।
उपेक्षणीयाऽपि न चापरीक्ष्य देया तथा साऽपयशस्तनोति ॥२०५॥
भवादृशा नापयशःपदं स्युः पुण्याशया वृत्तविदां पुरोगाः ।
विना नयस्य प्रतिपत्तिमत्र केषां न केषामयशः प्रवृत्तम् ? ॥ २०६ ॥
अथाऽभिलाषस्तव सत्क्रियायां सा किं न शक्याऽप्यपरोपचारैः ? ।
विधीयते तत् किल कर्म साधो ! सम्पादितं यच्च करोति सातम् ॥२०७

१ परिणेष्यते । २ रात्रिवृत्तम् ।

इतीरितं तस्य निशम्य हर्म्यी प्रोवाच वाचस्पतिवद् विदग्धः ।
कुलादिकं व्याहृतमेव वत्स! युष्मद्गुणै शौर्यविवेकमुख्यैः ॥२०८॥
उपेक्ष्यते चेत्तनया किमर्थं स्वां जन्मभूमिं स्वपुरं विहाय ? ।
पुरं क्रियेताऽत्र सदेकमर्त्यसंहारमप्याऽऽद्रियतां क एतम् ? ॥ २०९ ॥
विलोकनेनैव मणिप्रभाणां ये कुर्वते निर्णयमेकदृष्टया ।
नृरत्नमालोक्य विनिर्णयं ते कर्तुं जडाः किं किमुताथ मूकाः ? ॥२१०॥
परोपकारप्रवणाशयत्वं लोकोत्तरं ते कुलमब्रवीद् मे ।
प्रभाकृतो यादृशमस्ति तेजः खद्योतपोते हि न तादृशं स्यात् ॥२११॥
त्वयैव संयोगमवाप्य पुत्री पुण्यैरमीभिर्न कथं यशांसि ।
कुलस्य मालिन्यविलोपनेन सम्प्रापयिष्यत्यचिरेण मैषा ? ॥ २१२ ॥
दुराग्रहं तस्य विबुध्य वत्सो व्याचष्ट यद्येवमहो ! पुरस्तात् ।
विधाय कार्यं समुपैमि पश्चात्तातस्य निर्देशमहं विधास्ये ॥ २१३ ॥
इति ब्रुवन्तं स महेभ्यदत्तस्तं गाढमभ्यर्थ्य निजां तनूजाम् ।
विवाहयामास महोत्सवेन पद्मालयां विष्णुमिवाम्बुराशिः ॥ २१४ ॥
तमस्विनीं तामतिवाह्य तत्र वृत्तं प्रतिज्ञाप्रतिपत्तिपूर्वम् ।
निजं समाख्याय महेभ्यपुत्र्यै प्रातः प्रतस्थे स्थितिमान् स वत्सः॥२१५॥
महाटवीं श्वापदसंकुलां तामेतां समन्तादपि पर्यटन् सः ।
विशालशालैः कलितं पुरस्तादेकं पुरं प्रैक्षत निस्तरङ्गः ॥ २१६ ॥
अचिन्तयच्चाद्भुतरत्नक्लृप्तप्राकारविभ्राजि पुरं किमेतत् ? ।
न दृश्यते यत्र चतुष्पदानां बौद्धे मते जातिरपि प्रवृत्ता ॥ २१७ ॥
विचिन्त्य चैवं घनपद्मजातिपद्माकरे क्षालितविग्रहोऽयम् ।
श्रमापनोदाय स पालिशालच्छायां समालम्ब्य मनाग् निषण्णः॥२१८॥
निरीक्ष्य नारीजनमेव तत्र नीरं घटैरेव समाहरन्तम् ।
पुनः पुनः पुण्यमतिः स चैकां रामां बभाषे रमणीयमूर्तिम् ॥ २१९ ॥
इयं पुरी का सुतनु ! प्रशास्ता को वाऽत्र गोत्राधिपतिर्द्विधाऽपि ।
त्वदीयसीभिर्भवतीभिरेतद् भूयस्तमां वारि किमुह्यते वा ? ॥२२०॥
तदुक्तवाणीश्रवणोपलम्भरोमाञ्चिताङ्ग्या स तयाऽभ्यभाणि ।
इमां पुरीं व्यन्तरवध्व एव भद्र ! व्यधुः स्वैरविहारहेतोः ॥२२१॥

१ माम् ।

इदं पुरीस्वामिपदं बभार या व्यन्तरीणां च तथा समासाम् ।
क्वचिद् गता सा व्यथिता सुतीक्ष्णखड्गप्रहारेण करारविन्दे ॥२२२॥
प्रसेदुषा व्यन्तरनायकेन तस्या वितीर्णं वलयाकृतीडयम् ।
यदौषधीद्वन्द्वमवाप्तबाधहस्तात् तदा तत् पतितं विहस्तात् ॥ २२३ ॥
समस्तशस्त्रोपनिपातघाततीव्रव्यथासंहरणाय चैका ।
प्रकुर्वती त्वा घनधूमपूरं सम्पद्यते लोकविमोहनाय ॥ २२४ ॥
न तत्प्रयोगेण विना तदीयपाणेर्व्यथाः शान्तिमधिश्रयन्ते ।
जलाभिषेकेण च किञ्चनापि तेनैव वारीणि वहामहेऽरम् ॥ २२५ ॥
नरागदङ्कारविचारसारप्राप्तप्रतिष्ठोऽस्मि मदौषधेन ।
करव्यथायाः प्रशमो यदि स्यात् तस्या निगाद्यं तदिदं भवत्या ॥ २२६ ।
तदीरितं चेतसि सा निधाय देव्याः पुरस्तात् त्वरितं बभाषे ।
विलम्बमालम्ब्य न हि प्रवृत्तिः स्वस्वामिकार्याहितमानसानाम् ॥२२७॥
तमाह्वयामास तदैव देवी हर्षप्रकर्षाञ्चितनेत्रपद्मा ।
पुरा भिषग्विस्तरमाततान मायामधिष्ठाय स तन्निदेशात् ॥ २२८ ॥
सुरी परेद्युर्जलहारिणी साऽवादीत् कुमारं रहसि प्रसन्ना ।
करव्यथायाः शमनाद् ममैषा चेत् स्वामिनी तुष्यति भद्र! तुभ्यम् २२९
तदैव सौधोपरि वर्तमानं कन्यायुगं मन्मथरूप ! नाथेः ।
तथाऽश्वरूपाप्रतिरूपयक्षं पल्यङ्ककं कामितदानलक्ष्यम् ॥ २३० ॥
व्यथाऽपनोदाय ततश्च तस्या निर्माय निर्माय सविस्तरं तम् ।
तदौषधीयुग्ममपि प्रयुज्य तद्यातनां तां स निराचकार ॥ २३१ ॥
सुरीश्वरी व्यन्तरनायिका सा तोषाद् बभाषे तमपेतबाधा ।
इमं ममानर्थमजीजनस्त्वमामेति तेनाऽभिहिते त्ववादीत् ॥ २३२ ॥
त्वदाहितात् साहसतोऽस्मि तुष्टा किंचित्तदिष्टं मनसो वृणीष्व ।
इतीरितः सोऽपि तथैव धन्यः कन्यादिकं तत् प्रथमं ययाचे ॥ २३३ ॥
तमाह माहात्म्यनिधिः पुनः सा पुत्र ! ध्रुवं गेहभिदाऽत्र जज्ञे ।
सकर्ण ! कन्यादिजनिं ततस्त्वं मत्तः समाकर्णय चाप्रमत्तः ॥२३४ ॥
इहास्ति वर्षे कृतलोकहर्षे वैताढ्यभूमीधरभूषणं पूः ।
अभिख्यया या चमरादिचञ्चा चञ्चन्महाखेचरवेश्मरम्या ॥ २३५ ॥
प्रशास्ति तां शत्रुतृणौघगन्धवाहः क्षितीशः खलु गन्धवाहः ।

वधूद्वयं तस्य सुवेगिकाऽऽद्या जज्ञे द्वितीया मदनादिवेगा ॥ २३६ ॥
तयोः सुते द्वे क्रमशोऽप्यभूतां श्रीरत्नचूला रमणीषु रत्नम् ।
परा प्रतीता कनकादिचूला रम्भाप्रतिद्वन्द्वितयेव सृष्टा ॥ २३७ ॥
सरस्वतीवार्धिसुते इव द्वे विद्याधराधीश्वरपुण्ययोगात् ।
गृहेऽवतीर्णे समवेक्ष्य कस्ते न प्राप्यभावादभवद् विलक्षः ? ॥२३८॥
पितुः समालोकयतोऽपरेद्युस्ते यौवनोद्भेदविशेषरम्ये ॥
वरैकचिन्ताप्रसितस्य कोऽपि नैमित्तिकः संसदमाससाद ॥ २३९ ॥
चिराय जीवेति कृताशिषं तं पार्श्वे निविष्टं स नृपोऽप्यपृच्छत् ।
वरः कुमार्योरनयोर्ममाङ्ग ! को विज्ञ ! भावी विनिवेदयस्व ? ॥२४०॥
नैमित्तवित् तद् विगणय्य सर्वं सर्वंसहाऽधीश्वरमाललाप ।
महीपतीनां पुरतोऽविमृश्य वक्तुं न शक्यं मतिशालिनाऽपि ॥२४१॥
इमे महीगोचर ! माररूपश्रीवत्सराजस्य कुमारकस्य ।
भविष्यतो द्वे अपि वल्लभे तच्चिन्तामपास्य क्षितिपालराजः ॥२४२॥
ततस्तमूचे नृपतिर्मयैते क्ष्माचक्रवालस्थितिशालिनेऽस्मै ।
स्थितेन वैताढ्यमहीधरेऽस्मिन् केनाभ्युपायेन सुते प्रदेये ? ॥२४३॥
बभाण नैमित्तिक एव भूयस्तं भूमिभर्तस्तव सन्निधाने ।
अहो ! विवाहो भविताऽनयोर्न यज्जीवितं ते किल मासमात्रम् ॥२४४॥
महीपते ! याऽवनिगोचरेण श्रीसूरराजेन तवैव जामिः ।
विवाहिताऽभूज्जनकेन दत्ता सूरानुकल्पेन महौजसाऽपि ॥ २४५ ॥
स भूपतिः प्राच्यभवातिहार्दात् काञ्चित् समालोक्य कनीं सुरूपाम् ।
विवाह्य चाशक्तिवशादरंस्त सस्मार तस्यास्तु न नाममात्रम् ॥२४६॥
असूयया साऽपि ततः सपत्न्याः कृत्वा चिरं बालतपो विपद्य ।
अजायत व्यन्तरदेवता स्राक् तादृक्तपोभिः किमिवाप्तमेतत् ? ॥२४७॥
ताऽपि सूरस्य महीश्वरस्य प्राणप्रिया सा निधनित्वमाप्य ।
इहेभ्यदत्तस्य तनूभवा श्रीदत्ताऽभिधानप्रथिता बभूव ॥ २४८ ॥
अगण्यलावण्यनिधानभूता सा वर्तते साम्प्रतमुर्वशीव ।
विशेषतो व्यन्तरदेवता सा विद्वेषमुच्चैर्विदधाति तस्याम् ॥ २४९ ॥
विधास्यते यामिकभावमस्यां यो यामिकोऽपि प्रियतां विनाऽपि ।

---

१ त्यज ।

अवश्यमेव प्रकृतिप्रचण्डा तं प्रापयिष्यामि यमस्य वेश्म ॥ २५० ॥
इति स्वचित्तेऽवधिसंविदा तद्विद्वेषमन्तर्दधती विमृश्य ।
नरक्षयं सा कुरुतेऽद्यकल्ये तत्पार्श्वे एते प्रहिणुष्व तत्त्वम् ॥ २५१ ॥
महेभ्यदत्तस्य तनूभवायाः स्वीकृत्य स प्राहरिकत्वमीशः ।
भवत्स्वसुः पाणितलं प्रहृत्य दत्तस्य कन्यां परिणीय दत्ताम् ॥ २५२ ।
विधाय सज्जं करमेव तस्या दासीभिरावेदितवैद्यविद्यः ।
नृमारणं तद्विनिवार्य देव्यां कन्ये विवोढा तव वत्सराजः ॥ २५३ ॥

( युग्मम् )

इतीदृशीं खेचरभूमिभर्ता ज्योतिर्विदो वाचमसौ निशम्य ।
मदन्तिके द्वे इमिके विमुच्य किञ्चित्तपो दुस्तपमाचचार ॥ २५४ ॥
विपद्य स व्यन्तरनायकोऽभूद् मासावसाने विशदाशयोऽपि ।
समं विदित्वाऽवधिनैव तेन पल्यङ्कयक्षादि ददे मुदा मे ॥ २५५ ॥
तदेतदङ्गीकुरु सर्वमेव दत्तं मया तेऽपि निरामयाय ।
सुरीश्वरी सा विरराम कन्याद्युत्पत्तिमित्युक्तिपथं प्रणीय ॥ २५६ ॥
कनीयुगं तत्तयका प्रदत्तं पर्याप्तऋद्ध्यैव स पर्यणैषीत् ।
ददौतरां व्यन्तरनिर्जरी सा पल्यङ्कवाहादि च यौतके तत् ॥ २५७ ॥
सहाऽथ ताभ्यां प्रियवल्लभाभ्यां ज्योत्स्नाकलाभ्यामिव गौरधामा ।
निनाय कांश्चित् दिवसान् सकामो भुञ्जन् सुखं वैषयिकं स वत्सः ।
महेभ्यदत्तस्य तनूभवां तां प्राणप्रियामस्य हृदा विचिन्त्य ।
समुज्झितप्राग्भववैरवारा पुत्रीमिवाऽमन्यत देवताऽपि ॥ २५९ ॥
निशावसाने स निजां प्रतिज्ञां संस्मृत्य दध्यावपरेद्युरेवम् ।
अहं कथं कुञ्जरवन्निमग्नो हा ! हाऽस्मि सान्द्रे विषयोग्रपङ्के ॥ २६० ।
विभूषणं यत् पुरुषोत्तमानां विद्वद्भिरावेद्यत पाञ्चजन्यम् ।
यदृच्छया तद्भमितं मुधा तैर्येषां प्रतिज्ञा व्यभिचारिणी स्यात् ॥ २६१
सचेतनश्चेतसि चिन्तयित्वेत्यर्कोदये तां विनिवेद्य सन्धाम् ।
सुरीश्वरीं मातृपदप्रणत्या आपृच्छते स्म प्रतिपत्तिसारः ॥ २६२ ॥
तया विसृष्टः स समं प्रियाभ्यामारुह्य पल्यङ्कमपेक्ष्य यानम् ।
नभःपद्व्या भुवनानि पश्यन् श्रीदत्तयाऽध्यासितमाप वेश्म ॥ २६३ ।
स्ववासवेश्मोपरि वर्तमाना पल्यङ्कमालोक्य तुरङ्गयुक्तम् ।

अपेतनिद्रा प्रविधूततन्द्रा चित्ते चमत्कारमधारयत् सा ॥ २६४ ॥
मनुष्यपर्यङ्ककमुख्यभावा अत्राऽऽपतन्त्येव न चित्रमत्र ।
तुरङ्गमस्त्वेष कथं समायाद् मायां विना सप्तमभूमिभागम् ? ॥२६५॥
किमीदृशं विश्रुतमिन्द्रजालं दृष्टेर्भ्रमो वाऽथ मतिभ्रमोऽयम् ? ।
प्रकल्पयन्तीति मनोविकल्पान् पल्यङ्कपार्श्वे सहसा जगाम ॥ २६६ ॥
पटीं समुत्पाट्य निजं पतिं साऽपूर्वं द्वितीयाद्वितयोपगूढम् ।
स्मरं रतिप्रीतियुतं वितर्क्य दृष्ट्वा परानन्दमविन्दताऽरम् ॥ २६७ ॥
मनस्यसंमान्तमिव प्रमोदं वप्तुः पुरस्तं निजगाद साऽपि ।
ससंभ्रमः सोऽपि तदैव दत्तः सौधोपरिष्टात् समुदापपात ॥ २६८ ॥
विलोक्य जामातरमागतं तं सचक्रपाणिं कमलाधिवासम् ।
रत्नैरनेकैः कलितः प्रभाते श्रेष्ठी स रत्नाकरवत् तुतोष ॥ २६९ ॥
समाव्रजन्तं श्वशुरं समीक्ष्य पीठात् समुत्थाय ससंभ्रमस्तम् ।
ननाम, पृष्टः सकलं स्ववृत्तं पत्न्यैकया शंसयति स्म चैषः ॥ २७० ॥
शुभानुभावाच्छ्रुतिवर्त्म नीत्वा जामातृवृत्तान्तमसौ महेभ्यः ।
सविस्मयः स्वं बहु मन्यते स्म कः स्वावदानाद् बहुमानवान् न ?२७१॥
जनीत्रयेणैव विराजमानः शक्तित्रयेणेव स राजराजः ।
गते त्रियामाप्रथमांशयामे पल्यङ्कमारुह्य ययौ विशालाम् ॥ २७२ ॥
अदत्त दिव्यं वसनं स देव्यै स्वस्रे स्वमातुः कनकश्रियेऽस्यै ।
अहर्मुखे यत् परिधाय साऽपि देवीमिवात्मानममंस्त भूस्थाम् ॥ २७३॥
प्रयच्छता दिव्यपटं ममेमं वत्स ! त्वया पूरयता प्रतिज्ञाम् ।
यशःपटेनेन्दुसमुज्ज्वलेनैकेनाऽऽवृताः किं न दिशो दशापि ? ॥२७४॥
प्रशंसतीत्थं नृपवल्लभा सा पादारविन्दद्वितयं नमन्तम् ।
समुत् तमुत्सङ्गगतं विधाय मूर्धारविन्दं भ्रमरीव जघ्रौ ॥ २७५ ॥
सुरीश्वरीदत्तमहोपदाभिः कान्तात्रयालङ्कृतपार्श्वपृष्ठः ।
विनम्य तां मातरमादरेण मातृष्वसारं च समानसारम् ॥ २७६ ॥
विवाहसञ्जातमहोत्सवानां देशान्तरालोकितकौतुकानाम् ।
निवेदनेन प्रमदं वितन्वन्नेकोऽप्यनेकत्वमवाप भक्त्या ॥ २७७ ॥
( युग्मम् )

स वत्सराजस्तिसृभिः प्रियाभिर्मृत्युञ्जयो दृग्भिरिवाऽवभासे ।

अवश्यमेव प्रकृतिप्रचण्डा तं प्रापयिष्यामि यमस्य वेश्म ॥ २५० ॥
इति स्वचित्तेऽवधिसंविदा तद्विद्विपमन्तर्दधती विमृश्य ।
नरक्षयं सा कुरुतेऽद्यकल्ये तत्पार्श्वे एते प्रहिणुष्व तत्त्वम् ॥ २५१ ॥
महेभ्यदत्तस्य तनूभवायाः स्वीकृत्य स प्राहरिकत्वमीशः ।
भवत्स्वसुः पाणितलं प्रहृत्य दत्तस्य कन्यां परिणीय दत्ताम् ॥ २५२ ॥
विधाय सज्जं करमेव तस्या दासीभिरावेदितवैद्यविघ्नः ।
नृमारणं तद्विनिवार्य देव्यां कन्ये विवोढा तव वत्सराजः ॥ २५३ ॥
( युग्मम् )
इतीदृशीं खेचरभूमिभर्ता ज्योतिर्विदो वाचमसौ निशम्य ।
मदन्तिके द्वे इमिके विमुच्य किञ्चित्तपो दुस्तपमाचचार ॥ २५४ ॥
विपद्य स व्यन्तरनायकोऽभूद् मासावसाने विशदाशयोऽपि ।
समं विदित्वाऽवधिनैव तेन पल्यङ्कयक्षादि ददे मुदा मे ॥ २५५ ॥
तदेतदङ्गीकुरु सर्वमेव दत्तं मया तेऽपि निरामयाय ।
सुरीश्वरी सा विरराम कन्याद्युत्पत्तिमित्युक्तिपथं प्रणीय ॥ २५६ ॥
कनीयुगं तत्तयका प्रदत्तं पर्याप्तऋद्ध्यैव स पर्यणैषीत् ।
ददौतरां व्यन्तरनिर्जरी सा पल्यङ्कवाहादि च यौतके तत् ॥ २५७ ॥
सहाऽथ ताभ्यां प्रियवल्लभाभ्यां ज्योत्स्नाकलाभ्यामिव गौरधामा ।
निनाय कांश्चित् दिवसान् सकामो भुञ्जन् सुखं वैषयिकं स वत्सः ॥
महेभ्यदत्तस्य तनूभवां तां प्राणप्रियामस्य हृदा विचिन्त्य ।
समुज्झितप्राग्भववैरवारा पुत्रीमिवाऽमन्यत देवताऽपि ॥ २५९ ॥
निशावसाने स निजां प्रतिज्ञां संस्मृत्य दध्यावपरेद्युरेवम् ।
अहं कथं कुञ्जरवन्निमग्नो हा ! हाऽस्मि सान्द्रे विषयोग्रपङ्के ॥ २६० ॥
विभूषणं यत पुरुषोत्तमानां विद्वद्भिरावेद्यत पाञ्चजन्यम् ।
यदृच्छया तद्गमितं मुधा तैर्येषां प्रतिज्ञा व्यभिचारिणी स्यात् ॥ २६१
सचेतनश्चेतासि चिन्तयित्वेत्यर्कोदये तां विनिवेद्य सन्धाम् ।
सुरीश्वरीं मातृपदप्रणत्या आपृच्छते स्म प्रतिपत्तिसारः ॥ २६२ ॥
तया विसृष्टः स समं प्रियाभ्यामारुह्य पल्यङ्कमपेक्ष्य यानम् ।
नभःपदव्या भुवनानि पश्यन् श्रीदत्तयाऽध्यासितमाप वेश्म ॥ २६३ ॥
स्ववासवेश्मोपरि वर्तमाना पल्यङ्कमालोक्य तुरङ्गयुक्तम् ।

अपेतनिद्रा प्रविधूततन्द्रा चित्ते चमत्कारमधारयत् सा ॥ २६४ ॥
मनुष्यपर्यङ्ककमुख्यभावा अत्राऽऽपतन्त्येव न चित्रमत्र ।
तुरङ्गमस्त्वेष कथं समायाद् मायां विना सप्तमभूमिभागम् ? ॥२६५॥
किमीदृशं विश्रुतमिन्द्रजालं दृष्टेर्भ्रमो वाऽथ मतिभ्रमोऽयम् ? ।
प्रकल्पयन्तीति मनोविकल्पान् पल्यङ्कपार्श्वे सहसा जगाम ॥ २६६ ॥
पटीं समुत्पाट्य निजं पतिं साऽपूर्वे द्वितीयाद्वितयोपगूढम् ।
स्मरं रतिप्रीतियुतं वितर्क्य दृष्ट्वा परानन्दमविन्दताऽरम् ॥ २६७ ॥
मनस्यसंमान्तमिव प्रमोदं वप्तुः पुरस्तं निजगाद साऽपि ।
ससंभ्रमः सोऽपि तदैव दत्तः सौधोपरिष्टात् समुदापपात ॥ २६८ ॥
विलोक्य जामातरमागतं तं सच्चक्रपाणिं कमलाधिवासम् ।
रसैरनेकैः कलितः प्रभाते श्रेष्ठी स रत्नाकरवत् तुतोष ॥ २६९ ॥
समाव्रजन्तं श्वशुरं समीक्ष्य पीठात् समुत्थाय ससंभ्रमस्तम् ।
ननाम, पृष्टः सकलं स्ववृत्तं पत्न्यैकया शंसयति स्म चैषः ॥ २७० ॥
शुभानुभावाच्छ्रुतिवर्त्म नीत्वा जामातृवृत्तान्तमसौ महेभ्यः ।
सविस्मयः स्वं बहु मन्यते स्म कः स्वावदानाद् बहुमानवान् न ?२७१॥
जनीत्रयेणैव विराजमानः शक्तित्रयेणेव स राजराजः ।
गते त्रियामाप्रथमांशयामे पल्यङ्कमारुह्य ययौ विशालाम् ॥ २७२ ॥
अदत्त दिव्यं वसनं स देव्यै स्वस्रे स्वमातुः कनकश्रियेऽस्यै ।
अहर्मुखे यत् परिधाय साऽपि देवीमिवात्मानममंस्त भूस्थाम् ॥ २७३॥
प्रयच्छता दिव्यपटं ममेमं वत्स ! त्वया पूरयता प्रतिज्ञाम् ।
यशःपटेनेन्दुसमुज्ज्वलेनैकेनाऽऽवृताः किं न दिशो दशापि ? ॥ २७४ ॥
प्रशंसतीत्थं नृपवल्लभा सा पादारविन्दद्वितयं नमन्तम् ।
समुत् तमुत्सङ्गगतं विधाय मूर्धारविन्दं भ्रमरीव जघ्रौ ॥ २७५ ॥
सुरीश्वरीदत्तमहोपदाभिः कान्तात्रयालङ्कृतपार्श्वपृष्ठः ।
विनम्य तां मातरमादरेण मातृष्वसारं च समानसारम् ॥ २७६ ॥
विवाहसञ्जातमहोत्सवानां देशान्तरालोकितकौतुकानाम् ।
निवेदनेन प्रमदं वितन्वन्नेकोऽप्यनेकत्वमवाप भक्त्या ॥ २७७ ॥

( युग्मम् )

स वत्सराजस्तिसृभिः प्रियाभिर्मृत्युञ्जयो दृग्भिरिवाऽवभासे ।

प्रभूतभूत्याऽऽकलितः कलावल्लेखा दधानो वृषवाहनोऽपि ॥२७८॥
नृपप्रियाऽन्येद्युरभूत् सरोगा सा राजहंसीव पदात्यरागा ।
प्रियेण हंसेन च पर्यहारि चित्रं स्थिरं प्रेम न दृश्यते वा ॥ २७९ ॥
कथाऽवशेषत्वमुपागतायां तस्यां परं सुभ्रुवि भूमिपालः ।
अधीरधीः शोकविसंस्थुलः संश्चक्रे विमुग्धः परिदेवितानि ॥ २८० ॥
प्रियेऽङ्ग ! सप्ताङ्गमिदं मदीयं राज्यं विभाति त्वयका विनैव ।
करक्रमाऽऽस्यश्रुतिलोचनेषु भास्वत्सु ना नासिकया विनेव ॥ २८१ ॥
सुधारसस्पर्धनवार्धितास्ता वाचः क्व ते काक्षिविकूणितं च ? ।
युवाशयानङ्गविबोधनोत्कं सारं द्वयं किं जगृहे यमेन ? ॥ २८२ ॥
त्वदङ्गसङ्गप्रभवं मृगाक्षि ! जाने सुखं किञ्चन नापरत्र ।
अवाप्यते पुण्यवशेन यद्वा पुंसाऽमृतं तत्समता क्व चास्तु ? ॥२८३॥
इति प्रकुर्वन्तमिलापतिं तं बाढं विलापान् स तु वत्सराजः ।
प्रबोधयामास सुभाषितौघैः शोकोपतापोपशमाम्बुसारैः ॥ २८४ ॥
भवादृशश्चेद् विदधाति शोकं गाम्भीर्यसन्तर्जितसिन्धुमुद्रः ।
ततो ध्रुवं वाडवपावकेन शोषः समुद्रस्य सुखं क्रियेत ॥ २८५ ॥
तडिल्लताकुञ्जरकर्णतालदम्भोलिभृत्कार्मुकसारभागैः ।
विधीयते यद् विधिनाऽतिलोलमायुःक्षये शोचति तस्य को ज्ञः? ॥२८६॥
न यौवनं स्वं स्थिरतां तनोति संवेदनं नापि न चापि सारम् ।
न जीवितं तद् नृपते ! किमर्थं क्षुद्रस्य शोकस्य वशंवदाः स्थ ? ॥२८७॥
इतीदृशैस्तस्य वचःप्रपञ्चैः शोकं मुमोच क्षितिपालसिंहः ।
बलाहके वर्षति वा समन्तात् तापं महीध्रा अपि किं दधन्ताम् ? ॥२८८॥
स चैकदा स्वाभिमतं कुमार आलोचयामास समं प्रियाभिः ।
प्रियाः ! स्वयं वोऽनुमतेर्निमन्त्र्य क्ष्मापं गृहे भोजयितुं समीहे ॥२८९॥
अवादिषुस्ताः प्रिय ! भूप्रियो नाऽऽनेतुं गृहे युज्यत उत्सवेऽपि ।
अथासि भूमीपतिसच्चिकीर्श्चेत् तत्रैव तस्योचितमाचर त्वम् ॥२९०॥
जगौ स नो गौरवगौरता स्यादेवं प्रियास्तन्नृपतिं निमन्त्र्य ।
गृहे समाकार्य विकार्यवर्जं सत्कृत्य च स्वं चरितार्थयामः ॥ २९१ ॥
इदं यदि स्वान्तगतं तवेश ! तद् दर्शनीया वयमेव नाऽस्मै ।
इति प्रपद्योपनृपं गतस्तं स प्रार्थयामास निमन्त्रणेन ॥ २९२ ॥

महीमहेन्द्रस्तमुदाजहार वत्साऽऽहितं चैतदुपक्षयाय ।
कृतं प्रवृत्त्याऽप्यनयाऽथ मानप्रख्यापनं ते भविताऽन्यथाऽपि ॥२९३॥
न मानसम्भावनमन्यथाऽहं जाने जनाधीश ! विनाऽऽगमेन ।
उपक्षयं ते गणयन्ति येषां स्वामिप्रसादो न मनागपीह ॥ २९४ ॥
विलोकनं ते वदनस्य राजन् ! साक्षाद् महापद्ममवैमि सारम् ।
विकाशने स्वस्य न यद्व्यपेक्षा सूरोदयस्यापि कदाचनापि ॥२९५॥
विलोचने ते जयतः स्म पद्मं जाते यदेते भुवनोदयाय ।
व्यजेष्ट शङ्खं तव देव ! कण्ठो रेखात्रयं प्राप जगत्त्रयाद् यत् ॥२९६॥
त्वयाऽवधूतो मकरध्वजोऽयं यद् देहकान्त्या मकरोऽजितस्तत् ?।
क्षमाभरं धारयताऽनपेक्षं व्यक्तं जितः किं न स कच्छपोऽपि ? ॥२९७॥
श्रिया मुकुन्दादुपगत्य यत्त्वं स्वैरं श्रितस्तद् विधुतो मुकुन्दः ।
द्विजैरमीभिस्तव कुन्दकान्तिर्यत्तर्जिता कुन्दजयस्ततस्ते ॥ २९८ ॥
यशश्चयैर्विश्वविसृत्वरैस्ते नीलः पराभावि नितान्तगौरैः ।
नयागमे ते रसनाऽग्र एव चर्चा श्रिता तेन जितः स चर्चः ॥२९९॥
ततो निधीनां परमो नवानां त्वं राजराजत्वपदं दधानः ।
उपक्षयान्नाथ ! कथं बिभेषि मन्मन्दिरान्तःपदमादधानः ?॥३००॥
इति प्रक्लृप्ताग्रहतो निमन्त्र्य क्षोणीपतिं वेश्मनि वत्सराजः ।
उपागतः स प्रियवल्लभाभिः प्राक्रंस्त ताभिः सह सारिखेलाम् ॥३०१॥
कियान् कृतः पाक उदात्तबुद्धेः श्रीवत्सराजस्य गृहेऽस्ति गत्वा ।
निभालयेति क्षितिपालधुर्यो दौवारिकाधीश्वरमादिदेश ? ॥ ३०२ ॥
स मङ्क्षु तद्वेश्म गतः कुमारस्याऽम्बां विनम्येति समन्वयुङ्क्त ।
कुमारनागः क्व, जगाद साऽपि वातायने खेलति खेलनीभिः ?॥३०३॥
समन्ततो वीक्ष्य गृहं समस्तं पृष्ट्वेति तत्कालमयं निवृत्तः ।
व्यजिज्ञपद् भूमिपतिं विनम्य धूमोऽपि तत्राऽस्ति न पाकचिह्नम् ॥३०४॥
विलोकयस्व प्रतिवेशिसद्मान्येतस्य गत्वा किल तेषु पाकः ।
विधापितः स्यादिति भूमिभर्ता भूयस्तमादिक्षदद्दष्टदोषः ॥ ३०५ ॥
अदर्शि पाकः प्रतिवेशिनीभिर्विधीयमानो न मनागपीति ।
पुनर्निरीक्ष्याऽऽगत एष भूपं दौवारिको विज्ञपयाम्बभूव ॥ ३०६ ॥
मयाऽपि साकं कुरुते कुमारः किं नाम हास्यं मनसाऽविमृश्यम् ? ।

प्रभूतभूत्याऽऽकलितः कलावल्लेखा दधानो वृषवाहनोऽपि ॥२७८॥
नृपप्रियाऽन्येद्युरभूत् सरोगा सा राजहंसीव पदात्यरागा ।
प्रियेण हंसेन च पर्यहारि चित्रं स्थिरं प्रेम न दृश्यते वा ॥ २७९ ॥
कथाऽवशेषत्वमुपागतायां तस्यां परं सुभ्रुवि भूमिपालः ।
अधीरधीः शोकविसंस्थुलः संश्चक्रे विमुग्धः परिदेवितानि ॥ २८० ॥
प्रियेऽङ्ग ! सप्ताङ्गमिदं मदीयं राज्यं विभाति त्वयका विनैव ।
करक्रमाऽऽस्यश्रुतिलोचनेषु भास्वत्सु ना नासिकया विनेव ॥ २८१
सुधारसस्पर्धनवार्धितास्ता वाचः क्व ते काक्षिविकूणितं च ? ।
युवाशयानङ्गविबोधनोत्कं सारं द्वयं किं जगृहे यमेन ? ॥ २८२ ॥
त्वदङ्गसङ्गप्रभवं मृगाक्षि ! जाने सुखं किञ्चन नापरत्र ।
अवाप्यते पुण्यवशेन यद्वा पुंसाऽमृतं तत्समता क चास्तु ? ॥२८३॥
इति प्रकुर्वन्तमिलापतिं तं बाढं विलापान् स तु वत्सराजः ।
प्रबोधयामास सुभाषितौघैः शोकोपतापोपशमाम्बुसारैः ॥ २८४ ॥
भवादृशश्चेद् विदधाति शोकं गाम्भीर्यसन्तर्जितसिन्धुमुद्रः ।
ततो ध्रुवं वाडवपावकेन शोषः समुद्रस्य सुखं क्रियेत ॥ २८५ ॥
तडिल्लताकुञ्जरकर्णतालदम्भोलिभृत्कार्मुकसारभागैः ।
विधीयते यद् विधिनाऽतिलोलमायुः क्षये शोचति तस्य को ज्ञः? ॥२८
न यौवनं स्वं स्थिरतां तनोति संवेदनं नापि न चापि सारम् ।
न जीवितं तद् नृपते ! किमर्थं क्षुद्रस्य शोकस्य वशंवदाः स्थ ? ॥२८
इतीदृशैस्तस्य वचःप्रपञ्चैः शोकं मुमोच क्षितिपालसिंहः ।
बलाहके वर्षति वा समन्तात् तापं महीध्रा अपि किं दधन्ताम् ? ॥२८
स चैकदा स्वाभिमतं कुमार आलोचयामास समं प्रियाभिः ।
प्रियाः ! स्वयं वोऽनुमतेर्निमन्त्र्य क्ष्मापं गृहे भोजयितुं समीहे ॥२८९
अवादिषुस्ताः प्रिय ! भूप्रियो नाऽऽनेतुं गृहे युज्यत उत्सवेऽपि ।
अथासि भूमीपतिसच्चिकीश्चेत् तत्रैव तत्स्वोचितमाचर त्वम् ॥२९०॥
जगौ स नो गौरवगौरता स्यादेवं प्रियास्तन्नृपतिं निमन्त्र्य ।
गृहे समाकार्य विकार्यवर्जं सत्कृत्य च स्वं चरितार्थयामः ॥ २९१ ॥
इदं यदि स्वान्तगतं तवेश ! तद् दर्शनीया वयमेव नाऽस्मै ।
इति प्रपद्योपनृपं गतस्तं स प्रार्थयामास निमन्त्रणेन ॥ २९२ ॥

महीमहेन्द्रस्तमुदाजहार वत्साऽऽहितं चैतदुपक्षयाय ।
कृतं प्रवृत्त्याऽप्यनयाऽथ मानप्रख्यापनं ते भविताऽन्यथाऽपि ॥२९३॥
न मानसम्भावनमन्यथाऽहं जाने जनाधीश ! विनाऽऽगमेन ।
उपक्षयं ते गणयन्ति येषां स्वामिप्रसादो न मनागपीह ॥ २९४ ॥
वेलोकनं ते वदनस्य राजन् ! साक्षाद् महापद्ममवैमि सारम् ।
वेकाशने स्वस्य न यद्यपेक्षा सूरोदयस्यापि कदाचनापि ॥२९५॥
वेलोचने ते जयतः स्म पद्मं जाते यदेते भुवनोदयाय ।
यजेष्ट शङ्खं तव देव ! कण्ठो रेखात्रयं प्राप जगत्त्रयाद् यत् ॥२९६॥
वयाऽवधूतो मकरध्वजोऽयं यद् देहकान्त्या मकरोऽजितस्तत् ?।
क्षमाभरं धारयताऽनपेक्षं व्यक्तं जितः किं न स कच्छपोऽपि ? ॥२९७॥
श्रेया मुकुन्दादुपगत्य यत्त्वं स्वैरं श्रितस्तद् विधुतो मुकुन्दः ।
द्विजैरमीभिस्तव कुन्दकान्तिर्यत्तर्जिता कुन्दजयस्ततस्ते ॥ २९८ ॥
यशश्चयैर्विश्वविसृत्वरैस्ते नीलः पराभावि नितान्तगौरैः ।
नयागमे ते रसनाऽग्र एव चर्चा श्रिता तेन जितः स चर्चः ॥२९९॥
ततो निधीनां परमो नवानां त्वं राजराजत्वपदं दधानः ।
उपक्षयान्नाथ ! कथं बिभेषि मन्मन्दिरान्तःपद्मादधानः ?॥३००॥
इति प्रक्लृप्ताग्रहतो निमन्त्र्य क्षोणीपतिं वेश्मनि वत्सराजः ।
उपागतः स प्रियवल्लभाभिः प्राक्रंस्त ताभिः सह सारिखेलाम् ॥३०१॥
कियान् कृतः पाक उदात्तबुद्धेः श्रीवत्सराजस्य गृहेऽस्ति गत्वा ।
निभालयेति क्षितिपालधुर्यो दौवारिकाधीश्वरमादिदेश ? ॥ ३०२ ॥
स मङ्क्षु तद्वेश्म गतः कुमारस्याऽम्बां विनम्येति समन्वयुङ्क्त ।
कुमारनागः क्व, जगाद साऽपि वातायने खेलति खेलनीभिः ?॥३०३॥
समन्ततो वीक्ष्य गृहं समस्तं प्रष्ट्वेति तत्कालमयं निवृत्तः ।
व्यजिज्ञपद् भूमिपतिं विनम्य धूमोऽपि तत्राऽस्ति न पाकचिह्नम् ॥३०४॥
विलोकयस्व प्रतिवेशिसद्मान्येतस्य गत्वा किल तेषु पाकः ।
विधापितः स्यादिति भूमिभर्ता भूयस्तमादिक्षदहृष्टदोषः ॥ ३०५ ॥
अदर्शि पाकः प्रतिवेशिनीभिर्विधीयमानो न मनागपीति ।
पुनर्निरीक्ष्याऽऽगत एष भूपं दौवारिको विज्ञपयाम्बभूव ॥ ३०६ ॥
मयाऽपि साकं कुरुते कुमारः किं नाम हास्यं मनसाऽविमृश्यम् ? ।

महोपरोधेन निमन्त्र्य यन्मां पाकोऽपि नाऽकारि गृहेऽपि तेन ॥३०७॥
रुषं वितन्वन्निति चेतसाऽयं यावद् नृपस्तिष्ठति तावदागात् ।
ब्रुवन् कुमारोऽयमिति प्रसीद मन्मन्दिरं पावय पादपद्मैः ॥ ३०८ ॥
दधल्ललाटे भ्रकुटिं ललामः क्षोणीभुजामेष तमेवमाह ।
न युज्यतेऽस्माभिरमा तवाऽपि शिष्यस्य विद्यागुरुणेव हास्यम् ॥३०९॥
प्रगे यदस्मान् विनिषेधतोऽपि शक्त्या निमन्त्र्योपगतेन सद्म ।
पराऽस्तु भोज्यस्य विशेषभङ्गी नैवाऽन्नपाको जनितस्त्वयाऽपि ॥३१०॥
वितन्वते केऽपि परेऽपि भृत्या न स्वामिपादैः सह देव ! हास्यम् ।
अहं महाराजपदोपजीवी तत्किं विनिर्मातुमपि क्षमोऽस्मि ? ॥ ३११ ॥
कदापि वाचि व्यभिचारिता मे निर्धारिता नास्ति यदि त्वयेश ! ।
तदा समागत्य गृहं पुनीहि देवोऽपि विज्ञास्यति तत्र सर्वम् ॥ ३१२ ॥
विधेयतां दर्शयताऽतितुच्छं विज्ञप्त इत्येष कुमारकेण ।
गजेन्द्रमारुह्य नरेन्द्रवर्यः सामन्तभृत्यैः सहितश्चचाल ॥ ३१३ ॥
अमात्यवर्येण वितीर्णबाहुस्तन्मन्दिरद्वारि जनाधिनाथः ।
सुवर्णरत्नाभरणावभासिस्तम्बेरमादुत्तरति स्म तूर्णम् ॥ ३१४ ॥
पुरस्सरीभूय ससंभ्रमोऽथ श्रीवत्सराजः करकं गृहीत्वा ।
हिरण्मयं द्वारविभूषणाय क्षोणीभुजेऽभ्युक्षणमाश्वऽदत्त ॥ ३१५ ॥
भुजिष्यसज्जीक्रियमाणनागवल्लीदलाग्रेसरवीटिकौघम् ।
क्वचित् क्वचित् स्थापितपीठकोटिकोटिस्खलल्लोकपदप्रपातम् ॥ ३१६ ॥
क्वचित् कृतालेपनसिद्धधान्यस्थालीशताकीर्णमवाप्तशोभम् ।
गृहान्तरं चास्य विशन् नरेशो व्यालोकयामास सविस्मयः सन्॥३१७॥
( युग्मम् )
मुहुर्मुहुर्वाचमिमामुदीर्णा पदोऽवधानं रचयेति जल्पन् ।
स्वयं भुजालम्बमयं प्रदाय सौधोपरिष्टाद् नृपतिं निनाय ॥ ३१८ ॥
मसूरकैः सप्तभिरावृतं तत्क्षौमांशुकीयैस्तलिनैर्विचित्रैः ।
अलंचकार क्षितिपालसिंहः सिंहासनं तत्र चतुष्कभूमौ ॥ ३१९ ॥
समाद्य तन्मौक्तिकमेव वृत्तं विश्वम्भराऽधीशघनागमेन ।
शुभार्जनस्वातिकतारयोगादित्यन्तरुद्भावयितुं प्रवृत्तः ॥ ३२० ॥

कराम्बुरुट्शुक्तिपुटं दधानः सामुद्रिकक्षेत्रकलक्षणोत्थम् ।
महीमघोनः पुरतो निविष्टः श्रीवत्सराजो गिरमुज्जगार ॥ ३२१ ॥
( युग्मम् )

भवादृशाः सद्मनि मादृशानां पुण्योत्तमाः पुण्यविवर्जितानाम् ।
कदापि नैवोपनमन्ति गौरा यद्राजहंसा न मरौ रसेच्छाः ॥ ३२२ ॥

समागतं यत् किल राजहंसैर्विस्फूर्जितं यत् कमलाकरैश्च ।
प्रसन्नमाशाभिरलं यदाभिः किं नो स मे पुण्यशरत्प्रकर्षः ? ॥ ३२३ ॥

इतीदृशोक्तीरभिधाय हेमस्थालं महीयः स च मण्डयित्वा ।
अबूभुजत् तं परमान्नभोज्यं स्वादप्रतिध्वस्तसुधारसौघम् ॥ ३२४ ॥

बहुप्रकारं विनिवारितेन कान्तेन तेनैव नियोजितास्ताः ।
पतिव्रता अश्नति भूपतौ स्म दध्यादि सर्वं परिवेषयन्ति ॥ ३२५ ॥

मनोवचःकायविचेष्टितानि विद्धानि राज्ञः सममेव ताभिः ।
प्रदर्शयन्तीभिरलं स्वरूपं चित्रं नु भल्लीभिरिव स्मरस्य ॥ ३२६ ॥

तदैककेयं किमुतैकके द्वे तिस्रोऽथ निर्णेतुमयं न शक्तः ।
विचित्रनेपथ्यविभूषणानां पश्यन् विशेषं क्षणिकं स तासाम् ॥ ३२७ ॥

अहो ! स्मरव्याधपतेरिहापि कौशल्यमालोक्यत एव लोकैः ।
अवीक्षितं विध्यति हन्त ! पौष्पैर्बाणैर्मनोमत्तमतङ्गजं यः ॥ ३२८ ॥

किमेतदास्ते कटुकं किमेतत् तिक्तं किमेतत् मधुरं किमम्लम् ।
कषायभाक् किं लवणं किमेतदित्यादि वेद स्म तदा न सोऽपि ? ॥ ३२९ ॥

स्वकुक्षिसात् सर्वमिवापि कुर्वन् साक्षात् पिशाचो बुबुधे स ताभिः ।
अयं नरत्वेऽपि सुपर्वभावं तन्वन् मनोभूः कथमस्तु वाच्यः ? ॥ ३३० ॥

नृपं कृताचामविधिं विधिज्ञः कोटीरहारादिविभूषणौघैः ।
अमात्यसामन्तभुजिष्यभृत्यैः प्रीतः स सर्वैः सह सच्चकार ॥ ३३१ ॥

धराधवः सौधमगात्तदैव पञ्चेषुपञ्चेषुभिराहतोऽयम् ।
विनाकृतस्तत्क्षणमेव रत्याऽमात्यानिति स्माऽऽह रहः स्ववृत्तम् ॥ ३३२ ॥

यदैव वत्सप्रियकामिनीनां लावण्यमेतद् मयका निपीतम् ।
तदा प्रभृत्येव विबाधते मां बंहीयसी तद्विषयेषु तृष्णा ॥ ३३३ ॥

तदत्र कञ्चित् कुरुताऽभ्युपायं तासां यथा सङ्गमहं लभेय ।
विहाय युष्मान् न परे हि पृच्छयाः सन्देहदोलायितमानसानाम् ॥ ३३४ ॥

अमात्य एको निजगाद तत्त्वमस्मिन्नये ! जीवति वीरवर्ये ।
क्षमेत को नाम नरो ग्रहीतुं प्राणप्रियाः सिंहसटाच्छटा वा ? ॥३३५॥
सदःसमेतः स ततः कुमारः श्रीसिंहभूमीपतिपीठ एव ।
निषाद्यते त्यक्तविषादभारस्तेनाऽऽप्यते मृत्युमुखं यथाऽयम् ॥३३६॥
इति प्रबन्धे विहितेऽपवादोऽप्यार्यस्य कश्चिन्न भवेज्जगत्याम् ।
परैरमात्यैरपि मन्त्र एष प्राशंसि मूर्ध्नः परिधूनयद्भिः ॥ ३३७ ॥
सदःश्रितः सोऽपि समैः सदस्यैः सिंहाभिधस्यावनिवासवस्य ।
निवेश्यते स्माऽऽसन एव पूर्वं मुक्ते व्यवस्थाप्य हतव्यवस्थम् ॥३३८॥
व्रजन्नसौ वेश्म नृसिंहसौधात् सिंहाङ्कितद्वारि कुमारसिंहः ।
अनूत्थितेन क्रुधया प्लुतेन श्रीसिंहराजेन युधे न्यरोधि ॥ ३३९ ॥
अरे ! वृथामानविडम्बितात्मन् ! मामप्यविज्ञाय ममासने त्वम् ।
निविश्य गन्तासि वराक ! कुत्र तार्क्ष्यं समाक्रम्य यथा भुजङ्गः? ॥३४०॥
निशम्य सिंहस्य वचःप्रपञ्चं शौर्येण सिंहः स कुमारसिंहः ।
युधं विधातुं ववले बलीयान् को वाऽपमानं सहतां समर्थः ? ॥३४१॥
नियुद्धमाविष्कुरुतः स्म किञ्चित्तौ दृग्विनोदाय विलोककानाम् ।
ततः कुमारोऽधिकलाघवेन सिंहं नरेन्द्रं सहसा व्युदासे ॥ ३४२ ॥
समन्ततोऽपि स्वशिरः ससिंहं विभ्रम्य विभ्रम्य रुषाऽक्षिपद् द्राक् ।
स्वपौरुषन्युञ्छनकर्मवाञ्छासाफल्यनिर्माणतयेव वीरः ॥ ३४३ ॥
पुराददूरे पतितस्य तीव्रभूपातघातादसुभिः प्रयाणम् ।
अकारि सिंहस्य नरेश्वरस्य भूयोऽभिघातादिव जातशङ्कैः ॥ ३४४ ॥
गृहं गतः सोऽपि च खेचरीभ्यामाभाष्यते स्म प्रियभाषिताभ्याम् ।
पुरा निषिद्धोऽसि निमन्त्रयंस्त्वं प्राणप्रिय ! क्षोणिपतिं दुराशम् ॥३४५॥
कुमन्त्रितेन स्वविनिर्मितेन प्राप्तोऽसि किं जीवितसंशयं न ? ।
अवाप्स्यसेऽद्याप्यपरीक्षितद्रोरापाततोऽनर्थफलं विशालम् ॥ ३४६ ॥
परं च सिंहक्षितिपो विपेदेऽस्मद्घाततः स्थामसमाश्रयोऽपि ।
तथाऽऽर्यपुत्र ! प्रयतः प्रमादमुत्सार्य भूया इह सावधानः ॥ ३४७ ॥
नृसिंहसिंहं निहतं निशम्य श्रीवत्सराजेन महाभुजेन ।
महीभुजाऽऽकार्य वितार्य पीठान् भूयोऽपि पृष्टा व्यमृशन्नमात्याः ॥३४८॥
हतोऽमुना सिंहपराक्रमोऽपि सिंहः कथञ्चिद् बलवत्तमेन ।

अनेन तद् मानमहाधनेन व्याघ्रीपयः साम्प्रतमानयामः ॥ ३४९ ॥
अवश्यमेवाश्रवचक्रवर्तीमां स्वामिशिष्टिं प्रतिपत्स्यते सः ।
चिरादुपायेन यमातिथिर्न संपत्स्यतेऽनेन विनिश्चयेन ॥ ३५० ॥
इति प्रयुक्तात् सचिवात् सुमन्त्रादन्येद्युरायातमिलाबलारिः ।
पयः समानेतुममुं विनीतं व्याघ्र्याः समादिक्षदनामयाय ॥ ३५१ ॥
महीशितुः शासनमभ्युपेत्य वेश्माऽऽगतः शासितशत्रुवर्गः ।
अभाषि ताभ्यामिति खेचरीभ्यां प्रापि प्रिय ! क्षुद्रतरो निदेशः ॥३५२॥
इदं युवाभ्यामपि केन कान्ते ! वेगात् समागत्य निवेदितं तत् ? ।
अवादि ताभ्यामथ तं प्रतीदं तत्र स्थिते शुश्रुवहे स्वयं नौ ॥ ३५३ ॥
यदीश ! भूमीशसमागमस्य घस्रं समारभ्य कृताभिशङ्के ।
अदृश्यरूपे सततं भ्रमावोऽनु त्वाऽन्तरायप्रलयाय कान्त ! ॥ ३५४ ॥
निदेशसिद्ध्यै च [1]वजाऽतिभीमां यक्षाश्वमारुह्य महाटवीं त्वम् ।
समस्ति या तत्र पवित्रगात्रा क्षेत्राधिपाऽसज्जननीसखी सा ॥३५५॥
अरण्यदेशेऽनिशमेव तत्र व्याघ्रीस्वरूपं दधती च साऽस्ति ।
तुरङ्गमेतं सहसोपलक्ष्य सा साधयिष्यत्यचिरात् तवार्थम् ॥ ३५६ ॥
इति प्रियोक्तं प्रतिपद्य सद्यः श्रीवत्सराजः प्रययौ स तत्र ।
पप्रच्छ तस्मा अमरी यथोक्ता सा स्वागतं दर्शनमात्रतोऽपि ॥ ३५७ ॥
किमागतोऽसीत्यनुयुक्त एष क्ष्मापालकार्यं तदुवाच सत्यम् ? ।
कृताभ्यनुज्ञस्तयका च कर्णे धृत्वा स तां राजसदः समागात् ॥ ३५८॥
यथेच्छमस्या निजदृक्समक्षमादीयतां दुग्धमिति ब्रुवाणम् ।
इमामरण्ये लघु मुञ्च मुञ्च व्यावृत्य चेत्याह धराधवस्तम् ॥ ३५९ ॥
प्रशस्यमानः सुभटैः स नीत्वा व्याघ्रीं सुरीं सद्मनि दारयुक्तः ।
कृतोपचारस्त्वकृतापराधं स्वस्थानगत्यै व्यसृजद् विशङ्कः ॥ ३६० ॥
दिनेषु केष्वेव गतेषु भूयः सस्मार ताः स स्मरविह्वलाङ्गः ।
नुनोद तल्लाभकृते तथैव सर्वानमात्यांश्च नृपोऽविनोदः ॥ ३६१ ॥
प्रतिक्षणं सङ्गमशैलयुग्ममध्याऽन्धुजं तोयमवार्यवीर्यः ।
अयं समानाय्यत इत्यमात्यैर्विज्ञप्त एषोऽपि तमादिदेश ॥ ३६२ ॥
ममाङ्गनैरुज्यकृते कुमार ! युग्माद्रिकूपाम्बु समानयेति ।

[1] गच्छ ।

स्ववाचया भूमिभुजा नियुक्तस्तन्मानयामास स मानधुर्यः ॥ ३६३ ॥
तदस्ति कुत्रेत्यमुना नियुक्तास्ते मन्त्रिणो वाचमिमामवोचन् ।
महीधरौ तुङ्गतमौ च मध्येविन्ध्याटवि द्वौ प्रथिताविह स्तः॥ ३६४ ॥
क्षणेन चैतौ मिलतः स्वतोऽपि स्निग्धौ वयस्याविव सानुरागौ ।
मिथो विरक्तौ पिशुनाविवैतौ विश्लिष्यतस्तौ कठिनौ क्षणेन ॥३६५॥
तदन्तरेऽन्धुर्वसुधातलस्य वक्त्रानुकारी रससंभृतोऽस्ति ।
जलैस्तदीयैर्भिषजोपदिष्टैर्भावी रुजायाः क्षय एव नूनम् ॥ ३६६ ॥
यदा वियुक्तौ स्त इमौ महीध्रौ कूपादुपादेयमरं तदाऽम्भः ।
इतीरितं तन्मुखतोऽधिगम्य स्थानं प्रियाऽलङ्कृतमासदत् सः ३६७॥
पुरैव विज्ञातमहीड्निदेशे भार्ये तमित्यूचतुरार्यपुत्र ! ।
विभूष्य वाहं व्रज तत्र देवी मातुः सखी नौ शिखरिद्वयेऽस्ति ॥३६८॥
निरन्तरं सा शकुनिस्वरूपसंस्थानभाक् स्थानमधिश्रयन्ती ।
विधास्यते तेऽपि समीहितं तत् संप्रत्यभिज्ञाय तुरङ्गमेतम् ॥ ३६९ ॥
तुरङ्गमारुह्य स वत्सराजः शैलद्वये तत्र ययौ जवेन ।
जलं क्षणेनैव समानिनाय देव्या तयैवाऽर्पितमात्मनैव ॥ ३७० ॥
यथापरीक्षं सचिवाधमैस्तद् पानीयमादायि विशेषदक्षैः ।
विरञ्चिना स्पृष्टमभङ्गुरश्रि भाग्यं तदस्येति विवर्णयद्भिः ॥ ३७१ ॥
ततः प्रणुन्नाः पुनरेव राज्ञा सन्ताप्यमानेन मनोभवेन ।
उदीरयामासुरिमेऽप्यमात्या मन्त्रोऽपि नः स्फूर्तिमियर्ति नाऽत्र ॥३७२॥
बिभर्ति सर्वोत्तमपौरुषं यत् वाचस्पतिं न्यत्कुरुते धिया च ।
न शक्यते वञ्चयितुं तदेष वज्रेण वज्रं न हि विध्यते वा ॥ ३७३ ॥
तथाऽप्युपायः खलु कार्यसिद्धेरालोच्यतां कश्चन मन्त्रिवर्याः ! ।
इति क्षितीशस्य निदेशमाप्य तैर्मन्त्र्यते स्मेति विचार्य मन्त्रः ॥३७४॥
विवाहसामग्र्यविधापनेन श्रीसुन्दरीनामकुमारिकायाः ।
विधीयतां भूमिपते ! नृपाणां दूतैः समाह्वानकमञ्जसाऽपि ॥ ३७५ ॥
विधाप्यतां द्राग् दिशि दक्षिणस्यां श्रीदक्षिणाशाऽधिपतेर्निशान्तम् ।
प्रहीयतां तस्य निमन्त्रणाय श्रीवत्सराजोऽयमुदग्रबाहुः ॥ ३७६ ॥
प्रशंसता साध्विति चातिवेलं मन्त्रं तदीयं वसुधाधवेन ।
विवाहसामग्र्यपि तत्प्रयुक्ता निर्देशमात्रेण विधापिता सा ॥ ३७७ ॥

यदन्धकूपप्रतिरूपमारात् खात्वाऽभितः खातिकमिन्धनौघैः ।
भृतं तिलाद्यैश्च समिद्धवह्नि याम्यां यमागारमकारि तच्च ॥ ३७८ ॥
महीभुजाऽऽदिष्टतमः कुमारोऽप्यालोचयामास समं प्रियाभ्याम् ।
उपायमाधाय कमद्य कान्ते ! रक्षाम्यहं जीवितमस्वतन्त्रः ? ॥३७९॥
उदीरितं कान्तमभीति ताभ्यां युष्मत्प्रतिच्छन्दममन्दबुद्धिः ।
विधाय यास्यत्ययमेव यक्षस्त्वं गुप्त एधि प्रिय ! मन्दिरान्तः ॥३८०॥
तदुक्तमङ्गीकुरुते स्म सोऽपि को वा हितं नाऽऽद्रियतां विदग्धः ? ।
व्यजिज्ञपद् भूपमुपेत्य यक्षस्तद्रूपतां प्राप्त इवाऽवतारात् ॥ ३८१ ॥
कृतान्तसद्माधिगतेन देव ! व्यावर्तनीयं दिवसैः कियद्भिः ? ।
मयेति तेनाभिहिते नरेन्द्रस्तं प्रत्यवादीद् वदतां पुरोगः ॥ ३८२ ॥
त्वया निवास्यं ननु मासमात्रमित्युक्त एषोऽवनिवासवेन ।
समेषु लोकेषु विलोकयत्सु कीनाशवेश्म त्वरितं विवेश ॥ ३८३ ॥
तदाऽऽप पद्माकरवत् स पद्मैर्हर्षं नृपस्तैः सचिवैः सहैव ।
कलानिधौ तत्र तिरोहितेऽपि लोकः पुनः कैरववद् मिमील ॥ ३८४ ॥
अदःप्रिया आनयताऽधुनैवेत्याज्ञापयद् मन्त्रिवरान् नरेशः ।
तमीदृशं व्यज्ञपयंस्ततस्ते पुष्पेषुमोहेन गलद्विवेकम् ॥ ३८५ ॥
समाहरिष्याम इमाः सलीलं लीलावतीः किन्तु समुत्सुकत्वम् ।
जहीहि, यन्नाथ ! जनापवादः स्फूर्जन् समस्त्यत्र सुदुर्निवारः ॥३८६॥
पृथुः स भावी भुवनान्तरालेऽकार्यं विधातुं त्वयि धावतीश ! ।
ततोऽवनीवासव ! मासमात्रं तद्दत्तमेवाऽऽगमयस्व कीर्त्यै ॥ ३८७ ॥
यशांसि येषां विमलानि नाथः कुर्वन्ति पीयूषमयूखबिम्बम् ।
बलेन तेषां किमनेन किं वा बुद्ध्याऽनया किं बत जीवितेन ? ॥३८७॥
समासहस्रेण समं स मासं भूपः स्मरार्तो गमयाम्बभूव ।
पुनः समानेतुमयं न्यदिक्षत् तद्वल्लभा मन्त्रिचतुष्टयं तत् ॥ ३८९ ॥
इतश्च तास्तं स्नपितं विलिप्तं कृत्वा कुमारं प्रविभूषितं च ।
समाननं व्यन्तरनायकं स्म यक्षेण दक्षेण समानयन्ति ॥ ३९० ॥
निवेद्य वृत्तान्तममुं यथार्थं स प्रार्थितः स्वाङ्गविभूषणानि ।
विभासमानानि महाद्भुतानि विश्राणयामास कुमारकाय ॥ ३९१ ॥
कुमारमारोप्य च यक्षतार्क्ष्ये हस्ताम्बुजस्थापितनालदण्डः।

स्वयं प्रतीहारवदग्रयायी स प्रास्थित व्यन्तरनिर्जरेशः ॥ ३९३ ॥
यदेष कीनाशगृहं गतोऽपि भूयः समागादसमानमानः ।
तदत्र नूनं प्रवितर्कयामः प्रोज्जागरं नागरभाग्यमेव ॥ ३९४ ॥
इति प्रमाणीकृतनागराणां शृण्वन् कथाः श्रोत्रसुखाः कुमारः ।
तुरङ्गसिंहादवतीर्य सिंहद्वारं प्रतीहारगिरा विवेश ॥ ३९५ ॥
प्रणम्य तस्मिन् पुरतो निषण्णे भूपस्य नानारससङ्करोऽभूत् ।
विलोकयत्स्वेव ममार योऽस्मासूज्जीवयामास कथं स्वमेषः ? ॥३९५॥
गतः कथं वाऽयमुपागतोऽत्राऽस्तीत्यद्भुतं नाम रसं दधानः ?।
प्रियास्मृतेस्तस्य च विप्रलम्भं प्राप्तेरभावाच्च पुनर्विषादम् ॥ ३९६ ॥
विलोकनात्तस्य च वीरभावं दम्भप्रकर्षात् करुणं स्पृशंश्च ।
मनोभवाग्नेरपि रुद्रचर्या बीभत्सतां तद्व्यथयोपतप्तः ॥ ३९७ ॥
भयानकत्वं भिषजां कुलानां प्रोक्तोपचारव्यभिचारतोऽपि ।
समाश्रयन्नैकरसावकीर्णः स व्याजहाराऽवहितः कुमारम् ॥ ३९८ ॥
समस्ति मित्रं मम वत्सराज ! श्रीधर्मराजः स शिवेन कच्चित् ।
न वर्तते देवलिपिर्भुवीति प्रीतः स किं किं मम संदिदेश ? ॥ ३९९ ॥
स वत्सराजोऽपि जगौ जगत्त्र ! राजन् ! प्रतीहारनिवेदितं माम् ।
अनामयं ते परिपृच्छय पूर्वं नम्रं सखा पर्यनुयुक्त चैवम् ॥ ४०० ॥
स्मृता वयं तेन सुहृत्तमेन बंहीयसो नेह स एव भव्यम् ।
अजर्यमस्माकमुपार्जितं यत् स्वर्णं सुमेरोरिव जीर्यते न ॥ ४०१ ॥
अकारि भूमीश्वर ! सान्वयत्वं सख्या स्वनाम्नः समवर्तिना ते ।
प्रदाय दिव्याभरणं विचित्रं भृत्योऽपि यत्ते त्वमिवार्चितोऽस्मि॥४०२॥
स्वकीयदौवारिक एष देव ! प्रत्यायनाय प्रहितोऽस्ति तेन ।
विलोकयामास ततश्च साङ्गोपाङ्गं नराधीश इमं निविष्टम् ॥ ४०३ ॥
व्यचिन्तयच्च स्पृशतः क्रमौ न क्ष्मां लोचने यन्न निमीलतोऽस्य ।
यदस्य न म्लायति पुष्पमाला तद् द्वाःस्थतामञ्चति तस्य सोऽयम्॥४०४
स दम्भदौवारिक आललाप मत्स्वामिसंदेशमिमं शृणुष्व ।
अनाप्तनिर्देशतया मघोनस्त्वत्सन्निधौ नैव समागतोऽस्मि ॥ ४०५ ॥
निजप्रधाना भवता सदाऽत्र तत् प्रेषणीयाः प्रवराः पुमांसः ।

१ ज्यांश् वयोहानौ, हीयत इत्यर्थः ।

सखे ! त्वदृष्ट्यापि कदापि चाहं संभावनीयस्त्वयका विशिष्य ॥४०६॥
यमावलोकोत्सुकतां दधानं व्यालोक्य तं मध्यमलोकपालम् ।
उवाच मायाप्रतिहार एष स्वामिन् ! यियासोपयमेऽस्ति ते किम् ?॥४०७॥
मनो दिदृक्षाप्रवणं ममाऽस्तीत्युक्ते नृपं सोऽपि पुनर्बभाण ।
ममानु यानं कुरु देव ! तर्हि तद्दर्शये वर्त्म यथा यथास्थम् ॥ ४०८ ॥
स वेत्रभृद् भूमिभुजाऽनुयातः प्रासादमासाद्य परेतभर्तुः ।
अदत्त झम्पामपि पावकान्तस्तत्पृष्ठतस्ते ददुरप्यमात्याः ॥ ४०९ ॥
तदैव चत्वार इमेऽपि भूतास्ते भस्मसात् तेन धनञ्जयेन ।
प्रवर्तका दुष्कृतसंचयस्य यथा प्ररूढास्तपसा कषायाः ॥ ४१० ॥
अमूननु क्ष्मापतिरेव झम्पासंपातमाधातुमधीतयत्नः ।
बभूव यावत् सहसा स तावद् धृत्वा करे व्यज्ञपि वत्सकेन ॥ ४११ ॥
विशन् कथं जीवति देव ! कोऽपि जाज्वल्यमानज्वलनान्तराले ? ।
मम द्विषोऽमी सचिवाः समस्ताः क्षिप्ता मया तेन च विप्रतार्य ॥४१२॥
व्यधायि युष्माकमपीदमेवं यद्विप्रलम्भत्वमहो ! मयाऽपि ।
मम स्वपत्तेरपि सह्यतां तत् सर्वसहा यत् प्रभवो भवन्ति ॥ ४१३ ॥
नृपस्ततोऽचिन्तयदस्य नूनं विश्वत्रयीसारमुदग्रभाग्यम् ।
प्रयुज्यमाना प्रतिकूलताऽपि सर्वानुकूलत्वमियाय येन ॥ ४१४ ॥
अतः स्फुरत्पुण्यसमृद्धयेऽस्मै श्रीसुन्दरीनामसुतां सुरूपाम् ।
समर्प्य नार्पत्यमिदं[1] च हृद्यं सद्यस्तपस्यामि समाधिनिष्ठः ॥ ४१५ ॥
परप्रियासङ्गमकामतया यत् पापभागी विहितो निजात्मा ।
इतीद्धवैराग्यपरप्रकर्षाद् ध्यायन्नयं सद्म समाससाद ॥ ४१६ ॥
व्यवाहयत् तेन नृपः स्वपुत्रीं जीवौषधीकान्तबले विलग्ने ।
महोत्सवे स्फूर्जति यौतकेऽदाद् राज्यं गजेन्द्रादिसमन्वितं च ॥४१७॥
वने तपस्यां स्वयमादिताऽथ द्वेधा नरेन्द्रो जितशत्रुरेषः ।
नयप्रकर्षेण विराजमानः श्रीवत्सराजस्तु शशास राज्यम् ॥ ४१८ ॥
क्षितिप्रतिष्ठाख्यपुरात् परेद्युः प्रस्थापितो नागरमन्त्रिमुख्यैः ।
समर्पयामास नृपाय लेखं मर्त्यप्रधानः समुपेत्य कोऽपि ॥ ४१९ ॥
नृपः परिज्ञाय तदिङ्गितैः स्वव्यापारिणः पूरुषतोऽतिगुप्तम् ।

१ नृपतेः कर्म राज्यमित्यर्थः ।

अवाचयद् वर्णकभङ्गिचित्रं चित्रं विना लेख्यमिवागतं तम् ॥ ४२० ॥
तथाहि सस्वस्ति पुरीपराद्ध्र्याऽवन्त्याख्यपुर्यां समराजराजम् ।
समाश्रितश्रीपदवत्सराजं प्रौढप्रतापक्षतशत्रुजातम् ॥ ४२१ ॥
क्षितिप्रतिष्ठाख्यपुरादमात्याः पौरैर्युता योजितपाणिपद्माः ।
वसुन्धरापृष्ठमिलल्ललाटा नत्वा स्वयं विज्ञपयन्ति चैतन् ॥ ४२२ ॥
यथा महाराज ! नरोत्तमेन श्रीदेवराजेन विबाधिताः स्मः ।
न देवराजेन सुरोत्तमेन स्वामिंस्तथा न्यायपराङ्मुखेन ॥ ४२३ ॥
प्रजा परिम्लानमुखी समस्ता चन्द्रोदये चक्रवधूरिवैषा ।
वियोगविध्वस्तमनोविलासा सूरस्य ते दर्शनमिच्छतीह ॥ ४२४ ॥
तदीशपादा विहितप्रसादाः सद्यः समागत्य तथा विधद्ध्वम् ।
इमे जना नैव यथा स्मरन्ति श्रीवीरसेनस्य रसेश्वरस्य ॥ ४२५ ॥
तदेवमाकर्ण्य नरेश्वरः स्वतातस्य लोकानतिदुःखितांस्तान् ।
स्वराज्यसन्तोषितमानसोऽपि भम्भां तदा वादयति स्म धीरः ॥४२६॥
चरैर्विदित्वा सबलं समेतं कल्लोलजालैरिव सिन्धुराजम् ।
विरोधितां पौरजनस्य चाऽपि गत्वा वने तापसतां ललौ सः ॥४२७॥
विवर्णभावं सहसा प्रपन्ने दोषाकरे तत्र कलङ्कराजे ।
अनन्तलीलाः कलयन् प्रविश्य प्रद्योतयामास पुरं स भास्वान् ॥४२८॥
प्रभाकरस्याऽभ्युदयेऽपि तस्य सच्चक्रचित्तानि दधुः प्रमोदम् ।
निलिल्यिरे क्वापि चकोरचौरा व्याधूततृष्णाः करतापभीताः ॥४२९॥
संसेवितांह्रेः सुगुरोः कदाचित् सम्यक्त्वमूलं गृहिधर्ममाप्य ।
जिनालयैः पौषधमन्दिरैश्च भूमीपतिर्भूषयति स्म भूमिम् ॥ ४३० ॥

काले व्यतीयुषि कियत्यपि सद्गुरुः स
भूयः समागमदिदं नगरं गरीयान् ।
श्रुत्वाऽऽगतं तमवनीदयितोऽवनीशाद्
गत्वा विनम्य विनिशम्य शुभान्यपृच्छत् ॥ ४३१ ॥

ईदृशोऽस्मि शुभकर्मणा प्रभो ! केन जात इति कथ्यतां मम ? ।
संशयं नरपतेरपासितुं व्याजहार गुरुरेष तत्त्ववित् ॥ ४३२ ॥

जम्बूद्वीपगमुख्यवर्षतिलकश्रीमद्वसन्ते पुरे
राजा सूर इति श्रुतः समजनि प्रत्यर्थिशैलाशनिः ।

दाने यद्व्यसनं स्वभावजनितं तस्योदगात् तत् पुनः
सत्पात्रेषु महादरं विरचयद् भोग्यं फलं प्रापयत् ॥४३२॥
विद्याधरान्वयभवाऽजनि सूरवेगा
तस्य प्रिया नरपते रतिरूपरूपा ।
भोगांस्तया सह यथारुचि भुञ्जतोऽस्य
कोऽप्यानयत् किल कनीं रतिचूलिकाख्याम् ॥ ४३४ ॥
तां क्ष्मापतिः स परिणीय तथाऽनुरक्तः
स्वान्तःपुरं परिजहार परं प्रसक्तः ।
तद्देव्यभूद् विहितबालतपा विरक्ता
सा व्यन्तरी स्वचरितं गदितं यया ते ॥ ४३५ ॥
शूरः सूरनृपो विपद्य समभूद् दानप्रभावाद् भवान्
व्यापत्तावपि सम्पदां पदमलं भूमीपतिर्भाग्यभूः ।
स्मृत्वा प्राग्भवमात्मनः स विरतः श्रीशेखरं नन्दनं
राज्ये न्यस्य निजं गुरोर्मुनिपतेर्जग्राह दीक्षां ततः॥४३६॥
तत्पत्न्यो व्रतमाप्य तद्व्रतिपतेस्तिस्रोऽपि तप्त्वा चिरं
षष्ठादीनि तपांसि नाकमगमन् सर्वे क्रमात् सत्क्रमम् ।
इत्थं मेघमहीमहेन्द्र ! भवतः श्रोत्रातिथेयीकृतं
श्रीसूरस्य कथानकं वरमिदं धर्मप्रभावप्रथम् ॥ ४३७ ॥
एतां वाचं त्रिभुवनगुरोः पेयपीयूषदेश्यां
श्रुत्वा मेघक्षितिपरिवृढः प्राञ्जलिः प्रोच्चचार ।
साम्राज्याय स्पृहयति न मे मानसं पापभीरु
त्वद्दत्तायाऽप्रतिकृतिसुखे किन्तु नाथ ! व्रताय ॥ ४३८ ॥
राज्यं पुत्राय दत्त्वोपसचिवमधुनैवाऽऽगतोऽस्मि प्रभोऽहं
राजन् ! मा गाः प्रमादं सदनमुपगतस्त्वं जिनेनेति चोक्तः ।
आयातोऽसौ स्वसौधं दृढरथकमुपस्वं समाहूय भूपः
प्रोवाचैवं कुमार ! श्रय धरणिधुरां येन गृह्णामि दीक्षाम्॥४३९॥
आकर्ण्यैवं स तु तदनुजो यौवराज्यं प्रशासद्
हृष्टः प्रोचे विनयविनतस्त्वादृशां युक्तमेतत् ।
मुञ्चस्यस्मिन् किमिति मतिमन् ! मां तु मेऽपकारे

पृथ्वीचिन्तापरिचयमहाशृङ्खलाभिर्निबन्ध्य ? ॥ ४४० ॥

लक्ष्मीः पण्यवधूरिव प्रकुरुते प्रीतिं न कुत्राऽप्यसौ
देहोऽयं मधुरै रसैरपि भृशं नाऽम्भोधिवत् तृप्यति ।
ओजोयौवनबन्धुमुख्यनिचयः सर्वोऽपि सिन्धूर्मिव-
च्चाञ्चल्यं वितनोति तन्मतिमतां क्लेशस्तदर्थं हि कः ? ॥४४१॥

सौहित्यं न हि विन्दते विषयजैर्जन्तुः कदाचित् सुखै-
र्नित्यं दानववैरिमानवभवेष्वेतैर्भृशं सेवितैः ।
तन्मन्ये परमाणुभिः स घटितः संतोषभागं विना
कार्यं कारणरूपमेव नियतं जल्पन्ति यत् तार्किकाः ॥४४२॥

स्वामित्वाद् मदमादधाति सुतमां तेनैव हिंसां जनः
प्रस्तौति प्रतिपादयत्यपि मृषाऽऽदत्तेऽप्यदत्तं खलु ।
अब्रह्माऽपि परिग्रहं च रचयत्युन्मत्तवत् कस्यचित्
वाक्यं नैव करोति तेन कलुषं कुर्वन् गमी दुर्गतिम् ॥४४३॥

विज्ञायेदृक् परिणतधिया क्षुद्रसंसारवृत्तं
स्वामिन् ! पादावहमपि तवाऽनु व्रजिष्यामि नूनम् ।
स्वामी सेव्यस्त्वमसि मम ते सेवकश्चाहमस्मि
व्यापार्यस्तत् सुकृतकरणे सर्वदा सर्वदातः ! ॥४४४॥

श्रुत्वा श्रीमद्दृढरथवचस्तादृशं मेघराजः
पुत्रं राज्ये न्यधित निजकं मेघसेनं रसेनम् ।
साराधारं दृढरथसुतं यौवराज्ये च सेनं
प्रद्युम्नाभं रथपदयुजं मन्त्रिपौरेषु सत्सु ॥ ४४५ ॥

स मेघरथभूपतिस्तनुजमेघसेनावनी-
भुजा विहितनिष्क्रमोत्सवभरोऽनुजेनाऽन्वितः ।
शतैश्च सह सप्तभिस्तनुभुवां सहस्रैश्चतु-
र्मितैः क्षितिभुजां व्रतं घनरथप्रभोरादित ॥ ४४६ ॥

अभ्यस्य द्विविधामिमौ गणधरोपान्ते च शिक्षां मुनी
नानाभिग्रहसंग्रहौ शमपरौ गुप्तौ च गुप्तेन्द्रियौ ।
ब्रह्माम्भोधिविगाहनैककरिणावेकादशाङ्गोज्ज्वला-
वक्षोभ्यावुपसर्गकैरपि घनैः पृथ्वीं व्यहार्ष्टां चिरम् ॥४४७॥

अर्हत्सेवाप्रभृतिभिरथो स्थानकैर्मेघसाधु-
विंशत्या स्माऽर्जयति यतिराट् तीर्थकृन्नामकर्म ।
कुर्वाणो ज्ञः स्वयमपि तपः सिंहविक्रीडिताद्यं
सोऽतीचारैर्विकलमसृजत् संयमं पूर्वलक्षम् ॥ ४४८ ॥
अध्यारुह्याऽम्बरतिलककाभिख्यशैलं मुनीन्द्रौ
चक्राते तावनशनमतिक्षामकायौ तपोभिः ।
संपूर्याऽऽयुः समभवतकां तप्तकल्याणकान्ती
देवौ दिव्यासमसुखमयौ तौ च सर्वार्थसिद्धौ ॥ ४४९ ॥
आसीत् श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विज्ञानभाजां गुरुः ।
तच्छिष्येण कृते त्रयोदश इतः श्रीशान्तिवृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽयमीक्ष्यः सताम् ॥४५०॥

## ॥ इति श्रीशान्तिनाथचरित्रे त्रयोदशः सर्गः ॥

अर्हम्

## अथ चतुर्दशः सर्गः ।

यदच्छसंवेदनपुण्डरीकके श्रिता त्रिलोकी भ्रमरीयतेतराम् ।
मनीषितं वः सफलं तनोतु स श्रियां निधिःशान्तिजिनेश्वरः सदा ॥१॥
युगादिनाथस्य तनूभुवां शतं बभूव तन्मध्यग एककः कुरुः ।
पिता यमस्याऽदित देशमंशतः स तस्य नाम्ना कुरुरेव पप्रथे ॥ २ ॥
भवन्ति धान्यान्यपि यत्र सन्ततं स्पृहां प्रकुर्वन्ति सुपर्वणामपि ।
प्रवर्तमानं त्वपरोपवर्तने क्षमाणि दुर्भिक्षमपासितुं परम् ॥ ३ ॥
व्रजेषु गावो विदुषामिवाऽऽसते हिमाद्रिवद् यत्र समुन्नतोज्ज्वलाः ।
विनैव यत्नं परिपोषमाश्रिता महात्मनां पुण्यभरैः कृता इव ॥ ४ ॥
गोष्ठा यत्र विभान्ति गोभिरभितो नीरैस्तडागा इव
ग्रामा गोष्ठकुलैश्च यत्र नितरां नीराणि पद्मैरिव ।
ग्रामैर्यत्र पुराणि निर्भरतरं पद्मानि भृङ्गैरिवा-

१ स्वार्थेऽक् अभवतामित्यर्थः ।

ऽन्योन्यस्पर्धविवृद्धहुंकृतिभरैर्भृङ्गा इव श्रीः पुरैः ॥ ५ ॥

वत्सो वत्सलभावमाश्रयति नो संवर्ण्यमानः सतां
नाऽङ्गः किञ्चन चङ्गिमानमधिकं पुष्णाति तृष्णावहः ।
धत्ते मालवसत्त्वमेव सुतरां नो मालवस्तत्त्वतो
लाटश्चाटवपाटवं न तनुते यस्मिन् समालोकिते ॥ ६ ॥

देशं गूर्जरमेव जर्जरतमं प्राज्ञाः समाचक्षते
कर्णाटं न च कर्णगोचरगतं पीडाकरं कर्णयोः ।
वैयर्थ्यं सुमहापदोपपदयोर्नाम्नोः पुना राष्ट्रयो-
र्हूणं भ्रूणनिविष्टमेव कमलालीलागृहं वीक्ष्य यम् ॥ ७ ॥

( षड्भिः कुलकम् )

तदस्ति तस्मिन्कुरु हस्तिनापुरं पुरं सुराणामिव वासवासितम् ।
कवेर्बुधस्यापि गुरोश्च केवलं विरोधिता यत्र मिथो न दृश्यते ॥ ८ ॥

रसैरनन्तैः परिपूरितान्तरा विकाशिपङ्केरुहदीर्घलोचनाः ।
विभान्ति यस्मिन् द्विजराजराजिता बहिः सरस्यो ललनाश्च मध्यतः॥९॥

न धर्मराजस्य पुरी पराभवं निजश्रिया येन सलीलमापिता ? ।
पुनस्तिरस्कारपदानवाप्तये ध्रुवं न किं संयमिनी बभूव सा ? ॥१०॥

भवन् स यस्याः किल पारदारिकः पतिर्न सौन्दर्यकलामलीलवत् ॥
अनीदृशं रञ्जयता स्वनायकं न येन लङ्का समतामुपैति सा ॥ ११ ॥

भोगावत्यपि भोगिनामपि कुले रत्नांशुभिर्भासुरैः
संरुद्धापि न येन सार्धमधिकं स्पर्धां विधातुं क्षमा ।
सर्वानेव दुरात्मनो द्विरसनान्निर्वास्य लक्ष्मीश्रिता
पातालं विशति स्म तद्द्विरसनाधिष्ठानपापादिव ॥ १२ ॥

प्रायोऽमी अमरावतीं पुरममूं यद् वर्णयन्ते बुधाः
किं तेषां स कदाग्रहो व्यसनिता यद्वाऽविवेकात्मता ।
यस्मिन् सत्यपि धर्मशर्मजनके सत्कर्मनित्योत्सवे
किंचिन्नश्वरमेयसौख्यललितां पुण्यक्रियावर्जिताम् ?॥१३॥

( षड्भिः कुलकम् )

स तत्र भूमीपतितारतारकप्रभासमद्योतनतारकप्रभुः ।

---

१ मा लक्ष्मीस्तस्या लेशः ।

मतिक्रामन्नेकां भैरवीं संचरत्प्रचुरचौरसमाकुलां रौद्रां घोरां भयंकरां मानुषोज्झितां अनेकारण्यजन्तुसहितां शिवाफूत्कारघोरां सिंहव्याघ्रशूकरवानरचित्रकवेतालव्याप्तां गिरिनदीनिर्झरवल्लीवितानवनराजिविराजितां एवंविधां महाटवीं विवेश । ततस्तस्यामटव्यां संचरन् मृगारिरिव पार्थ एकं गिरिरत्नशिखरं धरित्र्याः शिरोरत्नं ददर्श । तं गिरिशिखरं दृष्ट्वा तद्द्रुमकुसुमासवलुब्धः सव्यसाची कुतूहलात्तस्मिन् गिरावारुरोह । तस्य गिरेः शिखर एकं जिनचैत्यमद्राक्षीत् । चैत्यवर्णनम्—चन्द्रकान्तमणिमयं प्रभाजालैर्द्योतितदिग्मुखमिन्द्रनीलाङ्कितद्वारं रक्तसोपानश्रेणिशोभितं स्वर्णस्तम्भकुम्भैरलंकृतम् । भूगतदेवविमानमिवाऽर्जुनो जिनमन्दिरं दृष्ट्वा मुमुदे । सोऽर्जुनस्तदुद्यानदीर्घिकाऽम्भसि स्नात्वा प्रमोदमेदुरो वापीकमलोत्करं समादाय जिनमन्दिरं प्रविवेश । तत्र गत्वा प्रदक्षिणां दत्त्वा श्रीयुगादिजिनेश्वरं नत्वा पूजां विधाय स्तोतुं प्रचक्रमे ।

यथा—

“जय नाभिकुलक्षीरनीराकरनिशाकर !।
जयाऽशेषजगद्दुःखनिदाघजलदागम ! ॥ १ ॥
देव ! संसारकान्तारपर्यन्तपुरपादपाः ।
पादास्तव भवक्लान्तिविच्छेदाय भवन्तु मे ” ॥२॥

इत्यादिस्तुतिं विधाय धनञ्जयो यावता जिनालयमवलोकयन् बहिः संचचार, तावद्गिरिशिखरान्तरे कञ्चित् पुरुषं मरणोद्यमं कुर्वन्तं, तथा हे प्राणेश ! मा म्रियस्वेत्युक्तवतीं भर्तृपादाम्बुजे मौलिं घर्षयन्तीं स्ववदनाम्बुजेऽङ्गुलीं प्रक्षिपन्तीं भर्तुरुत्तरीयप्रान्तं चाकर्षयन्तीं मुहुर्मुहुर्विलापं कुर्वतीं काञ्चिन्नायिकां तं निषेधयन्तीं धनञ्जयो ददर्श। तत्स्वरूपं दृष्ट्वा तत्र शीघ्रं गत्वाऽऽदरात् तमभाषिष्ट—हे महाभाग ! हे गुणज्ञ ! त्वया निर्गुणोचित एष कथमारब्धो मरणोद्यमः ?। यदि गोप्यं न स्यात् तर्हि सर्वं सत्यं

ममाख्याहि, यथा त्वां दुःखस्याऽन्तं नयामि। सोऽपि पाणिसंपुट-माबध्य धनञ्जयं जगाद- हे परोपकारिशिरोमणे! तवाग्रे किं गोप्य-मस्ति?, यदि तवाग्रे गोप्यते तर्हि कस्याग्रे प्रोच्यते। ततश्चार्जुनोऽभ्यधात्-हे पुरुषशिरोमणे! विश्वत्राणैकदीक्षितान् कुरून् परिज्ञाय त्वं मां सर्वं सत्यं समाख्याहि, यथा ते दुःखस्यान्तं करोमि। तच्छ्रुत्वा हर्षितो विद्याधर एवमवोचत्—वैताढ्ये दक्षिणश्रेण्यां रत्नपुरं नाम नगरमस्ति। तत्र चन्द्रावतंसको नाम राजाऽभूत्। तस्य पट्टराज्ञी कनकसुन्दरीनाम्नी, तयोः पुत्रो मणिचूडो नाम सोऽहम्, तयोः पुत्री प्रभावतीनाम्नी मम भगिनी। सोऽहं मणिचूडनामा बाल्ये वयसि केलिलीलाभिरतिक्रान्तशैशवः पितृभ्यां गुरुभ्यः सकलाः कला ग्राहितः। क्रमेण यौवनस्थोऽहं पित्रा चन्द्रापीडराज्ञः सुतां चन्द्राननां परिणायितः। मद्भगिनी प्रभावती हिरण्यपुरनाथाय हेमाङ्गदमहीभुजे दत्ता। तथा कुलक्रमायाता विद्याऽपि तातेन मम दत्ता। यावदहं विद्यां तातार्पितां साधयामि, तावन्मम पिता मृत्वा परलोकं ययौ। अहो! विधिविलसितम्, अहो! सकलभयजित्वरं मरणभयम्, परं केनाऽप्युल्लङ्घयितुं न शक्यते; इति भावयद्भिस्ततः सकलसामन्तमन्त्रिभिरहं राज्ये निवेशितः। कतिपयदिनान्ते मम दायादो विद्युद्वेगनामा विद्याधरः खेचरानीकपरिवृतो युद्धं विधाय मां नगरान्निरवासयत्। दायादहृतसाम्राज्यो दुःखभारभराक्रान्त एकाकी यावदहमत्राऽऽगाम्, तावदेषा मम प्रिया चन्द्राननाऽपि पितृगृहादत्रागता, युक्तमेतत्, कुलस्त्रीणां व्रतं ह्यदः। सोऽहं मणिचूडः, एषा मम प्रिया चन्द्रानना प्रेमपरा राज्यभ्रंशात् प्राणत्यागाय गच्छन्तं मां निवारयति। अथ गाण्डीवो मणिचूडं जगाद—भो मणिचूड! मयि बान्धवे सत्यपि ते कोऽयं मरणनिर्बन्धः?, त्वं चिन्तां मा विधेहि, अहं तवाऽरातिं निहत्य पुनस्तव राज्यश्रियं दास्ये। तद्वचनं श्रुत्वा मणिचूडो बभाषे—हे भ्रातः! अहं जानामि त्वयि सर्वं भवि-

ष्यत्येव, परं ते विद्याधरा विद्यया बलवन्तः परैर्विद्यारहितैः पुरुषैरजेयाः । अतस्त्वमपि मत्कुलक्रमायाता विद्याधरयोग्याः विद्याः साधय । ततस्त्वमपि विद्यावान् परैरजेयो भविष्यसि । धनञ्जयेनोक्तम्—तर्हि मह्यं विद्या देहि । ततो निजवल्लभां चन्द्राननां पितृगृहे प्रेष्य मणिचूडेन विद्या दत्ताः, धनञ्जयस्ताः साधयामास । योगाऽऽसक्तयोगीन्द्रवद् बद्धपद्मासनो नासाऽग्रन्यस्तदृग्द्वन्द्वो मेषोन्मेषरहितः प्रारब्धषाण्मासिकजापसहितो धैर्यान्वितोऽर्जुनो मन्त्रं जजाप । तस्मिन् बद्धपद्मासने ध्यानतत्परे धनञ्जये ऋव्यादादयो देवा धनञ्जयं चालयितुं प्रारेभिरे । यथा—केऽपि कर्त्तिकाभिः शवोदरं दारं दारं मांसखण्डानि कृत्वा चिक्षिपुः, केचिन्नरमुण्डमालाभिर्हारं वितेनिरे, केचिन्मातङ्गरूपधारिणो देवाः कोपान्धचेतसो धनञ्जयं तीक्ष्णैर्दन्तमुशलैस्ताडयामासुः, केचित्सिंहरूपेण भाययामासुः, केचिद्भुजङ्गमदेहभृतः शिरस्यारुह्य वपुषा वपुर्वेष्टयामासुः, केचित्कुन्तीरूपं विकृत्य हे धनञ्जय ! मां रक्ष रक्षेतिवादिनीं दीनाननां दर्शयामासुः, केचित् कृष्णां कृष्णाननां विटपुरुषैः केशे धृत्वाऽऽकृष्यमाणां रुदतीं दर्शयामासुः, तथाप्यर्जुनो मनागपि ध्यानान्न चचाल । एवं षण्मासान् यावद् ध्यानस्थो धनञ्जयो मणिचूडविद्याधरेणोत्तरसाधकेनाऽष्टौ महाविद्याः प्रज्ञप्त्याद्याः साधयामास । ता अष्टौ देव्यो विद्याधिष्ठायिन्यो धनञ्जयं प्रत्यागत्य विज्ञापयामासुः—भो धनञ्जय ! ब्रूहि यत्ते प्रियं तत् कुर्मः । धनञ्जयेनोक्तम्—यूयं स्मृतमात्राः समये समागमिष्यथ । सांप्रतमेष मणिचूडो मम बान्धवो विद्यागुरुश्चाऽनुगृह्यताम् । ता देव्यो विहस्य प्रोचुः-अस्य मणिचूडस्य कार्यं करिष्यते, परमस्माकमयं क्रमः-योऽस्मानाराध्यति कामं वयं तस्यैव तुष्यामः, अपरस्य कदापि न तुष्यामः, परं तवाऽस्मिन्नुपकारतरङ्गितं चेतस्तदाऽस्य सकृदाराधने तोषमेष्यामः । इत्युक्त्वा जयजयारावं कुर्वाणाः स्व-

स्थानं जग्मुः। धनञ्जयोऽपि सिद्धविद्यो बभूव। अथ मणिचूडः पितृदत्तां स्वां विद्यां पार्थानुज्ञया तस्मिन्नुत्तरसाधके स्वल्पैरेव दिनैः साधयामास। उभावपि मणिचूडधनञ्जयौ साधितविद्यौ चन्द्रसूर्याविव गिरेरुपरितनभूम्यामुपविष्टौ यावत् शुशुभाते, तावदाकाशे किङ्किणीक्वाणझणत्कारिदिगन्तरं पताकाशतभूषितं विद्युदुद्द्योतवद् मरीचिकवचमम्बरादवतरद् विमानद्वयमद्राक्षीत्। ततो विमानादवतीर्य पार्थं मणिचूडं च व्योमचारिणो विद्याधराः प्रणेमुः। ततो द्वावपि शुभे स्नानपीठे निधाय स्नानं कारयामासुः। ततस्तयोः कवोष्णैः सुगन्धिवारिभिः स्नानं कारयित्वा गन्धकाषायिकाभिः शाटिकाभिरङ्गं संमार्ज्य ततश्चन्दनानुलिप्तगात्रौ विधाय देवदूष्यवासांसि परिधाप्य भूषणैर्भूषयामासुः। केचिद्विद्याधरास्तयोरुपरि चन्द्रमण्डलसमप्रभं श्वेतातपत्रमधारयन्। तयोर्द्वयोः पार्श्वयोः केचन विद्याधरवराश्चामराण्यवीजयन्। तथा तयोर्द्वयोः पुरः काश्चन विद्याधर्यस्तालवंशवीणाद्यातोद्यबन्धुरं सङ्गीतकमकार्षुः, तयोः पुरः केचनाऽकठोरगिरो मङ्गलपाठकास्तद्यशः पेठुः। एवं प्रवर्त्तमाने महामहे तौ चिन्तयतः–एतत् किं दृश्यते ?। एवं तयोश्चिन्तयतोः सहसाकारेण विमानान्निर्गत्य चन्द्रानना मणिचूडविद्याधरपत्नी पुरो बभूव। तां यथोचितं संभाषयन्तौ तयाऽऽशीर्भिरभिनन्दितौ चन्द्राननासहितौ विमाने आरुह्य भेरीभाङ्कारडम्बरैर्दश दिशो बधिरयन्तौ तावुभौ शीघ्रं विजयाय वैताढ्यगिरिं प्रति प्रतस्थाते। एवं क्रमेण मार्गे संचरन्तौ लघुविमानैः परिवृतौ वैताढ्यगिरिमूर्धनि रत्नपुरनगरद्वारमुपेयतुः। तत्रावस्थितिं विधाय धनञ्जयो विद्युद्वेगाय दूतं प्राहिणोत्। स दूतो विद्युद्वेगमभ्येत्य सोत्साहमेवमभ्यधात्–भो विद्युद्वेग ! महाबाहुर्मध्यमपाण्डवोऽर्जुनो मन्मुखेन त्वामिदमाह–मदीयसुहृदोऽस्य मणिचूडस्य राज्यं त्वया बलाद् गृहीतं प्रत्यर्पय, यदि जीवितेच्छा

भवति तर्हि शीघ्रं राज्यं मुक्त्वा त्वं स्वस्थानं याहि, यदि जीवितव्यादुद्विग्नोऽसि तर्हि संग्रामे सज्जो भव, यथैते मे बाणाः प्रथमं भवदीयं शिरो ग्रहीष्यन्ति, ततः सुहृदः श्रियो ग्रहीष्यन्ति। तद् विद्युद्वेगाय धनञ्जयोक्तं सर्वं श्रावयामास। ततो विद्युद्वेगोऽभ्यधात्--रे दूत! कोऽसौ धनञ्जयो भूमिगोचरकीटो मर्तुकामः?, यो मां सुप्तसिंहं पादघातेन बोधयति। भो दूतपांशन! तव स्वामी धनञ्जयो मम दोर्वीर्यानले प्रथमेन्धनं भविष्यति, ततो मणिचूडं धक्ष्यामि। ततः प्रतिनिवृत्तो दूतोऽर्जुनान्तिके गतो विद्युद्वेगोक्तं सर्वं समाचख्यौ। कुपितोऽर्जुनो मणिचूडसैन्यसमावृतः संग्रामसज्जो बभूव। विद्युद्वेगोऽपि नगरान्निर्गत्य सेनासमन्वितः करधृतकार्मुको विद्याबलगर्वितः संमुखमागात्। ततो द्वावपि परस्परं संग्रामं चक्राते। तस्मिन् महति संग्रामे जायमाने मणिचूडविद्याधरभटैर्विद्युद्वेगभटा वित्रासिता दिशोदिशं पलायिताः। ततश्चार्जुनबाणैर्विद्धो विद्युद्वेगो वीरव्रतविपर्यासात् संप्राप्तलाघवः प्राणत्राणाय पलायामास। ततो विद्युद्वेगचमूचराः संभूय तमर्जुनं प्रणेमुः। स च तान् बहु मेने। पश्चाद् धनञ्जयो विमानारूढो मणिचूडं पुरस्कृत्य विजयसंयुक्तो रत्नपुरं नगरं विवेश। महामहेन नगरं प्रविष्टो धनञ्जयः सकलनागरिकैरभिनन्दितो मणिचूडविद्याधरं पैतृके पदेऽभ्यषिञ्चत्। ततो मणिचूडोऽपि पैतृकं राज्यमपालयत्। धनञ्जयस्तत्र स्थितः कतिपयदिनान्यत्यवाहयत्। पुनरपि कतिपयदिनान्ते तीर्थदिदृक्षया मणिचूडमपृच्छत्। ततो मणिचूडेनाऽनुज्ञातः सव्यसाची विमानमारुह्याऽष्टापदं गिरिं ययौ। तत्र गत्वा सपरिवारो धनञ्जयो वाप्यम्भसि स्नानमाततान। कृतस्नानो विद्याधरपरिवृतो धनञ्जयो जिनमन्दिरं विवेश। स च तत्र प्रथमं प्रदक्षिणां दत्त्वा ततः पूजोपस्करं पुरो मुक्त्वा कृताष्टपुटमुखकोशोऽष्टप्रकारेण जिनं पूजयामास।

यतः-

"[1]वरपुप्फगन्धअक्खयपईवफलधूवनीरपत्तेहिं ।
नेवज्जविहाणेण य जिणपूआ अट्ठहा भणिआ ॥ १ ॥
[2]जो पूएइ तिसंझं जिणंदरायं तहा विगयदोसं ।
सो तइयभवे सिज्झइ अहवा सत्तट्ठमे जम्मे ॥ २ ॥
फलं पूजाविधातुः स्यात् सौभाग्यं जनमान्यता ।
ऐश्वर्यं रूपमारोग्यं स्वर्गमोक्षसुखान्यपि" ॥ ३ ॥

एवंविधां मोक्षसुखदायिनीं पूजां विधाय नभश्चराः स्वच्छन्दमातोद्यानि वादयामासुः । अथाऽर्जुनश्चतुर्विंशतिजिनानां मध्ये प्रथमं प्रथमजिनस्य स्तुतिं चक्रे-जय त्रिभुवनैकनाथ ! कृतसनाथजगत्त्रय ! जय कामितकल्पवृक्ष ! जय जगदाधार ! जय जगत्त्रयस्थितिकर्तः ! जय अनाथनाथ ! जय युगादिनाथ ! । एवंविधां स्तुतिं कृत्वा त्रयोविंशतिजिनान् स्वस्वसंस्थानमानवर्णसहितान्नमश्चक्रे । ततः प्रासादान्निर्गत्य चतुर्दिक्षु प्रासादकमनीयतामवलोकयन् भरतयशोराशिमिव प्रासादं प्रशंसन् यावत्तस्थौ, तावत्तत्रैकं चारणश्रमणं ददर्श । तद्दर्शनात् संजातरोमाञ्चो मूर्त्तिमन्तं धर्ममिव दृष्ट्वा तमानम्य तदन्तिके उपविश्य भवाम्भोधितरीकल्पां तन्मुखाद्धर्मदेशनामश्रौषीत् ।

यथा-

"अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
सदा सन्निहितो मृत्युः कर्त्तव्यो धर्मसंग्रहः ॥ १ ॥
याति कालो गलत्यायुः क्षीयन्ते च मनोरथाः ।

---

१ वरपुष्पगन्धाक्षतप्रदीपफलधूपनीरपात्रैः ।
नैवेद्यविधानेन च जिनपूजा अष्टधा भणिता ॥ १ ॥

२ यः पूजयति त्रिसन्ध्यं जिनेन्द्रराजं तथा विगतदोषम् ।
स तृतीयभवे सिद्ध्यति अथवा सप्तमाष्टमे जन्मनि ॥ २ ॥

सुकृतं न कृतं किञ्चित् सतां संस्मरणोचितम् ॥ २ ॥
धर्मो जगतः सारः सर्वसुखानां प्रधानहेतुत्वात् ।
तस्योत्पत्तिर्मनुजात् सारं तेनैव मानुष्यम्" ॥ ३ ॥

भो भविकाः! एवंविधं मानुष्यभवं दुष्प्रापमवाप्य धर्मे यत्नो विधेयः। इत्यादिकर्णपीयूषवर्षिणीं मुनिदेशनां श्रुत्वाऽऽनन्दाम्भोधिनिमग्नो धनञ्जयस्तं मुनिमानम्य विमानारूढो गगनमार्गेण संमेतशत्रुञ्जयादितीर्थेषु देवान् नत्वा स्तुत्वा पूजयित्वा तीर्थसेवां कृत्वा द्वादशवत्सरीमतिक्रम्य स्वजनाय मिलनोत्सुको यावत् हस्तिनापुरं प्रत्यचालीत्, तावद् मार्गे शोकार्त्तलोकसंकुलमेकं वनमद्राक्षीत् । तत्स्वरूपावलोकनाय केसरं नाम खेचरं प्राहिणोत् । स तत्र गत्वा तत्स्वरूपं विज्ञाय धनञ्जयं प्रत्युवाच। श्रूयतां राजन्! हिरण्यपुरं नाम नगरमस्ति। तस्मिन्नगरे इन्द्रोपमो हेमाङ्गदो नाम राजाऽस्ति । तस्य राज्ञः प्रभावती नाम पट्टराज्ञ्यस्ति। तामद्य यामिनीशेषे चन्द्रशालाऽधिशायिनीं कोऽप्यकस्मात् सुखसुप्तामपाहरत्, श्येनश्चटिकामिव। साऽपह्रियमाणा रक्ष रक्षेतिवादिनी राजानमजागरयत्। जागरितो राजा भ्रकुटीभीषणः कृपाणमाकृष्य रे चौर! तिष्ठ तिष्ठेति ब्रुवन् दधावे। कियतीं भुवं गत्वा तां वल्लभामलब्ध्वा फालच्युतद्वीपीव प्रत्यावृत्तः। ततः शत्रुमपाकर्तुं वल्लभां च निवर्त्तयितुं सैन्यं संवर्मयांचक्रे। तस्या धम्मिल्लमाल्यश्रेणीं भूमिपतितां पदपङ्क्तिमिवालोक्य तया कुसुमलेखया दर्शितमार्गो हेमाङ्गदो राजा इयतीं भुवमायातः। तां पतितकुसुमश्रेणीमनालोक्य ससैन्यो राजा इतस्ततो भ्राम्यति। इति केसरविद्याधरस्य वाचं सुदुःश्रवां श्रुत्वा धनञ्जय इदमब्रवीत्– हे केसर! एषा हेमाङ्गदपत्नी प्रभावती, तर्हि एषा मणिचूडभगिनी, ममाऽप्येषा भगिन्येव, तर्हि एनां मोचयामीत्युक्त्वा केसरो राजानं प्रति प्रेषितः। तत्र गत्वा हेमाङ्गदं राजानं प्रत्याह- भो हेमाङ्गद! धनञ्जयो मध्यमपाण्डवो मन्मुखेनेदमाह--भो

हेमाङ्गद ! त्वं स्वस्थचित्तो भव, अहं तव प्रियां प्रभावतीमखण्डितशीलां समानेष्यामि। ततः स केसरी हेमाङ्गदाय इत्यर्जुनवाचिकमुक्त्वा प्रत्यागतः। ततश्चार्जुनोऽवलोकिन्या विद्यया प्रभावतीतस्करं विज्ञाय क्रोधारुणलोचनः कपिध्वजो व्योमाध्वना दधावे। राजाऽपि इतस्ततो भ्राम्यन् यावत्तिष्ठति, तावत् केनाप्यागत्य हेमाङ्गदो वर्धितः। हे देव ! वर्द्धाप्यसे, प्रभावती देवी कुसुमोच्चयं कुर्वाणा वर्त्तते। तच्छ्रुत्वा धावितो राजा प्रभावतीसमीपमागत्य यावदानन्दरसनिमग्नोऽभूत्, तावत् प्रभावती अकस्माद् दन्दशूकेन दष्टा पूत्कुर्वती मूर्च्छिता भूमौ पपात। तद् दृष्ट्वा राज्ञः शोकः शतगुणोऽभवत्। यतः 'कृतनिर्वातदीपस्य तमो हि बहुलायते', तथैवास्य राज्ञः सा प्रभावती प्राणप्रिया लब्धाऽपि नष्टा दुःखायाऽभवत्।

यथा-

"ततो विस्रस्तधम्मिल्लः क्षिप्तक्षौमो लुलद्भुजः।
निमीलिताक्षो मूर्छालः क्ष्मापालः क्ष्मातलेऽपतत्"॥ १॥

तथाविधं क्ष्मापालं विरहविधुरं भूमौ लुठन्तं समालोक्य लोकानामाक्रन्दध्वनय उच्चस्थुः। तदा कदलीदलवातैर्वीजितः तथा चन्दनादिभिः शीतलोपचारैरुपचरितो राजा सावधानो बभूव। ततः सावधानो राजा हेमाङ्गदः प्रियां प्रभावतीमुत्सङ्गशायिनीं कृत्वाऽटवीसत्त्वानपि रोदयन् एवं विललाप--हे विधे! त्वं हेमाङ्गदे यदि कुपितोऽसि, तर्हि प्रथमं हेमाङ्गदप्राणान् कथं न हरसि ?, मम प्रियायाः प्राणाः कथं हृताः ?। अहो ! त्वया विरूपमाचरितं, यत् स्त्रीपातकं कृतम्। हे देवि ! बुध्यस्व मौनमाधाय सुखसुप्ता इव किं तिष्ठसि ?; त्वं मां विलपन्तं दृष्ट्वा किं न लज्जसे ?; अहं तव विरहे निजप्राणान् तवाऽऽयत्तान् विधास्ये, त्वद्वियोगमलीमसैरमीभिर्मम प्राणैः किम् ?। एवं विलापं कृत्वा यावता मरणायोद्यतो भवति, तावता पौरामात्यादयः पादपीठलुठित-

## कार्तिकिको बाहुलोर्जौ

कार्तिकी पौर्णमास्यस्य कार्त्तिकः ॥ १ ॥ एवं कार्त्तिकिकः ॥ २ ॥ बाहुलः ॥३॥ ऊर्जयन्ति बलिनो भवन्ति प्राणिनोऽत्र ऊर्जः "पुन्नाम्नि घः"॥५।३।१३०।४॥

शेषश्चात्र—कार्त्तिके सैरकौमुदौ ॥

## द्वौ द्वौ मार्गादिकावृतुः ॥ ६९ ॥

मासाविति शेषः । मार्गादिकाविति मार्गपौषौ, माघफाल्गुनौ, चैत्रवैशाखौ, ज्येष्ठाऽऽषाढौ, श्रावणभाद्रपदौ, आश्विनकार्त्तिकाविति । इयर्त्ति ऋतुः पुंसि, यत्कात्यः—"आदाय मार्गशीर्षाच्च द्वौ द्वौ मासावृतुर्मतः" । हेमन्ताद्धि वत्सरस्यारम्भः ॥ १ ॥ ६९ ॥

## हेमन्तः प्रसलो रौद्रः

हन्ति दिनमसौ, हिन्वन्ति वर्द्धन्ते रात्रयोऽत्रेति वा हेमन्तः "सीमन्तहेमन्तभदन्तदुष्वन्तादयः"॥ (उणा–२२२) ॥ इत्यन्तान्तो निपात्यते । हिमोऽन्तोऽस्येति पृषोदरादित्वाद् वा ॥ १ ॥ प्रकर्षेण सलति प्रसलः ॥ २ ॥ रुद्रस्यायं पूजाहेतुत्वाद् रौद्रः ॥ ३ ॥

शेषश्चात्र—हिमागमस्तु हेमन्ते ॥

## अथ शैषाशिशिरौ समौ ।

शेषस्यायं पूजाहेतुत्वात् शैषः ॥ १ ॥ शशति शीघ्रं गच्छति दिनमत्र शिशिरः पुंक्लीबलिङ्गः "शवशशेरिच्चातः" ॥ ( उणा–४१३ ) ॥ इति इरः ॥ २ ॥

## वसन्त इष्यः सुरभिः पुष्पकालो बलाङ्गकः ॥ ७० ॥

वसत्यस्मिन् सुखं, वस्ते भुवं वा वसन्तः पुंक्लीबलिङ्गः "तॄजिभूवदि-" ॥ ( उणा–२२१ ) ॥ इत्यादिना अन्तः ॥ १ ॥ इषस्य तुल्यः समरात्रिन्दिवत्वादिष्यः शाखादित्वाद् यः, एषणमिट् पुष्पादिवाञ्छा तस्यां साधुरिति वा इष्यः पुंक्लीबलिङ्गः, यद्वाचस्पतिः–वसन्ते त्वस्त्रियामिष्यः ॥ २ ॥ सुष्ठु रभते सुरभिः पुंसि "नाम्युपान्त्य-" ॥ ( उणा–६०९ ) ॥ इति बहुवचनात् किदिः ॥ ३ ॥ पुष्पाणां कालः समयः पुष्पकालः ॥ ४ ॥ बलं वीर्यमङ्गेऽस्माद् बलाङ्गकः ॥ ५ ॥

शेषश्चात्र—वसन्ते पिकबान्धवः पुष्पसाधारणश्चापि ॥ ७० ॥

## उष्ण उष्णागमो ग्रीष्मो निदाघस्तप ऊष्मकः ।

ओषति उष्णः "घृवीह्वा-"॥ ( उणा–१८३ ) ॥ इति णः कित् ॥ १ ॥ उष्णस्य घर्मस्यागमोऽत्र उष्णागमः ॥ २ ॥ ग्रसते जलं ग्रीष्मः "रुक्मग्रीष्म" ॥ ( उणा–३४६ ) ॥ इत्यादिना मान्तो निपात्यते ॥ ३ ॥ निदह्यन्तेऽस्मिन् इति

निदाघः व्यञ्जनाद् घञि "न्यङ्कुद्गमेघादयः" ॥४।१।११२॥ इति घत्वम् ॥४॥ तपति तपः अच्, यल्लक्षम्-तपेन वर्षा शरदा हिमागमः ॥ ५ ॥ ऊष्मयतीति ऊष्मः, ऊष्मप्रतिकृतिर्वा ॥ ६ ॥

शेषश्चात्र—ग्रीष्मे तूष्मायणो मतः आखोरपद्मौ ॥

## वर्षास्तपात्ययः प्रावृड् मेघात्कालागमौ क्षरी ॥ ७१ ॥

व्रियते छाद्यते नभोऽत्र मेघैरिति वर्षाः "वृकृतृमीङ्माभ्यः षः" ॥ (उणा-५४० ) ॥ इति षः, वर्षमस्त्यासु, वर्षन्तीति वा; नित्यबहुवचनान्तः स्त्रीलिङ्गश्च । वरिषा इत्यपि ॥ १ ॥ तपस्यात्ययोऽत्र तपात्ययः ॥ २ ॥ प्रवर्षन्त्यस्यां मेघाः प्रावृट् स्त्रीलिङ्गः "गतिकारकस्य-" ॥ ३ । २ । ८५ ॥ इत्यादिना क्विपि दीर्घः ॥ ३ ॥ मेघशब्दात्परः कालः, आगमश्च मेघकालः ॥ ४ ॥ मेघागमः ॥ ५ ॥ क्षरा मेघाः सन्त्यत्र क्षरी ॥ ६ ॥ ७१ ॥

## शरद् घनात्ययः

शीर्यन्तेऽस्यां पाकेनौषधयः शरद् स्त्रीलिङ्गः, "शॄदृभसेरद्" ॥ ( उणा-८९४ ) ॥ इत्यद् ॥ १ ॥ घनस्यात्ययोऽत्र घनात्ययः ॥ २ ॥

## अयनं शिशिराद्यैस्त्रिभिस्त्रिभिः ।

अयतेऽर्कोऽनेनेत्ययनम्, त्रिभिस्त्रिभिरिति शिशिराद्यैर्वर्षाद्यैश्च ॥ १ ॥

## अयने द्वे गतिरुदग् दक्षिणाऽर्कस्य वत्सरः ॥ ७२ ॥

उदगुत्तरा, दक्षिणाऽपाची याऽर्कस्य गतिस्ते द्वे अयने उत्तरायणं दक्षिणायनञ्च, ते मिलिते वत्सरो वर्षं भवति, वसन्ति ऋतवोऽत्र वत्सरः "मॉज्यजि-" ॥ (उणा-४३९ ) ॥ इत्यादिना सरः ॥ २ ॥ ७२ ॥

## स संपर्यनूद्भ्यो वर्षं हायनोऽब्दं समाः शरत् ।

स वत्सरः, संपर्यनूद्भ्यः परः—संवत्सरः, परिवत्सरः, अनुवत्सरः, उद्वत्सरः ॥ ४ ॥ वृणोति छादयति वर्षम् ॥ ५ ॥ जहाति जिहीते वा भावान् हायनः "हः कालव्रीह्योः" ॥५।१।६८॥ इति टनण् ॥ ६ ॥ आप्यते अब्दः "आपोऽप् च" ॥ ( उणा-२३८ ) ॥ इति दः । वर्षादयस्त्रयः पुंक्लीबलिङ्गाः ॥ ७ ॥ समन्ति समाः स्त्रीलिङ्गः, सह मान्ति वर्त्तन्ते ऋतव आसु वा; बहुत्वेऽयम् ॥ ८ ॥ शीर्यत इति शरत् स्त्रीलिङ्गः ॥ ९ ॥

शेषश्चात्र—वर्षे तु ऋतुवृत्तिर्युगांशकः ।
कालग्रन्थिर्मासमलः संवत् सर्वर्तुशारदौ ॥
वत्स इद्वत्सर इडावत्सरः परवाणिवत् ।
संवदित्यनव्ययम् । अव्ययं त्वव्ययेषु वक्ष्यते ॥

भवेत् पैत्रं त्वहोरात्रं मासेन

पितृणामिदं पैत्रम्, अहोरात्रम्, तत्र कृष्णपक्षोऽहः, शुक्लो रात्रिः, मासेन मानुषेणेति शेषः ॥ १ ॥

अब्देन दैवतम् ॥ ७३ ॥

मानुषेणेति शेषः । देवतानामिदं, दैवतं, अहोरात्रम्, तत्रोत्तरायणमहः, दक्षिणायनं रात्रिः ॥ ७३ ॥

दैवे युगसहस्रे द्वे ब्राह्मं

अहोरात्रमित्येव । दैवैर्हि षष्ट्यधिकैस्त्रिभिरहोरात्रशतैर्दिव्यं वर्षं, तैर्द्वादशभिः सहस्रैर्लौकिकं चतुर्युगम्, तच्च देवानामेकं युगं तत्सहस्रं ब्रह्मणो दिनं भूतानां स्थितिकालः, तावत्येव रात्रिर्भूतानां प्रलयकालः ।

यन्मनुः—

चत्वार्याहुः सहस्राणि वर्षाणां तु कृतं युगम् ।
तस्य तावच्छती संध्या संध्यांशश्च तथाविधः ॥ १ ॥
इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु ।
एकापायेन वर्तन्ते सहस्राणि शतानि च ॥ २ ॥
यदेतत् परिसंख्यातमादावेव चतुर्युगम् ।
एतद्द्वादशसाहस्रं देवानां युगमुच्यते ॥ ३ ॥
दैविकानां युगानां तु सहस्रं परिसंख्यया ।
ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरुच्यते ॥ ४ ॥

मानुषमानेन ब्राह्ममहोरात्रं यथा—

मानुषाणि सहस्राणां शतान्याहुश्चतुर्दश ।
चत्वारिंशत् सहस्राश्च वर्षाणां तत् कृतं युगम् ॥ १ ॥
लक्षाणि चतुर्हीनानि सहस्रा द्विगुणास्ततः ।
इति त्रेतायुगे कालगणना मानुषी कृता ॥ २ ॥
नियुतानि पुनः सप्त सहस्राणि च विंशतिः ।
द्वापरं युगमन्ये तु लक्षाण्यष्टौ मृषैव तत् ॥ ३ ॥
त्रीणि लक्षाणि षष्टिश्च सहस्राणि कलौ युगे ।
चतुर्युगसहस्राणि द्वादश ब्रह्मणो दिनम् ॥ ४ ॥
इयं च मानुषेणैव मानेन गणना कृता ।

कल्पौ तु ते नृणाम् ।

ये द्वे दैवे युगसहस्रे ते नृणां कल्पौ, एकं स्थितिं कल्पयति स्थितिकल्प द्वितीयं तु क्षयमिति ॥

**मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः ॥ ७४ ॥**

मनूनां स्वायंभुवचाक्षुषवैवस्वतादीनामन्तरमवकाशोऽवधिर्वा तैर्हि चतुर्दशभिर्ब्रह्मणो दिनम् ॥७४॥

**कल्पो युगान्तः कल्पान्तः संहारः प्रलयः क्षयः ।**
**संवर्त्तः परिवर्त्तश्च समसुप्तिर्जिहानकः ॥ ७५ ॥**

कल्पते जगदस्मिन् कल्पः॥१॥ युगस्यान्तो युगान्तः ॥२॥ कल्पस्यान्तोऽवधिः कल्पान्तः, अत्रैकः कल्पः क्षयार्थोऽन्यो ब्राह्मदिनार्थः; यच्छाश्वतः–कल्पः शास्त्रे विधौ न्याये संवर्त्ते ब्रह्मणो दिने ॥३॥ संह्रियते प्रलीयते क्षीयते जगदत्र संहारः ॥ ४ ॥ प्रलयः ॥५॥ क्षयः ॥६॥ संवर्तते, परिवर्तते जगदत्र संवर्तः, परिवर्तः ॥ ७ ॥ ८ ॥ समा सुप्तिरत्र समसुप्तिः ॥ ९ ॥ जिहीते गच्छति जिहानः स्वार्थे के जिहानकः ॥ १० ॥ ७५ ॥

**तत्कालस्तु तदात्वं स्यात्**

स चासौ कालश्च तत्कालः ॥१॥ तदेत्यस्य भावः तदात्वम् ॥२॥

**तज्जं सान्दृष्टिकं फलम् ।**

तज्जं तात्कालिकं फलं, संदृष्टं प्रत्यक्षं प्रयोजनमस्य सांदृष्टिकम् । "प्रयोजनम्" ॥६।४।११७॥ इतीकण् । सांदृष्टिकमित्यन्यः ॥१॥

**आयतिस्तूत्तरः कालः**

आयमनमायतिः, एष्यत्यायतिरित्यन्ये । उत्तर आगामी कालः ॥ १ ॥

**उदर्कस्तद्भवं फलम् ॥ ७६ ॥**

उदियर्ति उदर्कः "निष्कतुरुष्कोदर्क-"॥ (उणा-२६)॥ इति कान्तो निपात्यते, उदच्यते अभिलाषात् सूयते इति वा, तद्भवमायतिभवं फलम् ॥१॥७६॥

**व्योमान्तरिक्षं गगनं घनाश्रयो**
**विहाय आकाशमनन्तपुष्करे ।**
**अभ्रं सुराभ्रोडुमरुत्पथोऽम्बरं**
**खं द्योदिवौ विष्णुपदं वियद् नभः ॥ ७७ ॥**

व्ययति छादयति क्ष्मां व्योम "व्येग एदोतौ च वा" ॥ (उणा--९१४) ॥ इति मन्, व्यवतीति वा मनि "मव्यविश्रिविज्वरि-" ॥ ४।१।१०९ ॥ इत्यूट् ॥ १ ॥ अन्तर्मध्ये ऋक्षाण्यस्य, द्यावापृथिव्योरन्तरीक्षते वा अन्तरिक्षं पृषोदरादित्वात्, अन्तरीक्षमित्यपि ॥ २ ॥ गच्छन्त्यनेन देवा गगनं "विदनगगनगहनादयः" ॥

( उणा--२७५ ) ॥ इत्यनान्तो निपात्यते ॥ ३ ॥ घनानामाश्रयो घनाश्रयः ॥ ४ ॥ विजहाति सर्वं विहायः " विहायस्सुमनस्- " ॥ ( उणा--९७६ ) ॥ इत्यादिना असन्तो निपात्यते ॥ ५ ॥ आकाशन्ते सूर्यादयोऽस्मिन्निति आकाशम्, पुंक्लीबलिङ्गौ, न काशते वा बाहुलकाद् दीर्घः ॥ ६ ॥ नास्त्यन्तोऽस्य अनन्तम् ॥ ७ ॥ पोषति मेघान् पुष्करं " सूपुषिभ्यां कित् " ॥ ( उणा--४३६ ) ॥ इति करः, पुष्कं वारि रातीति वा ॥ ८ ॥ अभ्राण्यऽस्य सन्तीत्यभ्रं " अभ्रादिभ्यः " ॥ ७।२।४६ ॥ इत्यः ॥ ९ ॥ सुराणां देवानाम्, अभ्राणां मेघानाम्, उडूनां नक्षत्राणां, मरुतां वायूनां पन्थाः सुरपथः, अभ्रपथः, उडुपथः, मरुत्पथः, यौगिकत्वात् देववर्त्म, मेघवर्त्म, नक्षत्रवर्त्म, वायुवर्त्मेत्यादयः ॥ १० ॥ ११ । १२ ॥ १३ ॥ अमन्त्यत्र देवा अम्बरं " जठरक्रकर- " ॥ ( उणा–४०३ ) ॥ इत्यरान्तो निपात्यते, अम्बते शब्दायत- इत्यन्ये ॥ १४ ॥ खन्यते खं " क्वचिद् "॥५।१।१७१॥ इति डः ॥ १५ ॥ द्योदिवौ पूर्ववत् ॥ १६॥१७ ॥ विष्णोः पदं क्रमोऽत्र विष्णुपदम्॥१८॥ वियच्छति न विरमति वियत् क्विप् ॥ १९ ॥ नभ्यतीति नभः, न बभस्तीति वा नखादित्वात्, क्लीबलिङ्गौ ॥२०॥ विहायसा भुवश्चाव्यये । महाविलं देश्याम् ॥

शेषश्चात्र—नक्षत्रवर्त्मनि पुनर्ग्रहनेमिर्नभोवटी । छायापथश्च ॥ ७७ ॥

नभ्राट् तडित्वान् मुदिरो घनाघनो-
ऽभ्रं धूमयोनिस्तनयित्नुमेघाः ।
जीमूतपर्जन्यबलाहका घनो
धाराधरो वाहदमुग्धरा जलात् ॥ ७८ ॥

न न भ्राजते नभ्राट् पृषोदरादित्वादेकस्य नञो लोपे नखादित्वात् साधुः ॥ १ ॥ तडिद्विद्यतेऽस्य तडित्वान् ॥ २ ॥ मोदन्ते जना अनेन मुदिरः " शुषीषि- " ॥ ( उणा--४१६ ) ॥ इति किदिरः ॥ ३ ॥ हन्ति प्रवासिन इति घनाघनः चराचरचलाचल- "॥४।१।१३॥ इत्यादिना अजन्तो निपात्यते ॥ ४ ॥ अभ्रति अभ्रं, न भ्रश्यन्त्यापोऽस्मादित्येके, यदुक्तम्--न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्यतः, आप्नोति सर्वा दिश इति वा अभ्रं " खुरक्षुर "--॥ ( उणा--३९६ ) ॥ इति साधुः ॥५॥ धूमो योनिः कारणमस्य धूमयोनिः ॥६॥ स्तनयति गर्जति स्तनयित्नुः " हृषिपुषि "--॥ ( उणा--७९७ ) ॥ इत्यादिना इत्नुः ॥७॥ मेहति सिञ्चति भुवं मेघः "न्यङ्क्वुद्गमेघादयः"॥४।१।११२॥ इति साधुः ॥८॥ जीवन्त्यनेन जीमूतः "जीवेर्म च-" ॥ ( उणा--२१६ ) ॥ इत्यूतः, जीवनस्य जलस्य मूतः पुटबन्ध- इति पृषोदरादित्वाद् वा ॥ ९ ॥ परिवर्षति गर्जति वा पर्जन्यः " हिरण्यपर्जन्यादयः-" ॥ ( उणा--३८० ) इत्यन्यान्तो निपात्यते ॥ १० ॥ बलन्ति जीवन्त्यनेन बलाहकः " बलिबिलि- " ॥ ( उणा--८१ ) ॥ इत्याहकः, वारिणो वाहको वा पृषो-

दरादित्वात् ॥११॥ हन्यते वायुना घनः " मूर्त्तिनिचिताभ्रे घनः " ॥५।३।३७॥ इत्यलन्तो निपात्यते ॥१२॥ धारां धरति धाराधरः " आयुधादिभ्यो धृगोऽदण्डादेः "॥५।१।९४॥ इत्यच् ॥ १३ ॥ वाहश्च दश्च मुक् च धरश्च वाहदमुग्धराः, ते जलात् परा मेघस्य वाचका इत्यर्थः जलवाहः, जलदः, जलमुक्, जलधरः, यौगिकत्वात् वारिवाहः, वारिदः, वारिमुक्, वारिधरः, इत्यादयः। अभ्रवर्जं सर्वे पुंलिङ्गाः। इन्द्रवंशेन्द्रवज्रयोरुपजातिरियम् ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

शेषश्चात्र--मेघे तु व्योमधूमो नभोध्वजः।
गण्डायित्नुर्गदयित्नुर्वार्मसिर्वारिवाहनः ॥
खतमालोऽपि ॥ ७८ ॥

कादम्बिनी मेघमाला

कमाददते कादम्बाः मेघाः ते सन्त्यस्यां कादम्बिनी, कदम्बविकासः कादम्बः सोऽस्त्यस्यां वा; मेघमाला मेघपङ्क्तिः। कालिकाऽपि ॥ १ ॥

दुर्दिनं मेघजं तमः।

दुष्टं दिनमत्र दुर्दिनं, मेघाज्जातं मेघजं, तमोऽन्धकारं, यद्भागुरिः--दुर्दिनं ह्यन्धकारो ऽब्दैः। वार्दलमपि ॥ १ ॥

आसारो वेगवान् वर्षः।

आसरणमासारः, स वेगवान् वर्ष इत्युच्यते ॥ १ ॥
शेषश्चात्र--अथासारे धारासंपात इत्यपि ॥

वाताऽस्तं वारि शीकरः ॥ ७९ ॥

वातेनास्तं क्षिप्तं वातास्तम्, शीकते सिञ्चति शीकरः " ऋच्छिचटि-" ॥ ( उणा--३९७ ) ॥ इत्यरः॥ १ ॥ ७९ ॥

वृष्टयां वर्षणवर्षे

वर्षणाद् वृषभ इति भाष्यकारवचनाद् वर्षणमिति साधुः ॥ १ ॥ वर्षं पुंक्लीबलिङ्गः, " वर्षादयः क्लीबे "॥५।३।२९॥ इत्यल्। यद्वाचस्पतिः-- अथ वृष्टिर्वर्षमस्त्री केचिदिच्छन्ति वर्षणम् ॥ २ ॥

तद्विघ्ने ग्राहग्रहाववात्।

तद्विघ्ने वृष्टिविघ्ने अवात्परौ ग्राहग्रहौ अवग्राहः, अवग्रहः " वर्षविघ्नेऽवाद् ग्रहः " ॥ ५ । ३ । ५० ॥ इति वा अल् ॥ १ ॥ २ ॥

घनोपलस्तु करकः

घनोपलो मेघग्रावा, कीर्यते करकः त्रिलिङ्गः "दृकृनृ-" ॥ ( उणा--२७ ) ॥ इत्यादिना अकः ॥ १ ॥

शेषश्चात्र--करकेऽम्बुघनो मेघकफो मेघास्थि पुञ्जिका ॥
बीजोदकं तोयडिम्भो वर्षाबीजमिरावरम् ॥

**काष्ठाऽऽशा दिग् हरित् ककुप् ॥ ८० ॥**

काशते काष्ठा ॥ १ ॥ आऽश्नुते आशा ॥ २ ॥ दिशत्यवकाशं दिक् "ऋत्विग्-दिश्-" ॥ २ । १ । ६९ ॥ इति गत्वम् ॥ ३ ॥ हरन्त्यनया हरित् "हृसृरुहियुषि-तडिभ्य इत्" ॥ (उणा--८८७) ॥ इति इत् ॥ ४ ॥ कं वायुं स्कुभ्नाति विस्तारयति ककुप् "ककुप्त्रिष्टुबनुष्टुभः" ॥ ( उणा-९३२ ) ॥ इति क्विबन्तो निपात्यते । एते स्त्रीलिङ्गाः ॥ ५ ॥ ८० ॥

**पूर्वा प्राची**

पृणाति पूर्वा "निघृषि-" ॥ (उणा-५११) ॥ इति वः कित्, पूर्वति व्याप्नोतीति वा ॥ १ ॥ प्रथममस्यामञ्चत्यादित्य इति प्राची क्विपि "अञ्चः" ॥ २ । ४ । ३ ॥ इति ङीः ॥ २ ॥

**दक्षिणाऽपाची**

दक्षते शीघ्रं गच्छत्यस्यां रविरिति दक्षिणा "द्रुहृवृहि"- ॥ (उणा-१९४) ॥ इति इणः ॥ १ ॥ अपाञ्चत्यस्यां रविरित्यपाची । जपादित्वाद् वत्वे अवाची इत्यपि ॥ २ ॥

**प्रतीची तु पश्चिमा ।**

**अपरा**

प्रत्यञ्चति रविरस्यां प्रतीची ॥ १ ॥ पश्चाद् भवा पश्चिमा "पश्चादाद्यन्ताग्रादिमः" ॥ ६।३।७५ ॥ इतीमः ॥ २ ॥ न पृणाति रविश्चिरमेतामपरा ॥ ३ ॥ शेषश्चात्र—यथाऽपरेतरा पूर्वाऽपरा पूर्वेतरा तथा ॥

**अथोत्तरोदीची**

अतिशयेनात्कृष्टा उत्तरा "द्वयोर्विभज्ये च तरप्" ॥७।३।६॥ इति तरप्, उत्तरतीति वा ॥ १ ॥ उत्तरमञ्चत्यर्कोऽस्यां उदीची ॥ २ ॥

शेषश्चात्र-यथोत्तरेतराऽपाची तथाऽपाचीतरोत्तरा ॥

**विदिक् त्वपदिशं प्रदिक् ॥ ८१ ॥**

विशिष्टा दिक् विदिक् उभयव्यपदेशात्, यदाहुः—यान्यासामन्तरालानि विदिशः प्रदिशश्च ताः ॥ १ ॥ दिशोरिदमपादिशं, विभक्त्यर्थेऽव्ययीभावे "शर-

द्वादेः" ॥७।३।९२॥ इत्यत् समासान्तः ॥ २ ॥ प्रकृष्टा दिक् प्रदिक् ॥ ३ ॥ ८१ ॥

**दिश्यं दिग्भववस्तुनि**

दिश्यमिति "दिगादिदेहांशाद् यः" ॥६।३।१२४ ॥ १ ॥

**अवागपाचीनम्**

अपाञ्चतीति अपाक् ॥ १ ॥ अपागेवाऽपाचीनम् "अदिक्स्त्रियां वाऽञ्चः" ॥७।१।१०७॥ इति स्वार्थे ईनः ॥ २ ॥

एवम्—

**उदगुदीचीनम् ।**

एवम्—

**प्राक् प्राचीनं च समे**

एवम्—

**प्रत्यक् तु स्यात् प्रतीचीनम् ॥ ८२ ॥**
**तिर्यग्दिशां तु पतय इन्द्राग्नियमनैर्ऋताः ।**
**वरुणो वायुकुबेरावीशानश्च यथाक्रमम् ॥ ८३ ॥**

तिर्यगित्यूर्ध्वाधोदिग्व्यवच्छेदार्थम् । विदिगपि प्रसिद्ध्या दिक् । एवं च स्वस्वामिसंबन्धे पूर्वा दिग् ऐन्द्री, ततो विदिक् आग्नेयी, दक्षिणा याम्या, ततो विदिक् नैर्ऋती, पश्चिमा वारुणी, ततो विदिक् वायव्या, उत्तरा कौबेरी, ततो विदिक् ऐशानी इति सिद्धम् ॥ ८३ ॥

**ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।**
**पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥ ८४ ॥**

इरावति अब्धौ जातः ऐरावतः "जाते" ॥६।३।९८॥ इत्यण् ॥ १ ॥ पुण्डरीकवर्णत्वात् पुण्डरीकः ॥ २ ॥ वामनाकारत्वाद् वामनः ॥ ३ ॥ कुमुदवर्णत्वात् कुमुदः ॥ ४ ॥ अञ्जनवर्णत्वात् अञ्जनः ॥ ५ ॥ पुष्पवद् दन्ता अस्य पुष्पदन्तः ॥ ६ ॥ सर्वभूमेर्ज्ञातः सार्वभौमः "पृथिवीसर्वभूमेरीशज्ञातयोश्चाञ्" ॥ ६ । ४ । १५६ ॥ इत्यञ् ॥ ७ ॥ शोभनानि प्रतीकानि अङ्गानि अस्य सुप्रतीकः ॥ ८ ॥ दिशां धारका गजा दिग्गजाः । दिक्क्रमेणेति प्रस्तावाद् लभ्यते । 'ऐरावतः पुण्डरीकः कुमुदाञ्जनवामनाः' इति भागुरिः क्रममाह । माला तु--ऐरावतः सुप्रतीक इति ॥ ८४ ॥

इन्द्रादयोऽष्टौ दिक्पालाः, तत्राग्निर्वायुश्चैकेन्द्रियेषु तिर्यक्काण्डे वक्ष्येते, शेषानुक्रमेणाह—

चातुर्येणाऽखिलयुवतिषु क्ष्मातले तद्विशाले
हन्तैकस्थं क्वचिदपि न ते सुभ्रु ! सादृश्यमस्ति ॥ १११ ॥
तुल्यं स्त्रैणं तृणमपि च मे शुद्धशीलप्रभावात्
प्रागासीना भवति भवती येषु येष्वासनेषु ।
नेहे ब्रह्मव्रतकृतरतिस्तन्वि ! तत्राऽऽसितुं तत्
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ ११२ ॥
चातुर्मास्यं समजनि शुभे ! पूर्णमेतत्सुखेन
त्वद्गेहे मे समभवदहो ! शीलहानिर्न काचित् ।
यायां पादानथ निजगुरोर्वन्दितुं कर्मनाशे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥ ११३ ॥
धर्मं तावद् भजतु भवती वीतरागप्रणीतं
दानं शीलं तप इह शुभो भाव एवंप्रकारम् ।
गन्तव्यं वै सुतनु ! मयका प्रावृषोऽहानि नीत्वा
दिक्संसक्तप्रविरलघनव्यस्तसूर्यातपानि ॥ ११४ ॥
ज्ञाते धर्मे जिननिगदिते तेऽपि नो भावि दुःखं
मुग्धे ! तस्मादिह परभवे लप्स्यसे त्वं च सौख्यम् ।
अस्मच्चेतो जिनमतगतं नाऽभजत् क्वापि दुःखं
गाढोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥ ११५ ॥
जैने धर्मे कुरु निजमतिं निश्चलां तन्वि ! नित्यं
शीलं धेहीहितसुखकरं देहि दानं गुणिभ्यः ।
पापव्यापव्यतिकरजुषां धर्मभाजां च पुंसां
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ११६ ॥
शुद्धिं भद्रे ! रचय तपसा स्वस्य तेनात्मनस्त्वं
दृष्ट्वा क्लृप्तं मुनिभिरतुलं यद् वनस्थैस्त्रिशुद्ध्या ।
हर्षेणोच्चैर्दिवि दिविषदां पुष्पवृष्ट्या समं स्राग्
मुक्तास्थूलास्तरुकिशलयेष्वश्रुलेशाः पतन्ति ॥ ११७ ॥
कोशा प्रोचे प्रिय ! विगलिता साऽद्य मे भोगतृष्णा

---

१११ चण्डि ! इत्यपि । ११३ यास्ये इति च । तस्मिन् प्रसिद्धे कर्मनाशे क्रूरः नौ आवयोः कृतान्तः सिद्धान्तो न सहते । ११७ यच्च तस्थे त्रिशुद्ध्या इति पाठान्तरम् । अश्रुलेशाः अश्रुबिन्दवः ।

वाक्यैरेभिस्तव हृदि निजे या मयेत्थं धृताऽभूत् ।
आवां भूयो विरहविगमे भोगभङ्गीं विचित्रां
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ ११८ ॥
स्वामिन् ! धर्माऽमृतरसमयं देहि दिव्यौषधं तद्
येनायं मे तुदति न मनो मन्मथाख्यो विकारः ।
त्वद्वाक्येनोज्झितविषयया यद्वशादद्य रात्रौ
दृष्टः स्वप्नेऽकितव ! रमयन् कामपि त्वं मयेति ॥ ११
इत्युक्तोऽसौ चरणनतया कोशया भक्तिपूर्वं
तद्वृत्तेन प्रमुदितमनाः सादरं साधुराजः ।
प्रादादस्यै भवभयहरं स्वं नमस्कारमन्त्रं
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ १२० ॥
तामूचेऽसौ मनसि सततं मन्त्रमेनं स्मर त्वं
नित्यं भक्त्या त्रिभुवनगुरोर्जन्म सार्थं सृज स्वम् ।
शीलेनाऽलं विमलममले ! जैनधर्मं भजेथाः
प्रातःकुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥ १२१ ॥
धन्यंमन्या मुनिवचनतोऽङ्गीचकाराऽखिलं तत्
प्रीतिं भेजे मनसि परमां साऽऽप्तसम्यक्त्वलाभा ।
दुष्टे द्वेषं गुरुनिगदिता यान्ति धर्मोपदेशा-
इष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ १२२ ॥
भद्रे ! भद्रं भवतु सततं ते जिनेन्द्रप्रसादात्
नन्तुं पादानथ निजगुरोरेष यास्यामि शस्यान् ।
ध्यायन्त्यै श्रीजिनपरिवृढं शीलरत्नेन शश्वद्
मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥ १२३ ॥
नीत्वा मासानथ स चतुरस्तत्र सच्छीलशाली
गत्वा सूरीन् समयचतुरो भूरिभक्त्या ववन्दे ।
तस्थौ गेहे मनसि दधती सा सुखं जैनधर्मं
केषां न स्यादभिमतफला प्रार्थना ह्युत्तमेषु ॥ १२४ ॥
यात्वा पारं समयजलधेः स्थूलभद्रः स भेजे
सूरीशत्वं भुवि जनमनो रञ्जयामास कामम् ।

११९ स्वच्छप्रकृते ! । १२३ कि० शीलेन, विद्युता विशिष्टद्युतिना ।

हित्वा तत्त्वामृततररसैः साऽपि चित्तं स्वमिद्धा-
निष्टान् भोगानविरतसुखं भोजयामास शश्वत् ॥ १२५ ॥
कुर्वन्नुर्वीवलयमखिलं जैनधर्माऽनुरक्तं
व्यक्तं चित्रं विदधदतुलं शीलशक्त्या त्रिलोक्याम् ।
भूमीपीठे स्मरहठहरो दीर्घकालं विहारं
चक्रे वक्रेतरमतिरसौ स्थूलभद्रो मुनीन्द्रः ॥ १२६ ॥
सच्चारित्रं यतिपतिरसौ कर्मवल्लीलवित्रं
दीर्घं कालं कलितविमलज्ञानदानः प्रपाल्य ।
भेजे स्वर्गं त्रिदशललनालोचनाब्जार्कतुल्यो
निःशल्यान्तर्निरुपमसुखं वीतनिःशेषदुःखम् ॥ १२७ ॥
कोशाऽपि श्रीजिनमतरता शीलमाराध्य सम्यक्
पत्युः स्नेहादिव दिविषदां धाम सा स्राग् जगाम ।
आपद् व्यापद्रहितमतुलं तत्र सातं विशेषा-
दत्राऽमुत्र प्रदिशति सुखं प्राणिनां जैनधर्मः ॥ १२८ ॥
तारायन्ते ततमतिभृतोऽप्यन्यतीर्थ्या इदानीं
विश्वे विश्वे खलु यदमलज्ञानभानुप्रभायाम् ।
सोऽयं श्रीमानवनिविदितो रत्नसिंहाख्यसूरि-
र्जीयाद् नित्यं नृपतिमहितः सत्तपोगच्छनेता ॥ १२९ ॥
शिष्योऽमुष्याऽखिलबुधमुदे दक्षमुख्यस्य सूरे-
श्चारित्रादिर्धरणिवलये सुन्दराख्याप्रसिद्धः ।
चक्रे काव्यं सुललितमहो ! शीलदूताभिधानं
नन्द्यात् सार्धं जगति तदिदं स्थूलभद्रस्य कीर्त्या ॥ १३० ॥
द्रङ्गे रङ्गैरतिकलतरे स्तम्भतीर्थाऽभिधाने
वर्षे हर्षाज्जलधिभुजगाऽम्भोधिचन्द्रे प्रमाणे ।
चक्रे काव्यं वरमिह मया स्तम्भनेशप्रसादात्
सद्भिः शोध्यं परहितपरैरस्तदोषैरसादात् ॥ १३१ ॥

**इति श्रीबृहत्तपोगच्छनायकभट्टारकश्रीरत्नसिंहसूरिशिष्यो-पाध्यायश्रीचारित्रसुन्दरगणिविरचितं शीलदूताभि-धानं समस्यामयं काव्यं समाप्तम् ।**

---

१२५ समिद्धानित्यपि । १३० –ऽमुख्योऽ– इति च ।

विषमभारवती नियमस्थितिः ।
तव लघोर्घटते न हि सुन्दर-
द्विज ! तनूज ! तनूसुखनाशिनी ॥ ४ ॥

तद्वाक्यश्रवणादनन्तरं, प्रसूर्माता, पुत्रं जयसिंहकुमारं, इत्यघोचत् ब्रूते स्म—हे सुन्दरद्विज मनोज्ञदशन ! हे तनूज सुत ! लघोस्तव नियमस्थितिः, कीदृशी, विषमो लोहभारवद् दुर्वहोऽजस्रं पञ्चमहाव्रतधरणरूपो भारो यस्यां सा विषमभारवती, पुनः किं०, तनूसुखनाशिनी शरीरसौख्यध्वंसिनी, न घटते नोपपद्यते इति ॥ ४ ॥

निशितयाऽसुखभूरसिधारया
गतिरिवाऽभिमता तव जातुचित् ।
न नियमस्थितिरत्र जनैरपि
श्रितनया तनयाऽभिदधे शिशोः ॥ ५ ॥

निशितया तीक्ष्णया, असेः खड्गस्य धारया, गतिर्गमनमिव,असुखभूरसौख्यस्थानं, नियमस्थितिः,हे तनय पुत्र ! शिशोर्बालस्य तव, जनैर्लोकैरपि, श्रितनया न्याय्या, नाऽभिदधे न प्रतिपादितेति ॥ ५ ॥

सुसुकुमार ! कुमार ! गृहस्थता–
सुखमशेषमहर्निशमात्मसात् ।
कुरु कनीं परिणीय घटोद्भट-
स्तनयमां नयमांसलमानसाम् ॥ ६ ॥

सुष्ठु अतिशयेन सुकुमारः कोमलस्तदामन्त्रणं हे सुसुकुमार !, हे कुमार बालक ! घटवत् कुम्भवत् उद्भटयोर्मत्तयोः स्त-

नयोः कुचयोर्यमं युग्मं यस्यास्तां, पुनर्नयेन नीत्या मांसलं पुष्टं मानसं यस्यास्तां, कनीं कन्यां, परिणीय गृहस्थताया अगारित्वस्य, अशेषं समस्तं, सुखं आत्मसात् स्वाधीनं कुर्वित्यर्थः ॥६॥

सुर इवाऽनुभवाऽऽत्मज ! नित्यशः
सुरवधूपमचञ्चलचक्षुषाम् ।
सुखमखण्डितमत्र धुरि स्थितो
धनवतां नवताण्डवडम्बरैः ॥ ७ ॥

हे आत्मज तनय ! सुरवधूपमा देवाङ्गनातुल्याश्चञ्चलचक्षुषो लोललोचनाः स्त्रिय इति यावत् तासां, अखण्डितं संपूर्णं सुखं, सुर इवाऽनुभवेत्यन्वयः । कैः, नवताण्डवडम्बरैर्नूतननाटकाडम्बरैः, त्वं कीदृशः, धनवतां व्यवहारिणां, धुरि स्थित इति ॥७॥

नवजलानि नभोऽम्बुपबालके
सलिलवाह इवातुलकौशलः ।
वितर वत्स ! यथेच्छमतुच्छको-
ऽर्थिनि वसूनि वसूर्जितमूर्त्तिभाक् ॥ ८ ॥

हे वत्स ! त्वं, किं०, अतुलकौशलोऽनल्पप्रावीण्यः, नभोऽम्बुपबालके चातकपोते, सलिलवाहो मेघः, यथा नवजलानि वितरति तथाऽर्थिनि याचके, वसूनि धनानि, वितर देहि । कीदृशः, अतुच्छकः पूर्णः, चित्तवित्ताभ्यामिति गम्यम्; पुनः, वसुभिस्तेजोभिरूर्जितां मूर्त्तिं भजतीति वसूर्जितमूर्त्तिभाक् ॥ ८ ॥

स्वजननीवचनैः स इतीरितः
पुनरभाषत मातरमुल्लसन् ।
नियतिमन्नियमो नियमस्थिति-

प्रियतमायतमानमनाः शिशुः ॥ ९ ॥

इति व्यावर्णितैः, स्वजनन्याः कोडिमदेवीनाम्न्या वचनैः, स शिशुर्जयसिंहः, ईरितः प्रेरितः सन्, पुनः, उल्लसन्, प्रमोदेनेति शेषः; पुनर्मातरं अभाषतोवाच, कीदृशः, नियतिमान् निश्चयवान् नियमो निजप्रतिज्ञारूपो यस्य स नियतिमन्नियमः, पुनः, नियमस्थितिरेव प्रियतमा प्रणयिनी तस्यां यतमानं यत्नवद् मनो यस्य स नियमस्थितिप्रियतमायतमानमना इति ॥ ९ ॥

अपि शिवाध्वनिबद्धधियां नृणा-
मघनिदानमभाणि जिनेन या ।
मम तदम्ब ! गृहस्थतया तया
किमधुना मधुना महतामिव ? ॥ १० ॥

शिवाध्वा मुक्तिमार्गस्तत्र निबद्धधियां बद्धबुद्धीनामपि नृणां, चरमशरीरिणामपीति शेषः, या जिनेन भगवता, आसन्नोपकारित्वेन श्रीवर्द्धमानस्वामिनेति यावत्; अघानां पापानां दुःखानां वा, निदानं कारणम्, अभाणि भणिता। हे अम्ब! तया गृहस्थतयाऽगारवासेन, अधुना मम किं?, कृतमिति यावत्। दृष्टान्तमाह—महतां सतां, मधुना मद्येनेवेति ॥ १० ॥

न विरसासु मरुष्विव हस्तिनां
भवति यासु रतिः सुखकृद् नृणाम् ।
बुधजनैः पथिकाः पथि पाप्मनः
सुनयना नयनाशकृतः स्मृताः ॥ ११ ॥

हस्तिनां मरुषु स्थलीष्विव, किंलक्षणासु, विरसासु निर्जलासु, अन्यत्र निःस्वादासु विपाकत इति, यासु रतिर्नृणां

सुखकृद् न स्यात्; अत्र पूर्वार्धे यच्छब्दोपादानात् पश्चिमार्द्धे तच्छब्दोऽध्याहार्यः, तेन ताः सुनयनाः स्त्रियः, किं०, नयनाशकृतः न्यायध्वंसिन्यः, पुनः किं०, पाप्मनः पापस्य, पथि मार्गे, पथिका अध्वन्याः, स्मृता उक्ताः, पापपद्धतिप्रवृत्तिकारिण्य इति यावत् ॥ ११ ॥

नयति तन्नटनं न सतां मनो
मुदममन्दममङ्गलनाशिनीम् ।
प्रचुररूपभृता यदनुष्ठितं
तनुमताऽनुमताऽऽदरमाभवम् ॥ १२ ॥

तन्नटनं नाटकं, सतां पण्डितानां, मनः, अमन्दमिति क्रियाविशेषणम्, अमङ्गलनाशिनीं अकल्याणवारिणीं, मुदं हर्षं, न नयति प्रापयतीत्यन्वयः । तत्किमित्याह—यत् प्रचुररूपभृता भूरिरूपधारिणा, तनुमता प्राणिना, आभवं आसंसारमधिकृत्य, अनुमतादरं कृतादरं यथा स्यात्तथा, अनुष्ठितं स्वीकृतमिति ॥१२॥

वितरणं ननु दातुमना अहं
तदभयाभिधमद्भुतमात्मसु ।
भवति यत् समतासुभगे शिवा-
ध्वनि हितं निहितं निजमानसे ॥ १३ ॥

नन्विति निश्चये, तदभयाभिधं वितरणं अभयदानं, कीदृशं, अद्भुतं चित्रकृत्, आत्मसु जन्तुषु, दातुमना अहमस्मीत्यन्वयः । यद् निजमानसे स्वस्वान्ते, निहितं अहमेतस्मै अभयं ददामीति चित्ते भावितं सत्, समतासुभगे साम्यरम्ये, शिवाध्वनि मुक्तिमार्गे, हितं पथ्यं भवतीति भावार्थः ॥ १३ ॥

व्रजितुमध्वनि यत्र महात्मना-

मभिलषामि समाहितचेतसाम् ।
त्वमपि तत्र तदम्ब ! भवाऽधुना
छविपदेऽविपदेनसि सत्वरा ॥ १४ ॥

समाहितचेतसां समाधियुक्तमनसां, महात्मनां साधूनां, यत्राऽध्वनि मार्गे, व्रजितुं गन्तुं, अभिलषामि ईहे, अहमिति योगः। हे अम्ब! ततस्तत्राऽध्वनि, कीदृशे, छविपदे शोभाऽऽस्पदे, पुनर्न विद्यते विपत् संसारसंबन्धिनी दुष्कर्मव्यापारप्रयासादि-रूपा व्यापत्तिः, एनः पातकं च यत्र तत्राऽविपदेनसि; त्वमपि सत्वरा भव औत्सुक्यं भजेति, संयमस्वीकारकरणेन मम सहा-यीभवेति भावार्थः ॥ १४ ॥

वचनमीरितमात्मभुवेत्यदो-
ऽनघमुदां खनिरप्यगरीयसा ।
शिखिसुलोचनयेव पयोधर-
ध्वनिरमानि रमासमयाऽनया ॥ १५ ॥

अगरीयसाऽपि बालेनापि, आत्मभुवा पुत्रेण, इतीरितं व्यावर्णितरूपं वचनं, कीदृशं, अनघमुदां खनिर्मनोज्ञहर्षाकरः, शिखिसुलोचनया केकिकान्तया, यथा पयोधरध्वनिर्मेघनादः, तथाऽनया कोडिमदेनाम्न्या जनन्या, किं०, रमासमया लक्ष्मी-तुल्यया, अमानि मेने ॥ १५ ॥

प्रमुदिता प्रति सूरतिबन्दिरं
चलितुमैच्छदथार्थमिवाऽङ्गिनम् ।
सपदि सा परिगृह्य तमात्मनः
सुतमसातमसावुदकोपमम् ॥ १६ ॥

अथेत्यन्यदा, मूर्त्तिमन्तमर्थमिव वित्तमिव, तं आत्मनः सुतं जयसिंहकुमारं, कीदृशं, असातमसौख्यं तद्रूपा मसिर्मषी तत्र, उदकोपमं पानीयप्रतिमं, तद्व्यपोहकत्वात्; परिगृह्य समादाय, सूरतिबन्दिरं प्रति प्रमुदिता सती, सा चलितुमैच्छच्चिचलिषुर्जातेति ॥ १६ ॥

जिनवरांश्च गुरूंश्च पुरे पुरे
प्रणयतः प्रणमन्त्यथ पुण्यधीः ।
अचलदध्वनि कोडिमदेसती
त्रसहिता सहिता तनुजन्मना ॥ १७ ॥

अथेति पालीपुरस्थस्वसहजालयात् शुभे दिवसे जिनवरान् देवान्, गुरून् मुनीन्, पुरे पुरे प्रणमन्ती अत एव पुण्ये धर्मे, अथवा पुण्या पवित्रा धीर्यस्याः सा, कोडिमदेसती अचलत्। कीदृशी, त्रसाश्चरजीवा उपलक्षणत्वात् स्थावराश्च तेषां हिता भावचारित्रात्, पुनः, तनुजन्मना पुत्रेण जयसिंहकुमारेण सहिता ॥ १७ ॥

शकुनसूचितभाविमहोदया-
ऽऽत्मजयुता वनिताऽऽलिमतल्लिका ।
निजमनोरथपूर्त्तिमनोरमा-
ऽध्वनि शिवानि शिवाकृतिरन्वभूत् ॥१८॥

शकुनैः सूचितो भावी महान् उदयो यस्याः सा, पुनः, आत्मजेन सुतेन युता, वनिताऽऽलिमतल्लिका स्त्रीश्रेणिश्रेष्ठा, पुनः, निजमनोरथपूर्त्या देवगुरुप्रणमनलक्षणस्वाभिलाषपूरणेन मनोरमा, पुनः, शिवा पार्वती तद्वत्, अथवा शिवा निरुपद्रवा

आकृतिर्यस्याः सा, सा कोडिमदेवी, अध्वनि मार्गे, शिवानि कुशलानि, अन्वभूत् क्षेमेण याति स्मेति ॥ १८ ॥

विजयदानमुनीन्द्रपदाम्बुजो-
ल्लसदलङ्कृति साऽथ पतिव्रता ।
नगरमाप च सूर्यपुरं कजो-
पमकरा मकराकरपार्श्वगम् ॥ १९ ॥

विजयदानमुनीन्द्रपदाम्बुजाभ्यां उल्लसन्ती अलङ्कृतिर्यत्र तत्, पुनः, मकराकरः समुद्रस्तत्पार्श्वगं उदधितटवर्त्तित्वात्, सूर्यपुरं नाम नगरं सूरतिबन्दिरं, सा पतिव्रता, अथ मेदपाटगूर्जरधरोल्लङ्घनात्, आप प्राप्ता । कीदृशी, कजोपमौ कमलतुल्यौ ॰ौ यस्याः सा ॥ १९ ॥

जययुतेव पुलोमसुताऽथ सा
प्रणमति स्म सुतेन समन्विता ।
विजयदानमुनीन्दुपदद्वयं
घनरसं नरसंघनमस्कृतम् ॥ २० ॥

जयेन जयदत्तेन युता, पुलोमसुता शचीव, सा सुतेन जयहेन समन्विता, विजयदानमुनीन्दोः पदद्वयं, कीदृशं, नरसङ्घेन ॰स्कृतं, घनरसं बहुहर्षं यथा भवति तथा, प्रणमति स्मेति॥२०॥

न्यगददुज्ज्वलदन्तमहोभरा
विदधतीव मनोहरमौक्तिकैः ।
मुनिपतेरुपदामियमग्रतो
वरवचाऽऽरवचारुमुखी सती ॥ २१ ॥

इयं सती, कीदृशी, उज्ज्वलो दन्तमहोभरो यस्याः, इवोत्प्रे-

अथेत्यन्यदा, मूर्त्तिमन्तमर्थमिव वित्तमित्र, तं आत्मनः सुतं जयसिंहकुमारं, कीदृशं, असातमसौख्यं तद्रूपा मसिर्मषी तत्र, उदकोपमं पानीयप्रतिमं, तद्व्यपोहकत्वात्; परिगृह्य समादाय, सूरतिबन्दिरं प्रति प्रमुदिता सती, सा चलितुमैच्छच्चिचलिषुर्जातेति ॥ १६ ॥

जिनवरांश्च गुरूंश्च पुरे पुरे
प्रणयतः प्रणमन्त्यथ पुण्यधीः ।
अचलदध्वनि कोडिमदेसती
त्रसहिता सहिता तनुजन्मना ॥ १७ ॥

अथेति पालीपुरस्थस्वसहजालयात् शुभे दिवसे जिनवरान् देवान्, गुरून् मुनीन्, पुरे पुरे प्रणमन्ती अत एव पुण्ये धर्मे, अथवा पुण्या पवित्रा धीर्यस्याः सा, कोडिमदेसती अचलत्। कीदृशी, त्रसाश्चरजीवा उपलक्षणत्वात् स्थावराश्च तेषां हिता भावचारित्रात्, पुनः, तनुजन्मना पुत्रेण जयसिंहकुमारेण सहिता ॥ १७ ॥

शकुनसूचितभाविमहोदया-
ऽऽत्मजयुता वनिताऽऽलिमतल्लिका।
निजमनोरथपूर्त्तिमनोरमा-
ऽध्वनि शिवानि शिवाकृतिरन्वभूत् ॥१८॥

शकुनैः सूचितो भावी महान् उदयो यस्याः सा, पुनः, आत्मजेन सुतेन युता, वनिताऽऽलिमतल्लिका स्त्रीश्रेणिश्रेष्ठा, पुनः, निजमनोरथपूर्त्या देवगुरुप्रणमनलक्षणस्वाभिलाषपूरणेन मनोरमा, पुनः, शिवा पार्वती तद्वत्, अथवा शिवा निरुपद्रवा

आकृतिर्यस्याः सा, सा कोडिमदेवी, अध्वनि मार्गे, शिवानि कुशलानि, अन्वभूत् क्षेमेण याति स्मेति ॥ १८ ॥

विजयदानमुनीन्द्रपदाम्बुजो-
ल्लसदलङ्कृति साऽथ पतिव्रता ।
नगरमाप च सूर्यपुरं कजो-
पमकरा मकराकरपार्श्वगम् ॥ १९ ॥

विजयदानमुनीन्द्रपदाम्बुजाभ्यां उल्लसन्ती अलङ्कृतिर्यत्र तत्, पुनः, मकराकरः समुद्रस्तत्पार्श्वगं उदधितटवर्त्तित्वात्, सूर्यपुरं नाम नगरं सूरतिबन्दिरं, सा पतिव्रता, अथ मेदपाटगूर्जरधरोल्लङ्घनात्, आप प्राप्ता। कीदृशी, कजोपमौ कमलतुल्यौ करौ यस्याः सा ॥ १९ ॥

जययुतेव पुलोमसुताऽथ सा
प्रणमति स्म सुतेन समन्विता ।
विजयदानमुनीन्दुपदद्वयं
घनरसं नरसंघनमस्कृतम् ॥ २० ॥

जयेन जयदत्तेन युता, पुलोमसुता शचीव, सा सुतेन जयसिंहेन समन्विता, विजयदानमुनीन्दोः पदद्वयं, कीदृशं, नरसङ्घेन नमस्कृतं, घनरसं बहुहर्षं यथा भवति तथा, प्रणमति स्मेति॥२०॥

न्यगददुज्ज्वलदन्तमहोभरा
विदधतीव मनोहरमौक्तिकैः ।
मुनिपतेरुपदामियमग्रतो
वरवचाऽऽरवचारुमुखी सती ॥ २१ ॥

इयं सती, कीदृशी, उज्ज्वलो दन्तमहोभरो यस्याः, इवोत्प्रे-

क्ष्यते–मुनिपतेः श्रीविजयदानसूरेः, अग्रतः मनोहरमौक्तिकैः रम्यमुक्ताफलैः, उपदां ढौकनं, विदधती कुर्वती, पुनः, वरः श्रेष्ठो यो वचः शुकः "वचः शुके" इत्यनेकार्थत्वादिति वरवचः शोभनशुकस्तद्वत् आरवेण ध्वनिना चारुमुखी, न्यगदद् बभाणेति॥२१॥

सममनेन सुतेन लघीयसा
निकट आर्यवराः! सुकृताकरे ।
परिजिघृक्षुरहं ध्रुवमस्मि वः
शुभवतां भवताण्डवहृद् व्रतम् ॥२२॥

अनेन पुरःस्थितेन सुतेन समं सार्धं, हे आर्यवराः श्रीपूज्यमिश्राः! शुभवतां श्रेयस्विनां, वो युष्माकं, निकटे पार्श्वे, कीदृशे, सुकृताकरे धर्मखानौ, भवताण्डवहृत् संसारनाट्यहरं, व्रतं चारित्रं, ध्रुवं निश्चयेन, परिजिघृक्षुर्ग्रहीतुमिच्छुः, अस्मीत्यर्थः २२

इति तदुक्तिमुदारगुणास्पदं
सुतममुं च निशम्य सदाकृतिम् ।
भृशममी गुरवो गुरुवैभवा
मुमुदिरे मुदिरेष्टसमागमाः ॥ २३ ॥

उदारगुणानामास्पदं पदं, तदुक्तिं तद्वाचं, निशम्य श्रुत्वा, पुनः, सदाकृतिं शोभनाकारं, अमुं सुतं, निशम्य निरीक्ष्य । यत् श्रीहेमसूरयोऽनेकार्थसंग्रहे "निशमनं निशामनं निरीक्षणश्रवणयोः" इत्याहुः, अमी गुरवः श्रीपूज्याः, कीदृशाः, गुरुवैभवा महासंपदः, पुनः, किं०, मुदिरो मेघस्तद्वत् इष्टः समागमो येषां, प्रजानामित्याक्षेप्यते, मुदिरेष्टसमागमाः, मुमुदिरे मोदमापुः ॥२३॥

अमृशदम्बिकयेरित आदरात्

स जयसिंहकुमार उदारदृक् ।
स्वशिरसा बहुशः सुगुरोर्द्वयीं
चरणयो रणयोगतमोऽर्कयोः ॥ २४ ॥

उदारा दृग् बुद्धिर्दृष्टिर्दर्शनं वा यस्य सः, स जयसिंहकुमारः, अम्बिकया मात्रा, ईरितः प्रणोदितः सन्, स्वशिरसा सुगुरोः रणयोगतमोऽर्कयोः कलहसंयोगध्वान्तसूर्ययोः, चरणयोर्द्वयीं बहुशो भूरिवेलं, अमृशत् स्पृशति स्मेति ॥ २४ ॥

अमरभूरुहपल्लवशालिना
शिशुशिरः प्रणतं निजपाणिना ।
यतिवरा बहुवारमथाऽस्पृशन्
ध्वजपयोजपयोधिमुखाङ्किना ॥ २५ ॥

अमरभूरुहपल्लवः कल्पपादपकिशलयं तद्वच्छालिना, पुनः, ध्वजः पताका, पयोजं च कमलं, पयोधिः समुद्रः, तन्मुखानां तदादीनां लाञ्छनानां अङ्को भूषा तदादयो वा अङ्काश्चिह्नानि यस्मिंस्तेन ध्वजपयोजपयोधिमुखाङ्किना, निजपाणिना प्रणतमानतं, शिशुशिरो बालकमस्तकं, यतिवराः श्रीविजयदानसूरयः, बहुवारमनेकशः, अस्पृशन् स्पृशन्ति स्मेति ॥ २५ ॥

दृशि पुमान् गुणिलक्षणलक्षितः
खलु महान् भवतीति वितर्कतः ।
न गुरुदृग् जयसिंहदृशं जहौ
कमलिनीमलिनीव ससौरभाम् ॥ २६ ॥

महान् पुमान् दृशि चक्षुषि, गुणिनां गुणवतां लक्षणैर्लक्षितो भवति, एतावता महतां चक्षुर्लक्षणोपेतं विलोक्यते "यथा-

नेत्रे तथा शीलम्" इत्याद्युक्तेः, इति वितर्कतो गुरुदृग् जयसिंहदृशं न जहौ नाऽत्याक्षीत्। दृष्टान्तं स्पष्टयति—यथा ससौरभां सगन्धां, कमलिनीं नलिनीं, अलिनी भ्रमरीवेति ॥ २६ ॥

जलरुहे भ्रमरीव विकस्वरे
मुनिपदृग् भजति स्म चिरं स्थितिम् ।
शिशुमुखे मधुरत्वलसद्वचो-
मधुनि साधुनि साम्य इवर्षिहृत् ॥२७॥

शिशुमुखे, कीदृशे, मधुरत्वेन माधुर्येण लसद्वच एव मधु क्षीरं क्षौद्रं परागो वा यत्र तत्र, मुनिपदृग् गुरुदृष्टिः, स्थितिं भजति स्म। प्रथमान्त्यपादयोर्दृष्टान्तमाह-विकस्वरे जलरुहे भ्रमरी यथा, पुनः, साधुनि रम्ये, साम्ये समतायां, ऋषिहृत् चारित्रिचेतः, यथेत्युपन्यासः ॥ २७ ॥

अथैकविंशत्या वृत्तैर्यथा गुरुः शिशुं परीक्षितवांस्तथा वर्णयति—

स्मितपयोजपलाशसुपेशले
प्रचुरपुण्यमये नयनद्वये ।
शुभति चाऽस्य शिशोः सदपाङ्गयो-
ररुणिमोरुणि मोदनिदानभूः ॥ २८ ॥

अस्य शिशोर्नयनद्वये, कीदृशे, स्मितपयोजपलाशवत् विकसितकमलदलवत् सुपेशले सुशोभने, पुनः, प्रचुरपुण्यमये बहुधर्ममये, पुनः, उरुणि विस्तीर्णे, सदपाङ्गयोः स्फुरत्कोणयोः, अरुणिमा रक्तिमा, कीदृशः, मोदनिदानभूः हर्षहेतुस्थानं, शुभति भातीति ॥ २८ ॥

चरणपाणितलौष्ठनखावली-

प्रभवयाऽद्भुतशोणतयाऽमुना ।
अरुणताऽवधि कोकनदाभिधा-
ऽम्बुजगता जगतामतिचित्रकृत् ॥ २९ ॥

चरणौ क्रमौ, पाणितले हस्ततले, ओष्ठोऽधरः, नखावली प्रतीता, ताभ्यः प्रभव उत्पत्तिर्यस्याः सा तया, अद्भुतशोणतया मनोज्ञरक्तत्वेन, कोकनदाभिधाऽम्बुजं रक्तोत्पलं तद्गता, अरुणता रक्तता, कीदृशी, जगतां अतिचित्रकृद् बह्वाश्चर्यकारिणी, अमुना बालेन, अवधि 'वधि हिंसायाम्' इति प्रयोगाद् हता, निर्जितेति निर्गलितार्थः ॥ २९ ॥

उदयदम्बुजसोदरसोदरा-
ऽभिनवघौसृणघोलविलेपनाः ।
जयति विद्रुमपल्लवसंपदो-
ऽमृतरसा तरसाऽस्य शिशो रसा ॥३० ॥

उदयन् उद्गच्छन् योऽम्बुजसोदरः सूर्यस्तत्सोदरस्तुल्योऽभिनवो नव्यो घौसृणः कौङ्कुमो घोलस्तद्विलेपनं यासां ताः, अनेन रक्तताऽतिशयः सूचितः; विद्रुमाणां प्रवालानां पल्लवाः किशलयानि तेषां संपदः संपत्तीर्गुणोत्कर्षान् वा "संपद् ऋद्धौ गुणोत्कर्षे" इत्यनेकार्थत्वादिति, अस्य शिशो रसा रसना, तरसा शीघ्रं, जयतीत्यन्वयः। कीदृशी, अमृतरसा सुधास्वादा मधुरभाषित्वात् ॥ ३० ॥

अरुणिमा यदितः प्रसरद्रुचि-
प्रभव एव भवेद् रसनोष्ठयोः ।
इति धिया विधिना बहुशोणता

प्रजनिताऽजनि तालुगता शिशोः ॥ ३१ ॥

अस्येत्यध्याहारः, तेनास्य शिशोः, इति धिया बुद्ध्या, विधिना धात्रा, बहुशोणता, कीदृशी, तालुगता काकुदगा, प्रजनिता निर्मिता, अजनि जातेति। इति किमित्याह—यदिति यतः कारणात्, इतस्तालुत एव, प्रसरद्रुचिप्रभवोऽरुणिमा रक्तिमा, रसनोष्ठयोर्जिह्वाधरयोः, भवेद् जायत इति ॥ ३१ ॥

शिरसिजेषु रदाङ्गुलिपर्वसु
त्वचि नखेषु महस्विषु सूक्ष्मता ।
बहुरमुष्य शिशोः सुभगाकृते-
रति विभाति विभाभरभाजिनः ॥ ३२ ॥

महस्विनस्तेजास्विनो ये शिरसिजाः केशास्तेषु, पुनः, रदा दन्ताः, अङ्गुलिपर्वाणि च तेषु, पुनस्त्वचि चर्मणि, पुनर्नखेषु, सूक्ष्मता कृशता, अस्य शिशोः, किंलक्षणस्य, विभाभरभाजिनः कान्तिनिकरशालिनः, पुनः, सुभगाऽऽकृतेः शोभनाऽऽकारिणः, बहुर्बह्वी, अति विभाति ॥ ३२ ॥

ध्रुवमयं भविता शिशुराढ्यरा-
डिति लिलेख किमक्षरपद्धतिम् ?।
भ्रमरकच्छलतोऽस्य विधिर्मुदो-
त्सुकमलीकमलीकमुचं सृजन् ॥ ३३ ॥

मुदा हर्षेणोत्सुकं मुदोत्सुकमिति क्रियाविशेषणं, अलीकमुचं कलङ्कमोचकं, अलीकं भालं, सृजन् कुर्वन्, विधिर्विधाता, भ्रमरको भालालकः "स तु भाले भ्रमरकः" इति वचनात्, तन्मिषात्; किं०, इत्यक्षरपद्धतिं वर्णावलीं, लिलेख। इति कथमित्याह—ध्रुवं निश्चितं, अयं शिशुः आढ्यराड् ज्ञानविज्ञा-

नादिधनाढ्यमुख्यः, भविता भावी, इति भावार्थः ॥ ३३ ॥

किमु जगत्प्रभुताचलचक्षुषः
शयनतल्पमनल्पसुखास्पदम् ।
पृथुलमस्ति हृदस्य शिशोः श्रिया
श्रितमनन्तमनङ्गमदच्छिदः ॥ ३४ ॥

जगत्प्रभुतैव चलचक्षुः स्त्री तस्याः, अनल्पसुखानामास्पदं, शयनतल्पं शय्येव, अस्य शिशोः, किं०, अनङ्गमदच्छिदः स्मरस्मयहर्तुः, श्रिया श्रितं, पुनः, अनन्तं निरवधि यथा स्यात्तथेति, पृथुलं हृदस्तीति ॥ ३४ ॥

मुनिसभाचलचञ्चुचलेक्षणा
पथि दृशोः प्रविधाय भजत्यलम् ।
उरुममुष्य मुखं शशिमण्डल-
प्रतिमकान्तिमकान्तकरीर्मुदः ॥ ३५ ॥

अमुष्य शिशोः, शशिमण्डलप्रतिमकान्ति चन्द्रबिम्बतुल्याभं, पुनः, उरुं विस्तीर्णं, मुखं दृशोः पथि प्रविधाय दृष्ट्वेति, मुखशब्दस्य पुंनपुंसकत्वात् मुखसंबन्धिविशेषणद्वयस्य पुंलिङ्गवाचकत्वे न काऽपि विप्रतिपत्तिरिति । मुनिसभाचलचञ्चुचलेक्षणा साधुपर्षच्चकोरी, "अकं दुःखाघयोः" इत्यनेकार्थत्वात् अकानां दुःखानां, पापानां वा अन्तकरीः अकान्तकरीर्दुःखध्वंसिनीः, पध्वंसिनीर्वा; मुदः प्रीतीः, भजतीत्यर्थः ॥ ३५ ॥

भवति भूरि वयःस्थशिखण्डिना-
मिव पयःपरिपूर्णपयोमुचः ।
अति गभीरममुष्य निशाम्यतां

स्वरमपारमपापदृशां सुखम् ॥ ३६ ॥

पयसा पानीयेन परिपूर्णो यः पयोमुग् मेघस्तस्य, इव यथा, वयःस्थशिखण्डिनां तरुणमयूराणां, तथा अमुष्य शिशोः, गभीरं, पुनः, अपारं स्वरं निशाम्यतां शृण्वतां, "दृग् द्रष्टृदर्शनध्यक्षिण" इत्यनेकार्थत्वात् अपापा दृग् दृष्टिः, दर्शनं वा, धीर्बुद्धिर्वा, येषां तेषां अपापचक्षुषां वा, अपापदर्शनानां वा, अपापधियां वा, पुण्यात्मनामिति यावत्; भूरि बहु, सुखं सातं भवतीति ॥३६॥

चुलुकतस्तलमाविरभूद् मुने-
स्तुलयतोऽपि पतिं पयसां बहुम् ।
प्रथितमस्य तु सत्त्वधनं सदा-
ऽतलमबालमवाग्विषयं शिशोः ॥३७॥

बहोस्त्रिलिङ्गत्वात् पुंलिङ्गे बहुं महान्तमपि, पयसां पतिं समुद्रं, मुनेरगस्त्यस्य, तुलयतः सतः, चुलुकतस्तलं आविरभूत् प्रकटितं, अस्य तु पृथुलं, पुनः, अतलमगाधं सत्त्वधनं, अबालजडं, पुनः, अत एवावाग्विषयं वचनागोचरम् ॥ ३७ ॥

असमविस्मयभूरभिभूयते
भुवनवैभववेश्म गभीरिमा ।
पृथुलकूपभुवाऽतिगभीरता-
ऽद्भुततया ततयाऽस्य न नाभिजः ॥३८॥

असमस्य निरुपमस्य विस्मयस्य भूर्भूमिः, पुनः, भुवनवैभवस्य जगदैश्वर्यस्य वेश्म गृहं, अस्य शिशोः, नाभिजो गभीरिमा ततया बह्वया, पृथुलकूपभुवाऽतिगभीरताऽद्भुततया कूपगभीरत्वचारुत्वेन, नाऽभिभूयते निर्जित इति निगर्वः ॥ ३८ ॥

मुनिषु भाव्ययमुन्नतिमान् भृशं
मनसि नक्रमवक्रमवेत्य किम् ?।
प्रविदधेऽस्य शिशोर्बहुबन्धुरो-
न्नततमं ततमम्बुजभूरिति ॥ ३९ ॥

अयं जयसिंहकुमारः, मुनिषु उन्नतिमान् भावी इति मनसि अवेत्य ज्ञात्वा, किं०, अम्बुजभूर्विधाता, अस्य शिशोः, नक्रं, किं०, अवक्रं सरलं, पुनः, बहुबन्धुरं घनमनोज्ञं च उन्नततमं चेति कर्मधारये बहुबन्धुरोन्नततमं, पुनः, ततं विस्तीर्णं, प्रविदधे चकारेत्यर्थः ॥ ३९ ॥

निगरणे युगलेऽपि च जङ्घयो-
रपि च पृष्ठतटेऽरमदीर्घता ।
लसति चास्य शिशोः सततोदय-
स्पृशदलेशदलेतरमानभूः ॥ ४० ॥

च पुनः, अस्य शिशोर्निगरणे कण्ठे, अपि च जङ्घयोर्युगे, अपि च पृष्ठतटे पाश्चात्यभागे, अरं अत्यर्थं, अदीर्घता लसति शोभत-इत्यन्वयः । अदीर्घता किं०, सततोदयं स्पृशतीति सततोदय-स्पृशत् पुनः अलेशं लेशवर्जितं अत एव दलेतरं अखण्डितं यन्मानं पूजासंमानादि तस्य भूः स्थानं, यतः कण्ठादिषु ह्रस्वेषु नरोऽर्चाभाग् भवतीति भावः ॥ ४० ॥

लगनमस्त्यनयोर्मम यज्जग-
द्धरणसारमिति प्रथनोत्सुकम् ।
स्पृशति चास्य शिशोरिति जानुनी
सरलतारलताकृति दोर्द्वयम् ॥ ४१ ॥

च पुनः, अस्य शिशोः दोर्द्वयं, भुजयुगलं, इति हेतोः, जानुनी स्पृशतीत्यन्वयः।दोर्द्वयं किं०, सरलाऽकुटिला तारा रम्या या लता वल्लिस्तद्वद् आकृतिर्यस्य तत् सरलतारलताकृति, हेतुमाह—यत् यस्मात्कारणात्, अनयोर्जानुनोः, मम लगनं जगद्भरणसारमस्ति जगतो यद् भरणं धारणं, पोषणं वा, डुडुभृंगृक् धातोर्धारणपोषणार्थत्वात्, इति प्रथने कथने उत्सुकं तत्परं, अनेन आजानुलम्बिभुजत्वमसूचीति भावः ॥ ४१ ॥

पृथुलमस्य शिशोर्द्वयमंसयो-
रतिशयोर्ध्वगतं श्रुतिसङ्गतम् ।
अति विभाति जगद्भररक्षण-
क्षममवाममवामतरः पदम् ॥ ४२ ॥

अस्य शिशोः अंसयोः स्कन्धयोर्द्वयं, किं०, पृथुलं विस्तीर्णं, पुनः किं०, अतिशयोर्ध्वगतं भृशोन्नतिमागतं, पुनः किं०, श्रुतिसङ्गतं कर्णप्राप्तं, पुनः किं०, जगद्भरस्य जगतीभारस्य रक्षणे क्षमं, पुनः किं०, अवामं अप्रातिकूलं, पुनः किं०, अवामतरःपदं प्रधानबलास्पदं, अति विभाति भृशं शोभते ॥ ४२ ॥

इति विधिर्विदधे पदमङ्कितं
मृदुलमस्य शुभोर्ध्वकरेखया ।
इदमशेषजगच्छिरऊर्ध्वगं
प्रभविता भवितापविनाशकृत् ॥ ४३ ॥

अस्य शिशोः, विधिर्विधाता, इति हेतोः, शुभोर्ध्वकरेखया अङ्कितं अलङ्कृतं, पुनः, मृदुलं सुकुमालं, पदं विदध इत्यन्वयः । हेतुमाह—इदं पदं, अशेषजगच्छिरसः समस्तविश्वशिरसः ऊर्ध्व-

समग्रदिग्व्यापकविश्वसैन्यको बभूव भूवल्लभविश्वसेनकः ॥ १४ ॥
विभूषितो भूतिभिरात्मना विभुर्बिभर्ति यां मूर्ध्नि ललाटलोचनः ।
यदग्रतो देवसरस्वती जलं वहत्युपान्तस्थितिमास्थितैव सा ॥ १५ ॥
चतुर्भुजत्वं स्ववशश्रियाऽऽश्रयन् भुजं ददद् दक्षिणमात्मनो द्विषाम् ।
पुनः स्वजन्मप्रतिपत्तिमानिनामवाप यो न स्वरसाद् विहस्तताम् ॥१६॥
विनिर्जितः शारदसारचन्द्रमा विसृत्वरैर्यस्य यशोभिरुज्ज्वलैः ।
धौ हृदन्तर्यदशर्म तत् परं कलङ्करूपं कविभिर्विवर्ण्यते ॥ १७ ॥

यस्तापं तनुते समाश्रयति यस्तां वारुणीं रागवान्
द्वेषं यः कविना सह प्रकुरुते ख्यातेन काव्याख्यया ।
आलोकप्रकटीकृताखिलजगत् सामान्यमप्यास्थितो
नायं येन समानतामकलयत् सूरः स भास्वानपि ॥ १८ ॥
यः संकोचयति स्म कोशनिचयं पद्माकराणां करै-
र्यः सर्वत्र कलङ्कपङ्ककलनाद् दोषाकरो विश्रुतः ।
स स्फूर्जद्गुणरत्नरत्नगिरिणा न क्षत्रलक्ष्मीकृता
साम्यं येन समं समाश्रयदयं राजा कलावानपि ॥ १९ ॥
न्यायः संश्रित एक एव भुवने पुष्णाति कीर्तिं परां
संबद्धः स विसर्जनेन सह चेत् स्वर्णस्य तत् सौरभम् ।
तद् द्वैतं विनयेन भूषयति वा लोकोत्तरः कश्चने-
त्येतद्वैदुषवाक्यसंश्रवणतो येनाऽऽदृतं तत्त्रयम् ॥ २० ॥
बिभ्राणोऽप्यास्यविवरगता द्वे सहस्रे रसज्ञा
यच्छेषो यं द्विरसनपतिः स्तोतुमेवाप्रभूष्णुः ।
शौर्यौदार्यादिकगुणगणं यस्य विश्वप्रसिद्धं
तस्थौ तेनावनितलमरं लज्जयैव प्रविश्य ॥ २१ ॥
( अष्टभिः कुलकम् )

महाशया तन्महिषी मनोहराऽचिराभिधाना चिरपुण्यसंचया ।
बभूव, कान्तेन महेशपार्वतीप्रपञ्चितप्रीतिमुदाजहार या ॥ २२ ॥
विलोक्य लोकोत्तरमेव रोहिणी यदग्र्यसौभाग्यमभङ्गुरं तपः ।
चकार सौभाग्यकृते नु रोहिणीतपः प्रसिद्धं तदिदं जिनागमे ॥२३॥

१ दानेन ।

आस्यं यस्या हसति सुतरां पौर्णमास्याः सुधांशुं
तेनैवायं प्रतिपदमितः प्रेक्ष्यते क्षीयमाणः ।
आलोकाय प्रकृतिमहसा सर्वथा व्यावृतानां
युक्तं चैतज्जगति महतां निर्जितानां परेण ॥ २४ ॥

आस्थानी रूपलक्ष्म्या भुवनविजयिनो राजधानी स्मरस्या-
क्रीडास्थानं गुणानां शरदिजशशिनः कौमुदीसन्निभानाम् ।
सौन्दर्यस्यैकपात्रं निरुपममहिमावत्रवत्राकरोर्वी
पौलोमी या द्वितीयाऽवनिभुवनगता वेधसाऽसर्जि नूनम् ॥२५॥
( चतुर्भिः कलापकम् )

दिवा वियोगः प्रथितश्चकोरयोस्तथा निशायामपि चक्रवाकयोः ।
अतो न ताभ्यामुचिता समानता तयोरजस्रं सुखसिन्धुमग्नयोः॥ २६॥

जगाम भोगानुपभुञ्जतोस्तयोः कियाननेहाः प्रियतानुरक्तयोः ।
परस्परप्रेमविनाकृतं बुधा विदुर्न किं जम्पातिसङ्गमं वृथा ? ॥ २७ ॥

जन्तुर्मेघरथस्य सोऽथ निखिलं स्वायुः प्रपूर्य त्रय-
स्त्रिंशत्सिन्धुमितं विमानकलितस्तस्माद् विमानाच्च्युतः ।
मासो भाद्रपदस्य सप्तमतिथौ कृष्णे भरण्यां विधौ
तस्याः कुक्षिमभूषयत् त्रिभुवनस्याभूषणाया विभुः ॥ २८ ॥

जात्याष्टापदवासवेश्मनि तदा मुक्तावितानोज्ज्वले
सा कृष्णागुरुसारधूपसुरभौ चित्रैर्विचित्रैः श्रिते ।
निद्रामुद्रितलोचनाम्बुजयुगा किञ्चित्प्रहृष्टा महा-
देवी सौस्थ्यभृता चतुर्दश महास्वप्नानिमानैक्षत ॥ २९ ॥

हिमगिरिशिलाकायच्छायं यशः किल मूर्तिमत्
शुभशुभमयैरंशैर्दन्तैश्चतुर्भिरलङ्कृतम् ।
सुरभितदिशं श्च्योतद्दानाम्भसा शुचिसादिशो
वदनकमले सा शक्रेभं विशन्तमवैक्षत ॥ ३० ॥

रदिजशशिज्योत्स्नागौरं शुभं तनुतां गतं
किल वसुमतीं शृङ्गाग्राभ्यामुदञ्च्य वहत्तमम् ।
विमुपहृतं यानं स्वीयं द्वितीयमरुत्वता
तदनु वृषभं देव्यद्राक्षीद दिवोऽप्यवतारिणम् ॥ ३१ ॥

वपुषि सितिभाऽद्वैतं स्फीतं वहन्तमकल्पितं
नयनकपिलज्योतिःपुञ्जैर्विधूततडित्प्रभम् ।
बलमदभृतो न्यक्कुर्वाणं रवैरपि दिग्गजान्
नयनपदवीमेणाधीशं ततो नयति स्म सा ॥ ३२ ॥
निरवधिमहासौन्दर्यैकक्रयाणकहट्टिका
सुमशरनृपस्वाम्योद्बोधाक्षराजुनपट्टिका ।
समुदितजगत्सुभ्रूरूपाभिमानविजित्वरी
प्रथमवदसौ देवी लक्ष्मीमवैक्षत विक्षताम् ॥ ३३ ॥
व्यजयत पुरा मा[1]ऽस्याः श्वासो मृदुत्वमिदं ततो
दधदतिशयं सर्वोत्कृष्टं पदौ शरणं श्रये ।
विविधकुसुमामोदाकृष्टप्रभूतमधुव्रता
सरससुमनोमाला तस्या इतीव मुखेऽविशत् ॥३४॥
वदनकमलेनैतस्याः प्राग् जितोऽस्मि यतो नभे[2]
दिवससमये किञ्चिद् नैव प्रभा प्रभवत्यपि ।
अविकलकला मद् बिभ्रत्याः कलाश्च चतुर्गुणा
इति शशधरस्तस्या वक्त्रे विवेश सिसेविषुः ॥ ३५ ॥
अयमपि विभुर्भव्यान् पद्माकरानिव भोत्स्यते
निजकमहसा सर्वानन्यान् प्रसह्य विजेष्यते ।
अहमिव जगच्चक्षुर्भावी भजाम्यमुमेव तद्
प्रथममिव तद्वक्त्रे भास्वानविक्षदवेक्षितुम् ॥ ३६ ॥
गिरिपदजुषो वंशस्याग्रेसरोऽहमिव प्रभुः
समधिकतरस्फूर्जत्प्रौढ्या सुपर्वकृताश्रियः ।
जगति भविता नानाकोटीश्वरालयभूषणं
स्वयमिति कृतस्वान्तस्तस्या विवेश मुखे ध्वजः ॥ ३७ ॥
जलनिधिवदाकण्ठं पूर्णं जलैर्मधुरैः परं
विकचसुमनोमालाकीर्णं जिनेश्वरबिम्बवत् ।
उपहृतमिव स्वर्नाथेनाग्रतोऽपि निधिं नवं
कनककलसं कल्याणाप्तौ विलोकयति स्म सा ॥ ३८ ॥

१ माम्, देव्याः । २ आकाशपर्यायोऽकारान्तो नभशब्दः ।

प्रतिनिधिमिव क्षीरोदस्याऽमृतैरमृतप्रभै-
र्विशदविशदैरापाल्यन्तं गतैः परिपूरितम् ।
खगमिथुनैर्नानारूपैरुपासितमाचितं
विकसिततरैः पद्मैः पद्माकरं च सकैक्षत ॥ ३९ ॥
प्रियतमतया क्रोडक्रीडत्सुतोपलसंविदा–
ऽवगणितमहारत्नज्योतिर्विभासितसैकतम् ।
पवनचलनोत्थास्नूर्मीणां सहस्रसमाकुलं
प्रमुदितमनाः पारावारं निभालयति स्म सा ॥ ४० ॥
प्रविशति तमो यस्मिन्नेव प्रभाकरमण्डलं
प्रतिरजनि चाऽऽदायाऽऽदायाऽऽहितं च विरिञ्चिना ।
सुखसमुदयान्मुक्तेः संवावदूकमलं सुखं
नृपतिदयिता वीक्षाञ्चक्रे विमानमनुत्तरम् ॥ ४१ ॥
इतरभवने जानात्यर्घं न कश्चन मामकं
कथमपि विदन् न स्वीकर्तुं दधाति समर्थताम् ।
इति जिनपतेः कर्तुं सेवामिव प्रगुणीभवन्–
महिमविधृतौ रत्नस्तोमं तदाननमाविशत् ॥ ४२ ॥
मम तनुभुवा धूमेनेदं जगन्मलिनीकृतं
त्रिभुवनगुरो ! त्वं तत् सर्वं पवित्रय चित्रवाक् ! ।
इति जिनपतिं विज्ञीप्सुः किं जनेश्वरवल्लभा–
मुखविधुमयं निर्धूमोऽग्निर्विवेश विभास्वरः ? ॥ ४३ ॥
यो ज्ञास्यते किल चतुर्दशरज्जुलोकं
विद्याश्चतुर्दश तथा च सुतस्तदीयः ।
रत्नानि पास्यति चतुर्दश दर्शनीयः
स्वप्नांश्चतुर्दश ददर्श च सा ततोऽपि ॥ ४४ ॥

खद्योतपोतप्रतिभाससन्निभो यस्मिन् परिस्फूर्जति दृश्यते रविः ।
विष्वक्तमःस्तोमपरासनोत्कटः कोऽपि प्रकाशः स महांस्तदाऽभवत्॥४५
जगत्त्रयोच्छ्वासविधानलालसः क्षणस्तदा सौख्यमयो बभूव सः ।
सुधामयो नाम यथा सुधारुचिर्यथैव विज्ञानमयोऽयमङ्गवान् ॥ ४६ ॥

देवी सोत्थाय तल्पात् प्रमुदितहृदया मन्दमन्दं चलन्ती

गत्वा राज्ञः समीपं धृतकुसुमफला स्वप्नजातं जगाद ।
सोऽप्यूचे देवि ! पुत्रस्तव किल भविताऽसाम्यरूपः प्रकृत्या
श्रुत्वैवं तोषपूर्णा समुचितशकुनग्रन्थिमेषा बबन्ध ॥ ४७ ॥

विबुध्य विबुधेश्वरा अवधिरूपविज्ञानतः
स्वविष्टरविकम्पनप्रकृतिकारणादात्मनः ।
प्रभोश्च्यवनमादरात् समुपगत्य सर्वे तदा
दुरन्तदुरितक्षयप्रवणमेव चक्रुः स्तवम् ॥ ४८ ॥

अनुत्तरविमानकादपि विभो ! महीमण्डलं
समुन्नतमनुत्तरं त्वदधिवासतो मन्महे ।
तवात्र कथमन्यथाऽवतरणं यतः संभवेद्
दरिद्रसदने किमु द्विरदराजसंभावना ? ॥ ४९ ॥

मतिप्रमुखचित्त्रयीत्रिपथगातुषाराचल-
प्रभ ! त्रिभुवनश्रियः कुलबलोपचारप्रियः ।
मनोभवमहोरगोपशमवैनतेयस्थिते !
प्रकाशितसदागमव्यवहृते ! चिरं तज्जय ॥ ५० ॥

इति जिनपतिं नत्वा नुत्वा जिनस्य च मातरं
प्रमदनिचयप्रोल्लासैकप्रयोगनिबन्धनम् ।
दिविषदधिपा यात्रां नन्दीश्वरे विरचय्य च
प्रकृतमहिम स्वं स्वं धामाऽगमन् महितर्द्धयः ॥ ५१ ॥

बुधैः सुपुत्रेण तिरश्च्यपि स्तुता परं किमन्याऽत्र विवेकशालिनी ।
क्षमाभरं धारयता सुदुर्वहं न कच्छपी सा किल कच्छपेन किम् ?॥५२॥

अहं समालोक्य जिनेन्द्रमातरं स्वमण्डलं पावयिताऽस्मि निर्भरम् ।
इतीव पूर्वाचलसानुमुन्नतं रविः समारोहदनन्तरागभृत् ॥ ५३ ॥

परिवृढमिमं गर्भस्थानं विचिन्त्य विचेष्टितैः
प्रमदकलिता द्यौरेषा दिग्वधूभिरनुद्रुता ।
उदयविसरत्सूर्योस्रालीकुसुम्भमहाम्बरा
विहगविरुतव्याजेनोच्चैःस्वरा किल गायति ॥ ५४ ॥

प्रातःकृत्यमसौ विधाय विधिवच्छ्रीविश्वसेनो नृपः
सामन्तैः सचिवैः सहातिविनतैरध्यास्य सिंहासनम् ।

जानन्निन्द्रसमागमादपि जिनं गर्भावतीर्णं प्रिया–
प्रीत्यै स्वप्नविचारशास्त्रचतुरानष्टौ समाजूहवत् ॥ ५५ ॥
आयाता विनिवेशितेष्वपि पुरा भद्रासनेष्वासिता
दृष्टस्वप्नफलोदयं विनयतो राज्ञाऽनुयुक्ताः स्वयम् ।
तेऽप्यूचुर्नरदेवसिंह ! भविता ते धर्मचक्री सुत–
श्चक्रीवेति निशम्य हृष्टमनसा तेनाऽपि ते सत्कृताः ॥ ५६ ॥
रत्नस्वर्णविभूषणैर्बहुविधैर्देव्याऽपि ते पूजिता–
स्तुष्टा धाम ययुर्निजं जवनिकाऽन्तर्धानपीठश्रिताः ।
सामीप्यं समुपेत्य मानसमुदे सिंहासनादुत्थितः
स्वप्नार्थं कथितं श्रुतं च नृपतिस्तस्याः पुरो व्याकरोत् ॥५७॥
दधार सा गर्भमनन्तरं सती सतीव सौभाग्यगुणेन मानिनी ।
गुणोज्ज्वलं शुक्तिरवाप्तसंवरा महाशया मौक्तिकवद् मनोहरम् ॥ ५८ ॥
रुग्मारिप्रमुखाशिवानि शतशः पूर्वं बभूवुस्तदा
प्राणघ्नानि शरीरिणां जनपदे तस्मिन् कुरौ सर्वतः ।
तन्नाशाय जनश्चकार विविधोपायान् समग्रान् परं
शाम्यन्ति स्म न तानि तैरपि जलैरब्धेरिवौर्वाग्नयः ॥ ५९ ॥
देव्याः कुक्षिमुपागते जिनपतौ सर्वाणि तान्यक्रमात्
तत्कालं विशरारुतामुपययुर्घर्मा इवेन्दूदये ।
ईदृग् यस्य महाप्रभावविभवो गर्भावतारेऽप्यभू–
ज्जातो दर्शनमात्रतः स भविनां किं किं न कर्ता सुखम् ? ॥६०॥
प्रपद्यमानेऽभ्युदयं जिनेश्वरे महार्घतां यास्यति जातिरेकिका ।
इतीव वर्षासु विकाशमासदद् गुणप्रकर्षेण व जातिरात्मनः ॥ ६१ ॥
द्विजिह्वभावं न सहिष्यते प्रभुः पुराऽपि तन्नाशमतो विदध्महे ।
इति द्विजिह्वक्षयबद्धविभ्रमाः कलापिनः प्रावृषि नेदुरुन्महाः ॥ ६२ ॥
जडाशयानां कलुषत्वशालिनां न दर्शनं तस्य विभोर्भविष्यति ।
इतीव तन्निर्मलतां प्रकुर्वती समाययौ हंसकनादिनी शरत् ॥ ६३ ॥
महः प्रभोर्यद्यपि भावि चासमं तथाऽपि वर्ण्यं मयका सहैव तत् ।
इतीव यस्यां ववृधे स्वतेजसा रविः प्रमोदातिशयादिवात्मनः ॥ ६४ ॥
अमुष्य पश्चादपि पर्युपासनां परे करिष्यन्ति जना अहं पुनः ।

मुनीनमाऽऽगर्भमिनं मुनिर्भजे त्वितीव यस्यामुदगादगस्त्यकः ॥ ६५ ॥

(त्रिभिर्विशेषकम्)

मुखं स्वभावेन सुवर्णकेतकीदलाभमस्या अपि पाण्डुतां दधौ ।
विनापि काश्मीरविलेपनं रसैः प्रवर्धमानोत्तमगर्भसङ्गमात् ॥ ६६ ॥

इयं स्वभावादपि चारुताधिका ततोऽतिरिक्ता महिषीपदं श्रिता ।
अनेन गर्भेण न दृष्टिदूषिता भवेदिति श्याममुखौ स्तनौ तदा ॥ ६७ ॥

बभूव देव्या जठरं न पीवरं तदाऽपि गर्भे परिपुष्यति श्रियम् ।
अजिज्ञपत् तं मुखपाण्डिमा परं कपोलपर्यन्तविधूत्वरद्युतिः ॥ ६८ ॥

स्वभावतो देव्यपि मन्दगामिनी विशेषतो गर्भभरेण साऽभवत् ।
विसारिणा केवलदानवारिणा यथा महावारणराजवल्लभा ॥ ६९ ॥

जाड्यं मत्तः प्रभवति जने यत् कलङ्कं तमेव
जाने स्वस्याऽहमपि यशसां संक्षयस्यैकहेतुम् ।
मा भूद् युष्मच्चरणकमलानुग्रहात् तद् ममेति
प्राग् विज्ञप्तिं रचयितुमिवाऽथाऽऽर हेमन्तकालः ॥ ७० ॥

-मम प्रकाशेन निरर्थकेन किं जिनस्य यस्मिन् न जनिर्भविष्यति ? ।
इतीदृशं दुःखभरं श्रयद् दिनं दिने दिने यत्र दधार तुच्छताम् ॥७१॥

दिनं प्रकाशं दधतां स्वमानतो जिनस्य चाऽस्मासु भविष्यते जनिः ।
इति क्षपा यत्र दधुर्न तानवं प्रमोदमेदस्वितयेव ता नवम् ॥ ७२ ॥

जातेऽस्मिन् परमेश्वरे जिनपतावाचूलमापन्नखं
रागः पुण्यविधौ न येषु भविता ते न प्रशंसापदम् ।
इत्यादावपि संविमृश्य हृदये यं संनिधातुं जना
यस्मिन् कुङ्कुमपङ्कलेपनमिषादभ्यासमेवार्जयन् ॥ ७३ ॥

(चतुर्भिः कलापकम्)

मातुस्तीर्थपतेर्न किञ्चन मुखच्छायां दधन्तेतरा-
मेतानि प्रसभं विभोर्नयनयोः स्प्रक्ष्यन्ति कान्तिं न च ।
साम्यं नो करपल्लवेन न पदाऽप्यासादयन्ते ततो
मा भूवन्निति कोपतोऽथ शिशिरः पद्मान्यधाक्षीदयम् ॥७४॥

वृद्धाभिः स्वकुलाबलाभिरुदयत्पुत्रान्विताभिस्तत-
स्तस्याः शीलविभूषणाभिरुचिताचारोपचारप्रियः ।

भर्तृस्नेहवशंवदाभिरमलप्रज्ञाभिराबाल्यतः
सीमन्तोन्नयनं व्यदीधपदयं क्ष्मापालचूडामणिः ॥ ७५ ॥
जातिर्यत्र प्रकटयति न स्वं निलीनेव गूढं
पद्मानामप्यपचितिरभून्निःस्ववद् यत्र सत्यम् ।
माकन्दानां परिमलभरः स्मर्यते यत्र तत्र
कुन्दैरेभिर्विकसितमहो ! ही ! विचित्रैव सृष्टिः ॥ ७६ ॥
कन्दर्पस्य सदर्पकस्य जयिनः श्रीमद्वसन्तप्रभो !
त्याज्यं नैव कदाचनाऽपि सुहृदः साहाय्यमस्य त्वया ।
यस्माद् भाव्यचिराङ्गजः स बलवान् वैरीति पुंस्कोकिल-
स्येदृग्वाक्श्रवणादिवाऽथ सुरभिस्तूर्णं समाजग्मिवान् ॥ ७७ ॥
पात्राधीशस्त्रिभुवनगुरुस्तद्विमानं विमुच्य
देव्या गर्भं श्रयति वसुधामण्डलाऽऽभूषणायाः ।
पत्राणां नस्तदुपरिवृतां सत्यमाशातना स्या-
दित्यालोच्य क्षितिरुहचयाद् यत्र पत्राणि पेतुः ॥ ७८ ॥
( त्रिभिर्विशेषकम् )
कौशुम्भं वसनं च किंशुकसुमाभारच्छलाद् बिभ्रती
चञ्चच्चम्पकपुष्पकुङ्कुमघनालेपस्फुरत्पाण्डिमा ।
माकन्दप्रसवोत्पतद्बहुरजोवासा जिनं गर्भगं
रङ्गाद् यत्र वनस्थली पिकरवा गातुं समागादिव ॥ ७९ ॥
रस्य जाड्यप्रसरं पराश्रितं समाश्रयन् धाम सुदुःसहं खलु ।
थोग्रकर्मक्षयदारुणाशयः प्रवर्तयामास तपः स्वशासनम् ॥ ८० ॥
यि प्रभोर्वत्सलता विलोक्यते जनुर्यदन्यत्र ऋतौ बभूव न ।
तीव मल्लीसुमदम्भसद्यशा बभार तेजःप्रसरं तपागमः ॥ ८१ ॥
नायकं सेवकवृद्धिसंक्षयौ सदाऽनुयातः, कथमन्यथा तपे ।
र्धमाने दिननायके दिनं प्रवर्धते चापरथा न किं हिमे ? ॥ ८२ ॥
रैर्मदीयानि फलानि तत्क्षणं जिनेन्द्रजन्मस्नपनोत्सवे कृते ।
तार्थनीयानि पुरो निवेशनादितीव चूता ननृतुः स्फुरद्दलैः ॥ ८३ ॥
दुष्पूरेष्वपि दोहदेषु तरसा संपूर्यमाणेष्वरं
ज्ञायं ज्ञायमनुक्षणं नृपतिना तस्याः सखीनां मुखात् ।

वं मास्सु नवस्वितेषु दिवसैः सार्धं च सार्धाष्टमै-
ज्र्येष्ठे मास्यसिते त्रयोदशतिथौ तस्यां भरण्यां च भे ॥ ८४ ॥
उच्चेषु त्रिषु केन्द्रतामुपगतेष्वन्येषु सत्सु ग्रहे-
ष्विन्दुं माघवतीव दिक् स्म महिषी सूते मृगाङ्कं सुतम् ।
पीयूषद्युतिमण्डले मलिनिमा प्राप्यः कलङ्काङ्कुरः
संपूर्णत्वमुपेयुषि प्रतिकलं वृद्ध्या न तस्मिन् परम् ॥ ८५ ॥
( युग्मम् )

वपुर्यथाऽऽभ्यन्तरदोषलक्षणैर्मलैर्विमुक्तं परमेशितुस्तथा ।
तदाऽवदातं बहिरप्यभूद् मलैर्जरायुदोषप्रमुखैर्विनाकृतम् ॥ ८६ ॥
तदा सुखं दुर्गतिवासिनामपि क्षणं महानन्दविवर्णिकाऽभवत् ।
समुल्ललास त्रिजगत्प्रकाशकस्तदा प्रकाशः समभानुभूरिव ॥ ८७ ॥
दिशां दशानामपि संबभूव यः परः प्रकाशः स बुधैर्वितार्कितः ।
न किंचिदन्यत् समवायिकारणं न्यवीविदत् स्वस्य जनुर्विनाऽर्हतः॥८८॥
देवि स्वयं दुन्दुभयोऽनदंस्तमां तदा प्रणुन्ना इव पुण्यकर्मणा ।
यथाऽनुकूलाः पवना ववुः परं निजां ब्रुवाणा इव कामरूपताम् ॥८९॥
विज्ञायाऽऽसनकम्पनादवधिना तीर्थेशितुः षोडश-
स्योत्पत्तिं वसुधातलादथ जिनान्ते दिक्कुमार्यस्तदा ।
अष्टावेत्य जिनं जिनस्य जननीं चानम्य भोगङ्करा-
मुख्या निर्भयमित्युदीर्य च वयं जन्मोत्सवायाऽऽगताः ॥९०॥
क्वापि स्थास्यति नाऽऽन्तरं किल रजो जातेऽर्हतीतीव ता
यावद् योजनमाहृतेन मरुता संहृत्य भूमौ रजः ।
व्याख्यानावनिमानमेव जगतां प्रख्यातुमेवाऽऽदृता
गायन्त्यो धवलान् जिनेश्वरगुणांस्तस्थुः समन्ताज्जिनम्॥९१॥
अष्टावेत्योर्ध्वलोकादथ विधिनियता मङ्क्षु मेघङ्कराद्या
दिक्कन्या भक्तिभङ्गया जिनपतिजननीं चापि नत्वा च नुत्वा ।
स्वाऽऽयाने हेतुमुक्त्वा विकृतजलधराः पापमालिन्यभाजो
मेदिन्याः पावनायै ददुरधिकतरं गन्धवार्भिश्छटास्ताः ॥९२॥
वृष्ट्वा पुष्पाणि यावत् सुकृतभृतहृदस्ताः स्थितास्तावदेवा-
ऽष्टाऽन्याः पौरस्त्यपूर्वादिह लघुरुचकाद् दिक्कुमार्यः समीयुः ।

हृष्टा नन्दोत्तराद्या जिनजिनजननीपादयुग्मं प्रणम्य
सूनोस्ते चात्र रूपं परमिति सुमता दर्पणान् दर्शयन्त्यः ॥९३॥
इमा गायन्त्योऽस्थुर्जिनपतिगुणान् प्राच्यककुभि
स्वयं दिक्कन्योऽष्टावथ सुमतयोऽपाच्यरुचकात् ।
समाहारामुख्याः करसजलभृङ्गारसुभगाः
प्रणम्रास्तद्वत् ता यमककुभि तस्थुः प्रमुदिताः ॥ ९४ ॥
दिक्कन्योऽथ पराः प्रतीच्यरुचकादष्टौ समागुर्मुदे-
लादेवीप्रमुखा महाव्यजनवद्धस्ताः प्रशस्ताऽऽशयाः ।
नत्वा देव्यचिरायुतं जिनपतिं ताः सिद्धिसम्प्राप्तये
कुर्वाणा गुणगानमन्तिकगतास्तस्थुः प्रतीच्यां दिशि ॥ ९५ ॥
अष्टोदग्रुचकात् समेयुरथ दिक्कन्यस्तथाऽलम्बुशा-
मुख्याश्चामरराजिपाणिकमलाः साम्राज्यजल्पोन्मुखाः ।
एतास्तीर्थकरं विनम्य मनसा तीर्थेशमात्रा समं
कौबेर्यां ककुभि स्थिता जिनगुणान् गायन्त्य एव स्थिरम्॥९६॥
दिक्कन्या अपरा विदिग्रुचकतोऽप्येयुश्चतस्रो जग-
द्दीपं तीर्थकरं वदन्त्य इव ता दीपं दधानाः करे ।
भक्त्या तीर्थकरं प्रणम्य कलितं मात्रा सुतेरामुखा
देव्यो गीतकलाविनिर्जितसुधाः स्थैर्यं विदिक्षु श्रिताः ॥९७॥
रूपाद्या अपि मध्यमैकरुचकादेताश्चतस्रोऽथ ता
वन्दित्वा चतुरङ्गुलस्थितिपरं छित्त्वैव नालं विभोः ।
भूमौ तद्विनिखाय रत्ननिचयैरापूर्य तत्रोच्चकै-
र्दूर्वापीठमरोपयन् रविहयस्पर्धाविवृद्धादरम् ॥ ९८ ॥
याम्यां प्राच्यामुदीच्यामपि ककुभि च ता मूलसौधादकार्षुः
सम्यग् रम्भानिकेतत्रितयमपि चतुःशालसिंहासनभ्राट् ।
अभ्यङ्गोद्वर्तने ता यमककुभि चतुःशालमध्ये निषाद्य
सत्तैलोद्वर्तनाभ्यां जिनजिनजननीगात्रयोस्तन्वते स्म ॥ ९९ ॥
चतुःशाले प्राच्ये मणिकनकसिंहासनजुषौ
विधाप्य स्वैरं तावपि सवनचार्चिक्यसुभगौ ।
ततो दिव्यैर्वस्त्रैर्व्यतनिषत ता मण्डिततनू

न तादृश्यः क्वापि क्रममपनयन्तीह यदि वा ॥ १०० ॥

नीत्वा ता द्वितयं तदुत्तरचतुःशाले विघृष्याऽरणे-
वंह्नौ पातितदीपिते लघुहिमक्षोणीधरादाहृतैः ।
गीर्वाणैरभियोगिभिः सुरभिभिर्दिव्यैर्हुतैश्चन्दनै
रक्षापोट्टलिकां विधाय विधिवत् पाणौ बबन्धुर्द्वयोः ॥ १०१ ॥

हरित्कुमारीभिरबन्धि रक्षिका जिनस्य मातुश्च कराम्बुजेऽपि यत् ।
तदत्र जीतं भजते निदानतां न तस्य रक्षाऽखिललोकरक्षितुः ॥१०२॥

धराधरायुर्भव तीर्थनायकेत्युदीर्य कर्णद्वितयीतटे प्रभोः ।
इमाः स्वयं प्रस्तरगोलकद्वयं विशङ्कमास्फालितवत्य उद्धतम् ॥ १०३ ॥

अरिष्टमन्तः स्म नयन्ति ता जिनं समं जनन्या जनितप्रमोदया ।
अथैकपल्यङ्कगतौ विधाय तौ गुणोत्करोद्गानपराः स्थितिं श्रिताः ॥१०४॥

घण्टावादनपीठकम्पनमुखैश्चिह्नैर्जिनेशो जनिं
प्रज्ञातावधिना विबुध्य मुदितः सौधर्मभर्ताऽथ सः ।
नाट्यालोकमपास्य संभ्रमवशादुत्थाय सिंहासनात्
सप्ताष्टानि पदान्यभीत्य विदुरस्तुष्टाव तुष्टः प्रभुम् ॥ १०५ ॥

विमानमथ पालकं समधिरुह्य शक्रोऽभित-
श्चतुष्कगुणिताऽष्टकप्रमविमानलक्षैर्वृतः ।
अतीत्य तरसा बहून् विविधवारिधिद्वीपका-
नवाप परमेशितुर्झगिति सूतिकामन्दिरम् ॥ १०६ ॥

प्रदक्षिणपुरःसरं जिनपतिं जनन्या समं
विनम्य परभक्तितः प्रतिकृतिं विमुच्य प्रभोः ।
समं परिकरेण तां जिनपतेः पुनर्मातरं
निमीलितविलोचनां प्रविरचय्य निद्राभरैः ॥ १०७ ॥

जिनस्य सर्वोऽपि तनोति पूजनं स्वशक्तिमानेन जनो जगत्त्रये ।
इति स्वचित्तेन विचिन्त्य वासवश्चकार शक्त्या किल रूपपञ्चकम्॥१०८॥

( युग्मम् )

सौरभ्योत्कटपाणिसंपुटगतं चक्रेऽभ्यनुज्ञाग्रहा-
देकेन प्रभुमातपत्रमधृत स्वाराट् तथैकेन च ।
द्वाभ्यामेव च चामरे पविमहो ! अन्येन धृत्वा ततः

स्वर्णाद्रावतिपाण्डुकम्बलशिलापीठं समासेदिवान् ॥ १०९ ॥

निजाङ्कपर्यङ्कविराजिनं जिनं वितत्य सौधर्मपतिः प्रमोदवान् ।
स्वदारपूर्वाभिमुखः स्वगौरवं प्रदर्शयंस्तत्र निषेदिवानयम् ॥ ११० ॥

द्वितीयकल्पाधिपतिस्त्रिशूलभृच्चतुर्गुणैः सप्तभिरावृतोऽभितः ।
विमानलक्षैर्वृषवाहनस्तदा समाययौ पुष्पकयानमास्थितः ॥ १११ ॥

विमानलक्षै रविसंमितैर्वृतः सनत्कुमाराभिधकल्पवासवः ।
सुवर्णशैले सुमनोविमानगः समागमत् तत्र पवित्रिताशयः ॥ ११२ ॥

श्रीवत्साख्यविमानगः सुरगिरौ माहेन्द्रभर्ताऽऽययौ
लक्षैरष्टभिरावृतोऽथ विलसद्वैमानिकानां जवात् ।
नन्द्यावर्तविमानगोऽप्युपजिनं ब्रह्माधिपोऽथागमत्
स्वानन्देन विमानिनामुपजिनं लक्षैश्चतुर्भिः समम् ॥ ११३ ॥

लक्षार्धेन विमानिनां सममरं श्रीलान्तकाधीश्वरः
श्रित्वा कामगवं विमानमसमं स्वर्णाद्रिमेवागमत् ।
विंशत्या द्विगुणीकृतैर्दिविषदां युक्तः सहस्रैः श्रितो
यानं प्रीतिगमं स सप्तमदिवाधीशः सुरेन्द्रोऽपि च ॥ ११४ ॥

विमानिनां षड्भिरथो सहस्रकैः समं सहस्रारसुपर्वनायकः ।
विमानमास्थाय मनोरमं रयात् समाययौ स्वर्णमहीधरे मुदा ॥११५॥

अथाऽऽनतप्राणतकल्पनायकः शतैश्चतुर्भिः सहितो विमानिनाम् ।
श्रितो यथार्थं विमलं विमानकं सुमेरुशैलं रभसात् समासदत् ॥११६॥

शतैस्त्रिभिर्नाकसदां परावृतः प्रभाभृतामाऽऽरणकाच्युतप्रभुः ।
स सर्वतोभद्रविमानमाश्रितः समागमत् स्वर्णगिरौ मुदाऽञ्चितः ॥११७॥

अन्ये विंशतिरत्र मङ्क्षु भुवनाधीशाः समायासिषु--
र्द्वात्रिंशत् परमार्धिभारकलितास्ते व्यन्तराधीश्वराः ।
सूर्याचन्द्रमसौ द्विरुक्तमहसौ ज्योतिष्कनाथौ मुदे-
त्येवं संमिलिताश्च ते किल चतुःषष्टिः सुराधीश्वराः ॥ ११८ ॥

अथाच्युतेन्द्रस्य निदेशमात्रतः सुरा विचक्रुश्च निदेशकारिणः ।
सहस्रमष्टोत्तरमष्टधा तदा करीरकाणां[1] रजतादिवस्तुभिः ॥ ११९ ॥

क्षीराम्भोनिधिपुष्कराम्बुधिभवाः पद्मह्रदाद् भारत-

---

१ कलशानाम् ।

क्षेत्रैरावतवर्षतीर्थनिवहात् पाथोजपाथोमृदः ।
सिद्धार्थांश्च महौषधीश्च सहसा क्षुद्राद्धिमाद्रेस्तथा
ते स्नात्राय सुमेरुकाननचयात् पुष्पाणि भक्त्याऽऽनयन् १२०

अथ व्यमुञ्चत् कुसुमाञ्जलिं पुरा सुरैः समं द्वादशकल्पवासवः ।
सुमैः स तैरेव सरोजमिश्रितैः प्रदग्धकृष्णागुरुधूपधूपितैः ॥ १२१ ॥

विस्फूर्जन्मुखपद्मकोशकलिताः संवीतदिव्यांशुकाः
पुष्पाभ्यर्चिततत्तदग्र्यकलशान् धृत्वा कराब्जेषु ते ।
सम्यग् दैवतदेवतासु सुतरां सर्वासु तूर्यत्रिक-
व्यग्रासु प्रयतेऽथ किन्नरगणे गानं वितन्वत्यपि ॥ १२२ ॥

तीर्थेशस्य गुणान् पठत्सु दिविषद्वैतालिकेषूच्चकै-
स्तीर्थाधीश ! जयेति चारणगणेषूच्चारयत्सु स्तुतिम् ।
कान्त्या शारदशर्वरीपरिवृढज्योत्स्ना जयन्तस्ततः
शक्रा अच्युतवासवप्रभृतयः स्नात्रं जिनेशो व्यधुः ॥ १२३ ॥
( युग्मम् )

ये पुष्पस्तबकन्ति मूर्धनि मुखे कर्पूरपूरन्ति ये
कण्ठे माणवकन्ति ये च हृदये श्रीखण्डलेपन्ति ये ।
सर्वाङ्गेषु यशश्चयन्ति च जयश्रीणां कटाक्षन्ति ये
वार्वाहाः कलशेभ्य एव पतिताः क्षीराम्बुधेस्ते प्रभोः ॥१२४॥

विभौ त्रिषष्ट्या स्नपिते सुरेश्वरैः परस्परालम्बितशुद्धसंवरैः ।
तदद्भुतं निर्मलतामवाप्य यद् द्युवासिभिर्निर्वृतिरापि तैस्तदा ॥१२५॥

वपुश्च संमार्ज्य सुगन्धिवाससा विलिप्य गोशीर्षकदिव्यचन्दनैः ।
व्यभूषि पुष्पैरपि तैर्जिनस्य यत् तदद्भुतं यत् फलमापि तत्क्षणम् १२६

विधाय सम्यक् स्नपनार्चने ततः सुराधिनाथा जिननाथमानमन् ।
जगत्त्रयीनायकभावमग्रतो विभोर्ब्रुवाणा इव शैशवेऽपि ते ॥ १२७ ॥

सौधर्मप्रभुवद् विधाय तरसेशानप्रभुः पञ्चकं
रूपाणामकृतैककेन स जिनं स्वोत्सङ्गपर्यङ्कगम् ।
अन्येनातपवारणं विधृतवान् द्वाभ्यां सिते चामरे
शूलं प्रोल्ललयन् दधार पुरतोऽप्यन्येन मूलं श्रियाम् ॥ १२८ ॥

---

१ हारायन्ते । २ जलप्रवाहाः ।

स्फटिकवृषभान् सुत्रामाऽथ व्यधत्त चतुर्मितान्
सुकृतदलिकाद् मूर्ति प्राप्तानिवेशदिदृक्षया ।
सुरशिखरिणश्छाया येषु स्वयं प्रतिबिम्बिता
कनकमयतामेवाऽऽचष्टाऽक्षवृत्तिविबाधिनी ॥ १२९ ॥

तेषामुन्नतशृङ्गभागनिरयत्पीयूषविक्षेपका-
म्भोधाराभिरमर्त्यराड् व्यरचयत् स्नात्रं जिनस्याऽष्टभिः ।
अष्टानां ककुभां ध्रुवं परिवृढैः स्वच्छाम्बुधारामिषात्
संप्राप्तानि तदा यशांस्युपहृतान्येतानि मौलौ विभोः ॥१३०॥

प्रक्षिप्तं सुरनायकैः स्वशिरसि स्नानाम्बु कैश्चित् प्रभो-
रन्यैस्तद्विनिपातुकं नयनयोराधायि यत्नादपि ।
कैश्चिच्चन्दनपङ्कवद् विनिहितः स स्नात्रपङ्कोऽलिके
धन्यैरेव जनुः सहस्रकलुषोच्छेद्याऽऽप्यते तत्परम् ॥ १३१ ॥

सौधर्मेन्द्रस्त्रिभुवनगुरोर्वर्ष्म संमार्ज्य गन्ध-
काषाय्याऽथो मलयजरसैर्भक्तिपूर्वं विलिप्य ।
चक्रे पूजामवधिनियतां विश्रुतामष्टभेदां
बुद्धिस्तस्य स्खलति किमहो ! तादृशे वाऽपि कार्ये ?॥ १३२ ॥

गन्धैश्चन्दनचन्द्रकुङ्कुममुखैर्धूपैश्च कृष्णागुरु-
प्रोद्भूतैर्गरुडाक्षतैरविकलैः पुष्पैश्च नानाविधैः ।
दीपैः स्नेहदशासमृद्धिकलितैर्वर्यैर्विचित्रैः फलै-
र्नैवेद्यैश्च जलैरपीति सुकृती पूजां व्यधादष्टधा ॥ १३३ ॥

पुरन्दरोऽथाद्भुतरत्नपट्टकेऽष्टमङ्गलीं तन्दुलकैर्बभार च ।
दुरन्तकर्माष्टकभेदहेतवे प्रसिद्धसिद्ध्यष्टकलब्धये तथा ॥ १३४ ॥

आदर्शः परिदृश्य एव विदुषां भद्रासनं भद्रकृद्
याथार्थ्येन च वर्धमान उदितः श्रीपूर्णकुम्भस्तथा ।
वर्ण्यं मत्स्ययुगं समुज्झितजडं श्रीवत्सकस्वस्तिकौ
नन्द्यावर्त इतीरिता मुनिवरैः सा ज्ञानरत्नाकरैः ॥ १३५ ॥

ततोऽपसृत्यामरनायको मनाक् प्रपञ्च्य चाऽऽरात्रिकमुच्छलच्छिखम् ।
सुमङ्गलं मङ्गलदीपकं विभोः सहर्षमुत्तारयति स्म भावतः ॥ १३६ ॥
प्रणम्य गीर्वाणगणाग्रणीस्ततः समं स गीर्वाणगणेन तत्क्षणम् ।

प्रचक्रमे स्तोतुमनन्तभक्तिभाग् जिनेश्वरं चित्त्रयभास्वरप्रभम् ॥१३७॥
जिनपते ! स्तवनं विदधे तव प्रतिपदां पदमाप्तुमनश्वरम् ।
उपधिभावमपास्य निषेविताः प्रददते प्रभवो हि समीहितम् ॥१३८॥
अनुपमा तव मूर्तिरियं मया ध्रुवममैक्षि विभो ! न भवान्तरे ।
अपरथा न ममाऽपि भवान्तरं कथमपि प्रभवेद् भवतो यथा ॥१३९॥
भवशतार्जितकल्मषसन्ततिर्भवदवेक्षणतो जिन ! नश्यति ।
शममुपैति दवानलसंहतिर्नवबलाहकवर्षणतो यथा ॥ १४० ॥
अमृतदीधितिदीधितिसन्निभैस्तव गुणैरसमानतया श्रुतैः ।
सकललोकनिकामविसृत्वरैः किमु कणादमतं न हतं प्रभोः ? ॥१४१॥
द्रुतसुवर्णरसेन तवाङ्गकं ध्रुवमिदं घटितं शुभकर्मणा ।
विकचचम्पकपुष्परसेन वा विमलपीतसुगन्धगुणास्ततः ॥ १४२ ॥
जिन ! विमानमनुत्तरसंज्ञकं न सुषमां दधते भवतो विना ।
गृहमणौ भवनादपसारिते स्फुरति किं तिमिरं न निरर्गलम् ?॥१४३॥
हृदयवासमलंकुरु मे विभो ! परिभवन्तितमां न यथैव माम् ।
कथमपि प्रतिघप्रमुखा द्विषस्तव पराक्रमकुण्ठितविक्रमाः ॥ १४४ ॥
कमपि कश्चन चेद् विनिषेवते न खलु सोऽपि कदाचन सीदति ।
परमहं भुवनत्रितयप्रभो ! न सुखमेमि कथं तव सेवकः ?॥ १४५ ॥
समधिगम्य परं तव दर्शनं निखिलनास्तिकपक्षविघातनात् ।
अनुभवागमसाधनबद्धधीर्विबुधराज्यमिदं चरितार्थये ॥ १४६ ॥
सुकृतवासनया तव सेवनं विरचयन् न कथं भववासनः ? ।
भवति नैव कुकर्मविघातने तदहमारचयामि जिनेश्वर !॥ १४७ ॥
स्तवं वितत्येति सुपर्वनायको जिनेशमीशानवृषाङ्कतस्ततः ।
करे समादाय स पञ्चरूपभागरिष्टवेश्मान्तरमाशु जग्मिवान् ॥१४८॥

हृत्वाऽपस्वापिनीं तां प्रतिकृतिमपि तामार्हतीमार्हतो द्राग्
मुक्त्वा मातुः समीपे जिनपतिमुपधौ कुण्डले दिव्यवस्त्रे ।
न्यस्योल्लोचे च सारं विविधमणिमयं कन्दुकं लम्बमानं
यस्मिन् दृष्टिर्विनोदं भजति भगवतस्तस्य च स्याद् न दृष्टिः ॥१४९॥

जिनेश्वराः स्तन्यपिबा भवन्ति न क्रमं विजानन्निति नाकनायकः ।
प्रभोः कराङ्गुष्ठतलेऽतिनिर्मले स्वभाक्तिशक्त्या समचारयत् सुधाम् ॥१५०॥
(युग्मम्)

कोटीः षोडश रुक्मणां द्विगुणिता रूप्याणि रत्नान्यपि
प्रत्येकं च पृथक् पृथक् पृथुमतिर्नन्दासनानि क्रमात् ।
सद्भद्रासनयुग्ज्यमुञ्चदसमं नेपथ्यवस्त्रादिकं
स्वर्नाथस्य निदेशतो धनपतिः श्रीविश्वसेनौकसि ॥ १५१ ॥
अर्हन्मातुरुतार्हतोऽशुभमहो ! यः किञ्चन ध्यास्यति
भेत्स्यत्यर्जकमञ्जरीव नियतं तन्मस्तकं सप्तधा ।
एवं तारतरस्वराः खलु सुरा आघोषयामासुराः !
शक्रादेशनिरूपणप्रणयिनो देवेषु सर्वेष्वपि ॥ १५२ ॥
धात्रीकर्मणि शर्मणि त्रिदशराड् मुक्त्वाऽप्सरःपञ्चकं
स्नानाभ्यञ्जनपालनापटु गतो द्वीपेऽथ नन्दीश्वरे ।
तत्राष्टाह्महोत्सवं विधिपराः संपाद्य राकाद्युतः
स्वं स्वं धाम मुदाऽञ्चिता ययुरथो सर्वे सुपर्वेश्वराः ॥१५३॥

अथ प्रभाते विकसत्प्रभाभरे व्यपेतनिद्रा समवैक्षताऽङ्गजम् ।
अरिष्टदीपस्य महांसि तेजसा विनिर्जयन्तं वसुधेशवल्लभा ॥ १५४ ॥
स सौविदल्लीभिरुपेत्य वर्धितः सुतप्रसूत्या वसुधासुधाकरः ।
ददद् वदान्यः परितुष्टमानसो न योग्यमेतद् भवतीति वेद न ॥१५५॥
सुतप्रभावं विनिशम्य नागरैः श्रुतप्रभावं पृथिवीपतेरथ ।
विनाऽपि निर्देशमकारि सोत्सवं विचित्रमञ्चैरपि तच्च पत्तनम् ॥१५६॥
जिनेन्द्रजन्मोत्सवतोषपूरितं पुरं तदानीमपि हस्तिनापुरम् ।
मरुत्समुद्धूतविलोलकेतनैर्मरुत्वतस्तर्जयति स्म पत्तनम् ॥ १५७ ॥

मुक्तास्वस्तिकसंचयः प्रतिगृहं रेजेतरां निर्मितः
सर्वाभिः पुरसुन्दरीभिरुदयद्धृत्संमदाभिस्तदा ।
भव्यानां सुकृतप्रसाधनविधौ न्यस्ताशयानां ध्रुवं
जाते तीर्थकरेऽवदातयशसामुप्तानि बीजानि व ॥ १५८ ॥

त्वमेव नाथाऽक्षतपात्रमेककः परं गुणानामपि संपदामपि ।
इति ब्रुवाणा इव नागराङ्गनाः समीयुरत्राऽक्षतपात्रसंयुताः ॥ १५९ ॥
विभो ! विधातासि समानि मातृकामुखानि शास्त्राणि जिनेति पण्डिताः।
तदा पठच्छात्रकुलैरलंकृता अदीदृशन्नेत्य च सूतमातृकाः ॥ १६० ॥

१ इन्द्रस्य ।

दिनोदयेऽस्मै प्रभवे दिनेशिता दिने तृतीये जनकेन दर्शितः ।
प्रभाकरत्वेन समानयोरपि द्वयोर्विशेषं महसोः परीक्षितुम् ॥ १६१ ॥
अदर्शि तत्रैव दिने दिनात्यये सतस्य पित्राऽस्य निशीथिनीपतिः ।
विलोकनादेव तवेश ! केवलं कलङ्किता दूषणमस्य यात्विति ॥ १६२ ॥

षष्ठीजागरणोत्सवं व्यरचयत् श्रीविश्वसेनो नृपः
स्वर्णालङ्कृतिपट्टसूत्रवसनैः सर्वांश्च संतोषयन् ।
गेहे यस्य समुद्गतो जिनपतिः कल्पद्रुमो जङ्गमः
को वा विस्मयमातनोति सुमतिर्दानेन तस्याऽधिकम् ?॥१६३॥

गर्भस्थेऽप्यशिवानि शान्तिमगमन् येनाऽत्र सर्वाण्यपि
प्रोचे तज्जनकेन सोऽपि भगवान् श्रीशान्तिरित्याख्यया ।
संबोध्यैव महाजनं निजगिरा नाम्नो विधानोत्सुकं
प्रत्याय्य स्वसुवासिनीजनमपि प्राप्ते दिने द्वादशे ॥ १६४ ॥

पिबन् निजाङ्गुष्ठमनारतं प्रभुर्बिडौजसा संक्रमितामितामृतम् ।
अनेकधात्रीभिरनेकखेलनैः प्रपाल्यमानो ववृधेतमां क्रमात् ॥ १६५ ॥
गुणैः प्रवृद्धोऽपि सुधांशुनिर्मलैः स बाललीलाः कलयन् व्यराजत ।
विचेष्टितं चित्त्रयभासिनोऽपि यद् विभासते तद् न परस्य वा कथम् ?॥

उत्तानो मणिपालने मुकुरवच्छेते कुमारः स्म तद्
यत् प्राप्नोति निरन्तरं किल पुमानुत्तानशायी बलम् ।
यद्वाऽऽवेदयतीव दुर्गतिरधः क्षिप्ता मया मन्मुख-
प्रेक्षाकाङ्क्षणदक्षिणैकमनसां पुंसां स पुण्यात्मनाम् ॥ १६७ ॥

दिनाधिनाथोऽपि करप्रसारणं समाचरंस्त्रस्यति सैंहिकेयतः ।
इतीव विश्वत्रितयाभयप्रदः प्रबद्धमुष्टिः समजायत प्रभुः ॥ १६८ ॥
कदापि तिष्ठन् हृदयाऽऽस्यमस्तके पितुर्जनन्याश्च परिच्छदस्य च ।
विभूषणोद्भासकदेहकान्तिभृद् भवेऽपि कैवल्यसुखं ततान सः ॥१६९॥
कदाचिदाभाषित एव नोत्तरं ददावकिञ्चिज्ज्ञ इव स्थितः प्रभुः ।
कदाचन प्रौढविदग्धवद् गिरः प्रवर्तयामास सभाऽनुरञ्जिकाः ॥१७०॥
विभोः समासाद्य पदं वसुन्धरा न रत्नगर्भत्वमनर्थकं दधौ ।
त्रिविष्टपस्त्रीसुभगत्वगर्वहृद् बभूव सातेन च तेन किन्तु सा ॥१७१॥
व्यलोकि लोकैः किल काकपक्षभृद् यदा तदाऽप्युच्छ्वसितं स्वचेतसा ।

प्रभुः स च स्तूयत एव यः समो मरालपक्षेऽपि च काकपक्षके ॥१७२॥
यदेव यत् क्रीडनमैहत प्रभुः सुरेन्द्रशिष्टया त्रिदशैः समर्पि तत् ।
विचित्ररूपैरनिशं सुरव्रजो मनोऽनुरूपेण विभोर्विचेष्टते ॥ १७३ ॥

इति क्रीडाः कुर्वंस्त्रिदशनिचयैः सार्धमुचिताः
पितॄणामानन्दं प्रतिसमयमेवोपजनयन् ।
क्रमाच्चत्वारिंशद्धनुरनुगताङ्गप्रमितिमा-
नवापत् तारुण्यं त्रिभुवनगुरुर्मेरुमहिमा ॥ १७४ ॥

अपारसिन्दूरपरागपूरिते जगत्त्रयस्याऽपि रमा स्वमूर्धनि ।
न्यधत्त पादद्वितयं यदीशितू रसात् तदा ताम्रतलं बभूव तत् ॥१७५॥
प्रणम्रगीर्वाणगणाग्रणीशिरोमणीमणीघर्षणतोऽरुणा नखाः ।
विभोर्दधन्ते स्म पदोर्दशाऽमला दिशां दशानामपि दर्पणश्रियम् ॥१७६॥

अङ्गुल्यो विबभुर्मृणालमृदुला नेतुर्दशांह्र्योर्द्वयोः
कल्पाधीशमरुत्वतां युगपदाऽऽनन्तुं समासेदुषाम् ।
संमानप्रतिपत्तये समतया संवाहनाय ध्रुवं
क्लृप्ता इत्यपि तर्कयामि महतां सर्वत्र साम्यं यतः ॥ १७७ ॥

प्रमादभारेण भवाम्बुधौ पतद्गृहस्थनिर्ग्रन्थजनद्वयस्य सत् ।
अजस्रमालम्बनमेव तत्परं पदाम्बुजद्वन्द्वमभूज्जिनेशितुः ॥ १७८ ॥
प्रकाशभावं कलयिष्यति प्रभोरहो! चतुर्धा समुदायसन्ततिः ।
इतीव तद्गुल्फचतुष्टयं स्वयं निगूढभावं बिभराम्बभूव च ॥ १७९ ॥
अभूव भूवल्लभवन्द्यसत्पदाऽऽश्रयौ स्त्रियावप्यतिसारसारतः ।
इतीव जङ्घे पृथुले जिनेशितुः शुभे सुवृत्ते सुभगे बभूवतुः ॥ १८० ॥
भुजिक्रियाऽनन्तरमेव नौ स्पृशन् प्रियं समासादयते न चान्यथा ।
इतीव गुप्ते स्वसमाधिमास्थिते जिनस्य भातः स्म सदैव जानुनी ॥१८१॥

रम्भास्तम्भा न हि जिनपतेः साम्यमूर्वोः श्रयन्ते
संसाराब्धेस्तरणकरणव्यापृतस्य स्वतोऽपि ।
निश्चैतन्यात् सुकृतविहितौ विस्फुरच्छीतकत्वाद्
निःसारत्वात् परिमितफलार्थप्रभूतित्ववृत्तेः ॥ १८२ ॥

अहं कलत्रं सहचारि सर्वदा यथा कलत्राण्यपराणि नो तथा ।
इति स्वसंबद्धमहाभिमानतः प्रभोः कलत्रं पृथुतामगाहत ॥ १८३ ॥

गुणाश्रयं नौमि न पूर्वकायकं कथं कथं वोत्तरकायकं तथा ?।
यथार्थवादव्ययचिन्तया प्रभोरितीव मध्यः कृशतां समाश्रयत् ॥१८४॥
अपायि लावण्यरसो वधूजनैर्न नाभिकूपस्थित एव यैः प्रभोः ।
अपायि तेषां न यदङ्गतृष्णयोचितं तदेवाद्भुतमन्यथा परम् ॥ १८५ ॥
इमानि रोमाणि न भर्तुरङ्कके विभान्ति किं नाम नु संविदङ्कुराः ।
कषायसंवासितमातृमानसप्रसङ्गतः श्यामलकान्तिभागिनः ?॥१८६॥
विशालवक्षःस्थलकैतवस्फुरत्कपाटविन्यासनसंनिबन्धनात् ।
सनातनं वित्तिरमानिकेतनं जिनाधिनाथस्य मयाऽनुमीयते ॥ १८७ ॥
अगण्यकारुण्यरसौघसंभृते विवेकविभ्राजितहंससंश्रिते ।
समुन्नतेऽस्मिन् जिनहृत्सरोवरे कराक्षिवक्त्राम्बुरुहाणि रेजिरे ॥१८८॥
विजित्य कन्दर्पमदर्पकं विभुः स्वरूपलक्ष्म्यैव यमग्रहीज्झषम् ।
स एव सामुद्रकशास्त्रकोविदैः करे समग्रैरपि वीक्षितो जनैः ॥ १८९ ॥
प्रभोर्भुजाभ्यां विजितानि लीलया ध्रुवं मृणालानि न तानि चान्यथा ।
निलीय मन्दाक्षभरादिवानिशं जलाशयान्तःस्थितिमेव चक्रिरे॥ १९० ॥

आस्यं पीयूषसिन्धुः सुवचनममृतं मौक्तिकानि द्विजाली
बिम्बाभौष्ठप्रवालव्रततिकिशलयौ श्मश्रु तालीवनानि ।
शुण्डादण्डानुकारा शमसलिलगजस्यैव नासा विराज-
च्चक्षुर्वीचीप्रपञ्चो जयति जिनपतेर्हास्यडिण्डीरपिण्डः ॥१९१॥

समग्रजैवातृकगोत्रमण्डले जिनस्य जाने मुखचन्द्रमुद्गतम् ।
अवाप्तसाम्राज्यपदं, किमन्यथा कपोलचन्द्रौ कुरुतोऽस्य सेवनम्?॥१९२॥
यदर्धचन्द्रेण ललाटपट्टकं ससर्ज धाता जिनचक्रवर्तिनः ।
कदापि तेनैव न पूर्णमण्डलः शशी समालोक्यत एव चैषकः ॥ १९३ ॥

श्रीवत्सः पुरुषोत्तमत्वमुरसि स्थास्नुः समावेदय-
त्याज्ञामात्रवशीकृताखिलजगत् श्रीशान्तिनाथप्रभोः ।
उष्णीषोऽप्युपरिस्थितश्च शिरसो देदीप्यमानः श्रिया
पुण्यानामुदयेन किं न महतां बीजं प्रसिद्धेर्भवेत् ?॥ १९४ ॥

दृष्ट्वा शान्तेर्निरुपममिदं केशपाशं चमर्यः
संभाव्यैतद् व्यपगतफलं स्वस्य वालप्रियत्वम् ।

---

१ अपेतम् ।

लज्जाऽऽक्रान्ता हिमगिरिभुवं संश्रयन्ते स्म नूनं
युक्तं स्त्रीत्वे व्यवसितमिदं मानिनी सा हि जातिः ॥ १९५ ॥
सुदुर्जयं वाडवजातवेदसा प्रतापराशिं दधतोऽपि यद्वपुः ।
जिनेशितुः स्वेदलवैर्विवर्जितं विचित्रमन्यत् किमिवाऽभिधीयताम्? ॥
वपुर्जिनेन्द्रस्य सुवर्णकेतकीपलाशसारैर्मृदुभिर्विनिर्ममे ।
ध्रुवं गृहीतैः शुभकर्मणाऽन्यथा सुगन्धि पीतं मृदु नैव तद् भवेत् ॥१९७
हृदि स्फुरन्निर्मलबोधसङ्गमादिवाऽवदाते अपि मांसशोणिते ।
जिनस्य कण्ठोत्पलगन्धवासनाश्रयादिव श्वासभरोऽतिसौरभः ॥१९८॥
रोगा वैद्यविशारदैर्निगदिताः सर्वेऽप्यजीर्णोद्भवा
बह्वाहारभवं तदेव स तु नाऽऽहारः समालोक्यते ।
नीहारोऽपि न यस्य चर्मनयनै रोगाः कुतस्तत्प्रभो-
र्यद्वा विस्मयमादधाति चरितं सर्वं हि पुण्यात्मनाम् ॥१९९॥
इति त्रिलोकीवनिताविलोचनोन्मदिष्णुरोलम्बकुलाम्बुजप्रभम् ।
अगण्यलावण्यनिवेशसेवधिर्बभूव रूपं समताऽतिगं विभोः ॥ २०० ॥
वसुन्धराधीशसुता यशोमतीमुखाः सुसुख्यो जनकोपरोधतः ।
महोत्सवेऽतुच्छतमे प्रसर्पति प्रभुः प्रभूताः प्रथिता व्यवाहयत् ॥२०१॥
समासहस्रेष्वथ पञ्चविंशतिप्रमेषु यातेषु निमेषवत् सुखम् ।
न्यधत्त राज्ये नृपविश्वसेनकः प्रतापदिक्चक्रविभासकं विभुम् ॥२०२॥
तवोत्तमाङ्ग! क्रमवन्दनात् प्रभो ! ममोत्तमाङ्गस्य सदोत्तमाङ्गता ।
अजायतैवेति विमृश्य राट् तदा निजोत्तमाङ्गं नमयाम्बभूव सः ॥२०३॥
स विश्वसेनोऽवनिपालपुङ्गवः समाचचार स्वहितं ततः स्वयम् ।
न हि प्रमादं परलोकसाधने बुधाः प्रकुर्वन्ति कदापि तादृशाः ॥२०४॥
शुभेषु कार्येषु नृणां विहस्तता बभूव रोमाञ्चगतोऽथ कण्टकः ।
स भीमरूपः शिव एव विश्रुतः प्रभौ भुवं शासति शासितद्विषि ॥२०५॥
दृढस्य जीवः सरथस्य विच्युतो यथार्थसर्वार्थमहाविमानतः ।
स चक्रकस्वप्ननिवेदितागमो यशोमतीकुक्षिमभूषयत् ततः ॥ २०६ ॥
अजीजनत् सा तनयं नृपप्रिया महौजसं लक्षणलक्षिताङ्ककम् ।
प्रभोः प्रतिच्छायिकयेव निर्मितं प्रदीपतो दीपमिवाऽतिभासुरम् ॥२०७॥
गर्भाधानं भजति भगवत्यत्र मात्रा निरैक्षि

स्वप्ने चक्रं समुदितविभाचक्रकाष्ठावभासम् ।
अस्माच्चक्रायुध इति सुतस्याऽस्य नामाभिधानं
श्रीमान् शान्तिर्व्यधित विधिवल्लोककल्पद्रुकल्पः ॥ २०८ ॥

कलाः समभ्यस्य कलागुरोः कलाः कलाविदां मानसमापयन् मुदम् ।
ततः समासादितमुक्तशैशवः क्रमात् स तारुण्यभरं समासदत् ॥२०९॥

नरेन्द्रकन्या रतिरूपसंपदः परार्ध्यसौभाग्यसमृद्धिशालिनम् ।
स तं धनुर्वेदनिवेद्यकौशलं विवाहयामास पिता प्रभूत्तमः ॥ २१० ॥

वसुन्धरामण्डलमस्य शासतः सतः प्रभोः शान्तिमहामहीशितुः ।
समासहस्रा व्यतिचक्रमुर्नृपैरुपास्यमानस्य च पञ्चविंशतिः ॥ २११ ॥

अथाऽऽयुधागारिक एत्य सत्वरं व्यजिज्ञपत् तं प्रणिपत्य कृत्यवित् ।
त्वमायुधागारविभासिना त्विषां चयेन चक्रेण नरेन्द्र ! वर्ध्यसे ॥२१२॥

सहस्रभानुस्तव शस्त्रसद्मनि स्फुरत्सहस्रारकचक्रकैतवात् ।
प्रविश्य सान्निध्यमवाप्य सांप्रतं किमु स्वयं राहुमयं जिगीषति ?॥२१३॥

स चक्ररत्नस्य नृरत्नमात्मना व्यदीधपत् पूजनमष्टवासरान् ।
न किं विजानन्तितरां हि संविदां त्रयेण विद्योतितचेतसोऽथवा ?॥२१४॥

अष्टाह्निकाविरमणे सति तच्च चक्रं
व्योम्ना चचाल हरितं प्रति वासवस्य ।
तेनैव वासरमणेर्ध्रुवमेकचक्रः
ख्यातो रथः सविधदेशविवर्तिनाऽपि ॥२१५॥

यक्षैरधिष्ठितमधिष्ठितवित्तरक्षै-
स्तत् संततं दशशतीप्रमितैः सलक्षैः ।
सैन्योत्थितेन रजसा ककुभां विभागा-
नाच्छादयन्ननु ययौ जिनचक्रवर्ती ॥ २१६ ॥

पुरस्कृताः संप्रति मन्दगामिनोऽप्यनेन भर्त्रा वयमेव केवलम् ।
इतीव वेगेन गजाः प्रतस्थिरे क्षरन्मदप्लावितरेणुसंचयाः ॥२१७॥

हिरण्मयैः पल्ययनैर्विराजितास्तुरङ्गमा नैकविधास्ततोऽचलन् ।
प्रभञ्जनः खञ्जित एव यैर्ध्रुवं जवेन न स्याद् मृगवाहनोऽन्यथा॥२१८॥

ददौ त्रिलोकीपतिरात्मनः पदं सनातनं नः प्रमना जगत्त्रये ।

---

१ तत् चक्रम्, अन्विति संबन्धः ।

इतीव चीत्कारमिषाद् निजस्तवं विनिर्मिमाणैश्चलितं रथोत्तमैः ॥२१९॥
प्रभोः प्रचेलुर्विजयश्रियोद्भटा भटाः समज्ञाग्रहणैकलम्पटाः ।
अनेकशः प्रासकृपाणपाणयः प्रति प्रतीकं रचिता इवौजसा ॥ २२० ॥
मृदङ्गढक्कादिकवाद्यनिस्वनै रवे रथाश्वेषु पलाय्य यत्सु च ।
तुरङ्ग एकः क्वचनापि यद् ययौ तदत्र ते पप्रथिरे न सप्त किम् ?॥२२१॥
तदा जगन्नाथचमूमहाभराद् महीतले न्यञ्चति भोगिनां पतिः ।
फणासहस्रं धृतये विजज्ञिवान् मणिप्रभावाऽगणितोरुयातनः ॥ २२२॥
चमूसमुत्खातरजोभरैः प्रभोर्वितायमाने सति दुर्दिने घने ।
न राजहंसाः परदेशमैयरुश्चमूचराणां किमयं न विस्मयः ?॥ २२३ ॥

गत्वा योजनमात्मशक्तिनियते श्रीचक्ररत्ने स्थिते
स्वामी द्वादश योजनानि शिबिरं न्यास्थद् व्यवस्थापरः ।
नास्मार्षीद् निजवेश्मनामपि जनः कश्चिच्च सेनाचर-
स्तिष्ठन् वार्धकिरत्ननिर्मितगृहस्तोमेषु रम्येष्वलम् ॥ २२४ ॥

गच्छन्नेवं प्रतिदिनमविच्छिन्नरूपैः प्रयाणै-
र्विश्वोत्तापं व्यपगमयितुं प्राप्तविस्तारसारः ।
पूर्वाम्भोधिं सुकृतविदुषां वन्दनीयोऽमराणां
प्राप स्वामी रसमय इव स्वःस्रवन्त्याः प्रवाहः ॥२२५॥

सरस्वतीनामविनश्वरं पदं स्वबन्धुवत् सद्गुणरत्नसञ्चयम् ।
समीरणप्रेरितवीचिबाहुभिः समालिलिङ्गेव विभुं पयोनिधिः ॥२२६॥
अथो निविष्टः स च सिंहविष्टरे स्वयं प्रभुर्मागधतीर्थसंमुखम् ।
जिनेन्द्रचक्रिद्वयवृत्तवर्तिनां ललामभूतः कमनीयविग्रहः ॥ २२७ ॥
अवस्थितो द्वादशयोजनान्तके स्वकीयसिंहासनकम्पनादनु ।
समुत्पतत्क्षोभसमाकुलाशयो व्यचिन्तयद् मागधतीर्थनायकः ॥२२८॥

मत्सिंहासनकम्पमाप यदिदं निष्कम्पमेवान्वहं
तत्किं मे च्यवनं किमद्भुतमहो ! विघ्नोऽपि भावी किमु ?।
शत्रोरेव विचेष्टितं किमथवा कस्यापि चैतन्मम
ध्यात्वैवं स च संशयापहतये प्रायुङ्क्त बोधं निजम् ? ॥२२९॥

अवेत्य तं षोडशधर्मचक्रिणं समागतं पञ्चमचक्रवर्तिनम् ।
व्यचारयद् मागधतीर्थनायकः स्वचेतसैवं पुनरुद्धचेतनः ॥ २३० ॥

अहो ! धिगज्ञानमिदं ममाधुना प्रभुत्वमेतद् धिगपि प्रसृत्वरम् ।
विजृम्भणाद् यस्य न शान्तिमागतं कथञ्चिदज्ञासिषमेव नायकम् ॥२३१॥
उपासनामल्पितकल्पशाखिनः प्रकुर्वते यस्य च कल्पवासिनः ।
प्रभोः सपर्यामपि तस्य कीदृशीमहं करिष्यामि तनिष्ठऋद्धिकः ?॥२३२॥
स्वसंपदोऽस्याऽप्यनुसारतः प्रभोस्तथापि भक्तिं वितनोमि सांप्रतम् ।
महात्मनां कार्मणकर्मणि स्फुटं विहाय भक्तिं न परं हि साधनम् ॥२३३॥
इदं विनिश्चित्य निजेन चेतसोपदां समादाय समेत्य सत्वरम् ।
पदारविन्दद्वितयं पुरः प्रभोर्ननाम नक्षत्रपथे कृतस्थितिः ॥ २३४ ॥
व्यजिज्ञपच्चाभयदानदक्षिण ! त्वया विभो ! मत्पदमायता स्वयम् ।
सुरेषु रेखा मम नैव केवलं निवेशिता किन्तु सुरेश्वरेष्वपि ॥२३५॥
सुरेश्वराणां न कदापि यत्पदं स्वपादपद्मैस्त्वयका पावित्रितम् ।
पवित्रितं देव ! ममैव तत्परं कृतः कृतार्थोऽस्मि निकृत्यपासिना ॥२३६॥
अतः परं ते विनियोगवर्तिनां पुरस्सरोऽस्म्येष विशेषवेदितः ।
निदेशदानेन यदा कदाचन प्रसादनीयः स्मृतिपूर्वकं त्वया ॥ २३७॥
इतीरयित्वा प्रणिपत्य नित्यगीः सुरस्ततोऽस्मै मणिभूषणाऽञ्चितम् ।
उपायनं सन्निधिमानुपानयद् न तादृशां रञ्जनमन्यदस्ति यत् ॥२३८॥
विसर्जितः सत्कृतिपूर्वकं सुरः प्रसादभाजा स च शान्तिचक्रिणा ।
ययौ निजस्थानमनाहतक्रमं समुल्लसत्तोषपरीतमानसः ॥ २३९ ॥
ततः क्षणाद् दक्षिणवार्धिरोधसि स्थितः स्थिराधीशनतक्रमाम्बुजः ।
असाधयद् मागधवत् समागधः सुरं स्वशक्त्या वरदामनायकम् ॥२४०॥

सैन्यं पश्चिमवारिधेरनुतटं विन्यस्य शान्तिप्रभु-
र्दत्तानर्घ्यमणीविभूषणगणं शिष्टिप्रतीष्टिव्रतम् ।
संमान्यप्रतिभासमानममरं तं च प्रभासेश्वरं
वाताधीशदिगध्वना चलितवान् श्रीसिन्धुदेवीं प्रति ॥२४१॥

स्वामी सैन्यं न्यधित सुमतिः सिन्धुसिन्धोः प्रतीरे
वामे वामे सविधसविधे सिन्धुदेवीगृहस्य ।
यस्मिंस्तार्णं न च जलमपि प्रायशो धन्वनीव
सैन्यानर्हं वदनरदनश्रोत्रकाश्मल्यभित्त्यै ॥ २४२ ॥

शान्तिं स्वाभिमुखं जगत्त्रयपतिं सिंहासनस्थायिनं

विज्ञायाऽवधिनोपदाभृतकरा श्रीसिन्धुदेवी मुदा ।
आगत्य प्रणिपत्य विज्ञपयति स्मैवं प्रभुं प्राञ्जलि-
धन्याऽहं तव दर्शनादिह विभो ! स्थास्नुर्निदेश्या सदा ॥२४३॥
इत्यालप्य समर्प्य भास्वरतरं दिव्यं विभूषाचयं
जात्याष्टापदभूरिरत्नसवनद्रोणीघटान् सा समान् ।
विश्वेशः प्रतिपद्य शिष्टिममरीं सत्कारमाप्याऽगमत्
स्वस्थानं वृषभध्वजस्य च दिशा वैताढ्यशैलं प्रभुः ॥२४४॥
ज्ञात्वा स्वामिनमागतं सपृतनं वैताढ्यशैलप्रभु-
र्द्रागाऽऽगत्य विनत्य चाऽऽदित विभोः शिष्टिं कृतोपायनः ।
चक्री चक्रमनुव्रजंश्च सबलः प्राप्तस्तमिस्रां गुहा-
मासीनः कृतमालकाभिधसुरं चक्रे सहेलं वशम् ॥ २४५ ॥
आज्ञप्तः प्रभुणा चमूपतिरथो सिन्धुं नदीं चर्मणा
प्रोत्तीर्य स्ववशंवदं व्यरचयत् तन्निष्कुटं दक्षिणम् ।
तामिस्रं विहिताष्टमः स च जवादुद्घाटयामासिवान्
द्वारं स्वामिनिदेशतः पृथुमतिर्दण्डेन रत्नेन तत् ॥ २४६ ॥
प्रविश्य बाष्पोपरमे तदन्तरे महेभमारुह्य चमूपरिष्कृतः ।
निवेश्य कुम्भे मणिमेव दक्षिणे दरीतमश्छेदयति स्म चक्रभृत् ॥२४७
तद्भित्त्योरपि मण्डलानि विलिखन्नेकोनपञ्चाशतं
काकिन्या मणिना प्रभुः स पुरतोऽयासीत् प्रयासं विना ।
चक्री वर्धकिना निबद्धसरणिः क्षिप्रं निमग्नाभिधो-
न्मग्नाख्यं ह्रदिनीद्वयं परमवातारीत् तदन्तःस्थितम् ॥२४८॥
तदाऽऽत्मनैवोद्घटितं तदोत्तरं महागुहाद्वारमुपागते विभौ ।
न चात्र चित्रं प्रतिभासते सतां शुभात्मनां यत् सकलं सुसंभवम्॥२४९॥
विजेतुमेवोत्तरभारतं पृथुं कुबेरदिग्द्वारिकयैव निःसृतम् ।
ससैन्यमायान्तमवेक्ष्य चक्रिणं सहासमापातशका मिथो जगुः ॥२५०॥
अरे ! चतुर्धा बलमानशालितः क एष निःशङ्कमुपैति गर्वितः ? ।
बलावलेपेन परोपवर्तनं ग्रहीतुकामः क इवाभिवर्ण्यताम् ? ॥ २५१ ॥
बलाबलं स्वस्य परस्य वा बुधो विचार्य कार्यव्यवसायमाश्रयेत् ।
विचारमुत्सृज्य गृहीतपौरुषः पराभवं विन्दति यद् महानपि ॥ २५२ ॥

गजैः किमेभिर्महिषैरिवाऽमदैः खरैरिवोच्चैस्तुरगैरथापि किम् ? ।
नरैरमीभिः किमु वानरैरिव प्रवर्तमानैः परदेशलिप्सया ? ॥ २५३॥
महाबलैः किं यदि वा महाबलैस्तुरङ्गमैः किं यदि वा तुरङ्गमैः ? ।
महारथैः किं यदि वा महारथैर्न सांयुगीना यदि ते महाभटाः? ॥२५४॥
शाणाजीवानिवैतान् निशितबहुविधाऽस्त्राणि पाणौ दधाना-
नस्माकं देशसीमां समुपनिपततो धिग् मुमूर्षून् सुमूर्खान् ।
एते चोपेक्ष्यमाणा व्यसनजननवद् नाऽऽयतौ शर्मणे स्युः
पञ्चत्वं प्रापयामः सुकृतपरिणतेः शक्तितस्तद् विमूढान् ॥२५५॥
विचार्य चैवं शकवीरमण्डली विचित्रधौताऽऽयुधजातमण्डिता ।
पुरस्थसैन्येन च चक्रवर्तिनः प्रचक्रमे योद्धमनुक्रमेण सा ॥ २५६ ॥
चमूपतिर्वीक्ष्य पराङ्मुखीकृतान् किरातवीरैः प्रभुसैनिकानिमान् ।
क्रुधाऽसिरत्नं परिगृह्य संमुखोऽश्वरत्नमारुह्य दधाव तान् प्रति॥२५७॥
विभासमानेन च तेन तत्क्षणं रराज रत्नत्रितयेन सा चमूः ।
यथैव शक्तित्रितयेन राजता यथैव गुप्तित्रितयेन साधुता ॥ २५८ ॥
रणाङ्गणे तस्य पताकिनीपतेर्न कोऽपि तस्थौ पुरतोऽभिधावतः ।
तमिस्रसंभार इवोष्णदीधितेर्गरुत्मतः सर्प इवाऽभिसर्पतः ॥ २५९ ॥
शालूरा इव केचनाऽपि सरासि त्रस्ता ममज्जुर्भटा
भुञ्जाना इव केचनाऽपि वदने न्यास्थन् स्वहस्ताङ्गुलीः ।
स्वप्राणान् परिरक्षितुं वृषभवत् तस्मिंश्च केचित् तृणं
केऽपि क्वाऽपि निलिल्यिरे सलिलवद् दुग्धे विदग्धाशयाः॥२६०॥
अनीकिनीनायकरत्नसायकप्रभिन्नलक्ष्यस्य विलोकनादिति ।
विलक्षतामाप्य दिशो दिशं ययुः किरातवीरा मरुतेव पांशवः ॥२६१॥
अतीत्य ते भूमिमनेकयोजनामवाप्य चोच्छ्वासमलुप्तचेतनाः ।
विलज्जमाना मिलिताः परस्परं विमर्शमेतादृशमाशु चक्रिरे ॥ २६२ ॥
कुकर्मपरिपाकतः सुकृतसंक्षयोऽजायत
ध्रुवं सपदि नः परं, कथमुपैति चात्राऽन्यथा ।
तमिस्रभरकन्दरं गिरिमतीत्य वैताढ्यकं
पराक्रममहानिधी रिपुरनेकसैन्योत्करः ? ॥ २६३ ॥
मानान्धैर्विदधे मृधं विगणनां निर्वास्य सर्वात्मना

जिनेन्द्रमाहात्म्यमनन्तमद्भुतं सुरैर्विजानद्भिरपि स्वरूपतः ।
जलानि वर्षद्भिरनेकशस्तदा जडाशयत्वं प्रकटीकृतं न किम् ? ॥२७५॥

सैन्यप्लावनवासनाव्यवसितं पूरं समीक्ष्याऽम्भसां
पुंरत्नेन करेण सत्त्वकरुणापाथोजिनीभानुना ।
स्पृष्टं द्वादश योजनानि ववृधे चर्माख्यरत्नं तदा
श्लाघ्यः किं न महात्मनां हि महिमा विश्वत्रयोद्द्योतकः ?॥२७६॥

तत्रारुरोह चतुरङ्गसमग्रसैन्यं
शान्तिप्रभोः समधिगम्य नियोगमाशु ।
तद् वारिपूरमुपरि स्थितिमाततान
यत् तर्क्यते प्रवहणं वरुणोपनीतम् ॥ २७७ ॥

द्वादशप्रमितयोजनायति च्छत्ररत्नमपि चर्मरत्नवत् ।
स्पृष्टमात्रमथ चक्रिपाणिना सैन्यचक्रमुपरि स्थितं स्थिरम् ॥ २७८ ॥

मयि प्रभौ जाग्रति मा बहिष्टनं तमोऽपि बाधिष्ट जनं कदाचन ।
इतीव चक्री मणिरत्नमुन्नताऽऽतपत्रदण्डोपरि तत्क्षणं दधौ ॥२७९॥

गेहरत्नकरणेन रसोप्ताः शालयो दिनमुखे सति तत्र ।
घस्र एव फलिता गलितार्धे सैनिकैर्बुभुजिरे प्रतिघस्रम् ॥२८०॥

वारिपूरतरदद्भुतचर्मरत्नमध्यमधिशय्य ससैन्यः ।
वासरान् गमयति स्म स सप्त तारयन्निव जनं भवसिन्धोः ॥२८१॥

ततो भ्रकुटिभीषणा विधृतहेतयो यक्षकाः
सुरानिदमवादिषुः प्रभुजुषो व्रजित्वा द्रुतम् ।
अरे ! घनकुमारकाः ! किमिदमात्मबोधे जडाः !
भवद्भिरसुरैरिव व्यवसितं प्रभावच्युते ? ॥२८२॥

विधीयमाना दुरनर्थकारणं महात्मभिः सार्धमहो ! विरोधिता ।
तथाहि पक्षक्षतिमापिरेऽद्रयो महाविरोधेन हरेः प्रवादिवत् ॥२८३॥

वहन्ति मालामिव यस्य शासनं निजेन मूर्ध्नाऽखिलपाकशासनाः ।
अनन्तवीर्यप्रचयेन चक्रिणा सुधीर्विरोधं विदधाति तेन कः ? ॥२८४॥

वयं न मन्तुं भवतामतः परं सुराः ! सहिष्यामह एव भासुराः ।
इतीरितास्तैः समहार्षुराविला बलाहकानां पटलं तदैव ते ॥ २८५ ॥

सार्वभौमपरभागवर्णनाकौमुदीप्रकटनेन ते ततः ।

म्लेच्छमानसनिवासनिश्चलं मानतापमपनिन्युरञ्जसा ॥ २८६ ॥
अथो किराता मणिकाञ्चनोत्करैरनर्घ्यचित्राभरणैरपि प्रभुम् ।
भृशं लुठन्तः पदपद्मयोः पुरो वितेनिरे प्रीतमरीणभक्तयः ॥ २८७ ॥

संमान्यैतानुपहृतनयः पृष्ठहस्तप्रदाना-
चक्री सेनापरिवृढमहारत्नसंप्रेषणेन ।
लोकान् पुत्रानिव विगणयन् साधयामास सिन्धो-
रौदीच्यं श्रीगृहमविकटं स्वौजसा निष्कुटं तम् ॥ २८८ ॥

एतं क्षुद्रहिमाद्रिनामकगिरिं कुर्वन्तमूर्भ्वापगा-
सिन्ध्वोरन्तरमाकुलं कलकलैः सेनासमूहोद्भवैः ।
रत्नैः पद्मनदाम्बुभिर्विभुमसौ गोशीर्षकैश्चन्दनैः
संतुष्टो हिमवत्कुमार उरुधीरभ्यर्चयामासिवान् ॥ २८९ ॥

स्वामी जवादृषभकूटमहामहीध्रे
गत्वैव काकिणिमणिं परिगृह्य धीरः ।
शान्तिश्चिरं जयति पञ्चमचक्रवर्ती-
त्येताँल्लिलेख स निजेन करेण वर्णान् ॥ २९० ॥

विस्मापयन् सकलसैनिकमानसानि
भास्वत्प्रतापकलितेन पराक्रमेण ।
भूमीभृतः प्रतिनिवृत्य रथस्थ एव
वैताढ्यमाप पुनरेष ततः क्रमेण ॥ २९१ ॥

तत्र प्रमोदपरिपूरितचित्तवृत्ति-
विद्याधराधिपतिभिः स्वयमभ्युपेतम् ।
संपूज्य चैनममराचलचूलिकायां
वैताढ्यभूमिभृदमानि समुच्चसानुः ॥ २९२ ॥

चक्री गङ्गातटमुपगतः सेवितो भक्तिपूर्वं
गङ्गादेव्या विरचितमहाप्राभृतप्राज्यभङ्ग्या ।
सेनान्याऽथ प्रथितयशसाऽसाधयत् साधुधाम्ना
गाङ्गं रङ्गद्भटपरिवृतो निष्कुटं चोत्तरं सः ॥ २९३ ॥

श्रीशान्तिप्रभुरोजसामाधिनिधिः खण्डप्रतापाभिध-
दर्या नायकनाट्यमालममरं कृत्वा वशे स्वस्य च ।

सेनान्याऽतिविभासिदण्डमणिनोद्घाट्याऽविशत् तां गुहां
तेजोऽत्यर्यम चक्ररत्नमनु यान् न्यायं नृणां दर्शयन् ॥२९४॥

काकिणीमणिनिदानमण्डलैः संहरंस्तिमिरमण्डलं विभुः ।
तेजसा मणिभवेन पूर्ववत् संचचार स च तत्र कन्दरे॥ २९५ ॥

उत्ततार तरसा स निमग्नोन्मग्ननामसरितौ सह सैन्यैः ।
पद्यया प्रथमयाऽप्यनवद्यः सर्वमेव महतां सुघटं यत् ॥ २९६ ॥

आत्मनोद्घटितदक्षिणलक्ष्मीद्वार एव निरगात् स गुहायाः ।
चन्द्रमा इव तमांसि निहन्ता पूर्वभूमिधरदीर्घगुहायाः ॥ २९७ ॥

गङ्गातीरनिवासिनः समभवन् नैसर्पमुख्याः प्रभो-
र्गङ्गाऽऽस्यस्थितिशालिनोऽपि निधयो वश्याः प्रसिद्धा नव ।
गाङ्गं दक्षिणनिष्कुटं स पृतनाधीशेन शिष्टिश्रिता
म्लेच्छाकीर्णमसाधयद् बलवतां त्वेषां ततो दुर्जयम् ॥२९८॥

षट् खण्डानि विभुर्विजित्य भरतस्यैवं प्रतापानल-
ज्वालाजालसमुच्चयेन सकलं प्लुष्ट्वाऽभिमानं द्विषाम् ।
व्यावृत्तः स्वपुरं विवेश विलसत्पौराङ्गनाभिर्मुदा
लाजोत्क्षेपनिरुञ्छनेषु सरसं व्यातन्यमानेष्वयम् ॥ २९९ ॥

केतनैः पवनचञ्चलभागैर्नागरैर्विनिहितैः प्रतिहट्टम् ।
तर्जयत् सुरपुरं यदिवाऽभात् सोऽविशद् गजपुरं तदधीशः ॥ ३०० ॥

सुरासुरैस्तस्य च चक्रवर्तितापदाभिषेको विधिवद् विनिर्ममे ।
नृपैः समं संमदपूर्णमानसैरशेषतीर्थोपहृतैर्मृदम्बुभिः ॥ ३०१ ॥

संवत्सरा द्वादश जग्मुरेषकां भव्याभिषेकोत्सवमेव कुर्वताम् ।
आसीत् पुरं तावदमन्दसंमदं शुल्केन दण्डेन करेण चोज्झितम् ॥३०२॥

यक्षाणां समभूत् सहस्रयुगलं बद्धोद्यमानां प्रभो-
रङ्गानामवनस्थितौ निरुपमं सौन्दर्यमाक्रामताम् ।
रक्षाव्यापृतिलालसा न हि परे तस्य श्रुतास्तादृशः
प्रोक्ता चक्रभृतः स्थितिः पुनरियं षट्खण्डभूमीशितुः ॥३०३॥

एकैकेन सहस्रकेण परितः प्रत्येकमाभासितै-
र्यक्षाणामधिपश्चतुर्दशभिराभाति स्म रत्नैर्विभुः ।
रागादेत्य सरस्वतीभिरचलाश्लेषं श्रिताभिर्मुहुः

पारावार इवाऽपरार्थविभवो मर्यादयाऽऽलम्बितः ॥ ३०४ ॥
निधिभिर्नवाभिः समाश्रितः प्रभुरङ्गैरिव दृक्सुखावहैः ।
अथवा महतामुपासनाद् गुरुतां प्राप्तुमतन्द्रिता न के ?॥३०५॥
अन्तःपुराणां च सहस्रकैश्चतुःषष्ट्याऽऽश्रितः संश्रितकल्पपादपः ।
नागैर्हयैश्चापि रथैर्मदोद्धतैः कोट्याऽऽवृतः षोडशलक्षहीनया ॥३०६॥
ग्रामाः षण्णवतिप्रमाः समभवन् कोट्यः प्रभोः पत्तिवद्
द्वात्रिंशच्च महीभुजामिव सहस्राणि ध्रुवं नीवृताम् ।
सूदानां च शतत्रयं गुणवतां जज्ञे त्रिषष्ट्युत्तरं
तस्य श्रेणिपदप्रसिद्धिविभृतः प्रश्रेणयोऽष्टादश ॥ ३०७ ॥
अष्टादशाङ्कगुणिताब्धिसहस्रसंख्या-
न्यासन् प्रभोरनुपमानि महापुराणि ।
द्रोणादिभूतपदकानि मुखानि लक्षं
न्यूनं पुनर्भवति तद् दशभिः शतैश्च ॥ ३०८ ॥
श्राद्धव्रतैर्गुणितवार्धिसहस्रकाणि
नेतुर्बभूवुरपराण्यपि पत्तनानि ।
तावन्ति कर्वटमडम्बकवाच्यनाम्नां
संमीलितान्यपरिमेयसमृद्धिभाजाम् ॥ ३०९ ॥
जाग्रत्प्रभाप्रसररत्नमुखाकराणां
स्वामी स्म पालयति विंशतिमा सहस्रान् ।
विज्ञातशक्तिरपि षोडश खेटकानां
संबन्धकीर्तनभृतां च चतुर्दशाऽपि ॥ ३१० ॥
षट्पञ्चाशतमन्तरोदकगिरां स्वामी शशास स्वयं
राज्यानां कुलवासिनां पुनरयं चैकोनपञ्चाशतम् ।
षट् खण्डानि यथावदेव भरतस्यैवं प्रभुः पालयं-
श्चक्रित्वे गमयाम्बभूव समयं राज्याप्तिवद् भोगभृत् ॥३११॥
ते लोकान्तिकनामविश्रुतिमिताः सारस्वताद्याः सुरा
मत्वाऽथाऽऽसनकम्पतोऽवधिविदा दीक्षाक्षणं स्वामिनः ।
एत्य व्यज्ञपयन् प्रणम्य च विभुं सर्वीयमाज्ञापरा-
स्तीर्थं तीर्थपते ! प्रवर्तयतरामित्याश्रितप्रीतयः ॥३१२॥

सुरेषु विज्ञप्य गतेषु तेष्वथ प्रदाय सांवत्सरिकीं तथार्हतिम्[1] ।
न्यधत्त चक्रायुधमादिमं सुतं महेन राज्ये जगतीपतिर्निजम् ॥३१३॥

गीर्वाणैरिन्द्रमुख्यैर्मनुजपरिवृढैश्चारुचक्रायुधाद्यै-
र्दीक्षास्नानं प्रकृत्याऽप्यमलतमतनुः कारितस्तीर्थतोयैः ।
श्रीश्रीखण्डैर्विलिप्तो वरमणिशिबिकां रत्नसिंहासनाङ्कां
सर्वार्थाख्यां समर्थः प्रतिघमुखरिपुच्छेदनेऽध्यारुरोह ॥३१४॥

प्रथममवहंस्तामानन्दाद् नरा बहुमानत-
स्तदनु विबुधाधीशाः सादिक्रमेण यथाक्रमम् ।
त्रिदिवसदना दैत्यास्ताक्ष्र्या भुजङ्गकुमारका
न हि विदधते सन्तः केऽपि क्रमव्यतिलङ्घनम् ॥ ३१५ ॥

मृदङ्गनादानपि नागराऽङ्गनाः श्रवःपथेऽभ्यापततोऽभ्युपेत्य ताः ।
समुत्सुकाः स्वामिनमीक्षितुं रयात् समाययुः स्वस्वगवाक्षमालिकाम् ३१६
प्रतिष्ठते क्व प्रभुरेष सांप्रतं सुरेन्द्रदैत्येन्द्रनरेन्द्रसंवृतः ? ।
निगद्यतामालि ! मदग्रतः कयाचिदेवमुक्ता न्यगदत् सखी ततः ॥३१७॥
विहाय रत्नानि चतुर्दश प्रभुर्निधीन् नवाऽन्तःपुरमुत्तमश्रियः ।
सखि ! स्वयं सिद्धिसुखाय चेष्टते सनातनं शर्म तदस्ति यत्परम् ॥३१८॥
सखि ! प्रजाः स्वाश्चिरकाललालिता विमुञ्चतो मानसमस्य निष्ठुरम् ।
वितर्कयामीत्युदिता सखी जगौ महात्मनां नो ममता मता क्वचित्॥३१९॥
विवर्णनीया वरवर्णिनीषु सा किमालि ! नैवास्ति च सिद्धिवर्णिनी ।
जगत्त्रयस्याऽऽप्यपहाय वर्णिनीरयं प्रभुर्यां परिणेतुमुद्यतः ॥ ३२० ॥
अपक्षपातित्वविशेषदर्शनात् प्रभुत्वमेतस्य सखि ! प्रशस्यते ।
नरेन्द्रचक्रित्वरमाङ्गभोगवद् व्रतश्रियं यः परिरप्स्यते प्रभुः ॥ ३२१ ॥
इतीदृशीः पौरमृगीदृशां कथा नयन् श्रुतौ श्रोत्रसुखाः सुखाश्रयः ।
सदाफलैः शाखिभिराकुलं विभुर्वनं सहस्राम्रवणं समासदत् ॥३२२॥
( षड्भिः कुलकम् )

भाते गायदिवोरुकोकिलकुलैर्यत् पञ्चमोद्गारिभि-
र्वातान्दोलितवल्लरीचलदलैर्नृत्यत् प्रमोदादिव ।
मल्लीपुष्पविलोचनैर्विकासितैर्व्यालोकितुं स्वामिनं

---

1 दानम् ।

पारावार इवाऽपरार्थविभवो मर्यादयाऽऽलम्बितः ॥ ३०४ ॥
निधिभिर्नवाभिः समाश्रितः प्रभुरङ्गैरिव हृक्सुखावहैः ।
अथवा महतामुपासनाद् गुरुतां प्राप्तुमतन्द्रिता न के ?॥३०५॥
अन्तःपुराणां च सहस्रकैश्चतुःषष्ट्याऽऽश्रितः संश्रितकल्पपादपः ।
नागैर्हयैश्चापि रथैर्मदोद्धतैः कोट्याऽऽवृतः षोडशलक्षहीनया ॥३०६॥
ग्रामाः षण्णवतिप्रमाः समभवन् कोट्यः प्रभोः पत्तिवद्
द्वात्रिंशच्च महीभुजामिव सहस्राणि ध्रुवं नीवृताम् ।
सूदानां च शतत्रयं गुणवतां जज्ञे त्रिषष्ट्युत्तरं
तस्य श्रेणिपदप्रसिद्धिविभृतः प्रश्रेणयोऽष्टादश ॥ ३०७ ॥
अष्टादशाङ्कगुणिताब्धिसहस्रसंख्या-
न्यासन् प्रभोरनुपमानि महापुराणि ।
द्रोणादिभूतपदकानि मुखानि लक्षं
न्यूनं पुनर्भवति तद् दशभिः शतैश्च ॥ ३०८ ॥
श्राद्धव्रतैर्गुणितवार्धिसहस्रकाणि
नेतुर्बभूवुरपराण्यपि पत्तनानि ।
तावन्ति कर्वटमडम्बकवाच्यनाम्नां
संमीलितान्यपरिमेयसमृद्धिभाजाम् ॥ ३०९ ॥
जाग्रत्प्रभाप्रसररत्नसुखाकराणां
स्वामी स्म पालयति विंशतिमा सहस्रान् ।
विज्ञातशक्तिरपि षोडश खेटकानां
संबन्धकीर्तनभृतां च चतुर्दशाऽपि ॥ ३१० ॥
षट्पञ्चाशतमन्तरोदकगिरां स्वामी शशास स्वयं
राज्यानां कुलवासिनां पुनरयं चैकोनपञ्चाशतम् ।
षट् खण्डानि यथावदेव भरतस्यैवं प्रभुः पालयं-
श्चक्रित्वे गमयाम्बभूव समयं राज्याप्तिवद् भोगभृत् ॥३११॥
ते लोकान्तिकनामविश्रुतिमिताः सारस्वताद्याः सुरा
मत्वाऽथाऽऽसनकम्पतोऽवधिविदा दीक्षाक्षणं स्वामिनः ।
एत्य व्यज्ञपयन् प्रणम्य च विभुं सर्वीयमाज्ञापरा-
स्तीर्थं तीर्थपते ! प्रवर्तयतरामित्याश्रितप्रीतयः ॥३१२॥

सुरेषु विज्ञप्य गतेषु तेष्वथ प्रदाय सांवत्सरिकीं तथार्हतिम्[1] ।
न्यधत्त चक्रायुधमादिमं सुतं महेन राज्ये जगतीपतिर्निजम् ॥३१३॥

गीर्वाणैरिन्द्रमुख्यैर्मनुजपरिवृढैश्चारुचक्रायुधाद्यै-
र्दीक्षास्नानं प्रकृत्याऽप्यमलतमतनुः कारितस्तीर्थतोयैः ।
श्रीश्रीखण्डैर्विलिप्तो वरमणिशिबिकां रत्नसिंहासनाङ्कां
सर्वार्थाख्यां समर्थः प्रतिघमुखरिपुच्छेदनेऽध्यारुरोह ॥३१४॥

प्रथममवहंस्तामानन्दाद् नरा बहुमानत-
स्तदनु विबुधाधीशाः सादिक्रमेण यथाक्रमम् ।
त्रिदिवसदना दैत्यास्तार्क्ष्या भुजङ्गकुमारका
न हि विदधते सन्तः केऽपि क्रमव्यतिलङ्घनम् ॥ ३१५ ॥

मृदङ्गनादानपि नागराऽङ्गनाः श्रवःपथेऽभ्यापततोऽभ्युपेत्य ताः ।
समुत्सुकाः स्वामिनमीक्षितुं रयात् समाययुः स्वस्वगवाक्षमालिकाम् ३१६
प्रतिष्ठते क्व प्रभुरेष सांप्रतं सुरेन्द्रदैत्येन्द्रनरेन्द्रसंवृतः ? ।
निगद्यतामालि ! मदग्रतः कयाचिदेवमुक्ता न्यगदत् सखी ततः ॥३१७॥
विहाय रत्नानि चतुर्दश प्रभुर्निधीन् नवाऽन्तःपुरमुत्तमश्रियः ।
सखि ! स्वयं सिद्धिसुखाय चेष्टते सनातनं शर्म तदस्ति यत्परम् ॥३१८॥
सखि ! प्रजाः स्वाश्चिरकाललालिता विमुञ्चतो मानसमस्य निष्ठुरम् ।
वितर्कयामीत्युदिता सखी जगौ महात्मनां नो ममता मता क्वचित्॥३१९॥
विवर्णनीया वरवर्णिनीषु सा किमालि ! नैवास्ति च सिद्धिवर्णिनी ।
जगत्त्रयस्याऽऽप्यपहाय वर्णिनीरयं प्रभुर्यां परिणेतुमुद्यतः ॥ ३२० ॥
अपक्षपातित्वविशेषदर्शनात् प्रभुत्वमेतस्य सखि ! प्रशस्यते ।
नरेन्द्रचक्रित्वरमाङ्गभोगवद् व्रतश्रियं यः परिरप्स्यते प्रभुः ॥ ३२१ ॥
इतीदृशीः पौरमृगीदृशां कथा नयन् श्रुतौ श्रोत्रसुखाः सुखाश्रयः ।
सदाफलैः शाखिभिराकुलं विभुर्वनं सहस्राम्रवणं समासदत् ॥३२२॥
( षड्भिः कुलकम् )

भाते गायदिवोरुकोकिलकुलैर्यत् पञ्चमोद्गारिभि-
र्वातान्दोलितवल्लरीचलदलैर्नृत्यत् प्रमोदादिव ।
मल्लीपुष्पविलोचनैर्विकासितैर्व्यालोकितुं स्वामिनं

---

१ दानम् ।

हर्षारूढसहस्रलोचजतुलां धर्तुं व्यवस्यद् ध्रुवम् ।। ३२३ ।।
ततो वनान्तः शिबिकाऽवरोहणं वितत्य विश्वैकविभूपणप्रभुः ।
प्रति प्रतीकं स विभूषणव्रजं मुमोच रोमाञ्चमधिश्रयन् स्वयम्।।३२४।।
कृष्णज्येष्ठचतुर्दशीतिथिदिनप्रान्ते यमर्क्षे सति
स्वामी सिद्धनमस्क्रियाप्रथमकं षष्ठं प्रपन्नस्तपः ।
कन्दान् मोहमहातरोरिव कचांस्तान् पञ्चभिर्मुष्टिभि-
र्मूलात् संसृतिकूलमाश्रित इव प्रोन्मूलयामासिवान् ।। ३२५ ।।
प्राव्राजीत् प्रभुमन्वगेव वसुधेशानां सहस्रं तदा
प्रापुर्नैरयिका अपि प्रियसुखाऽऽस्वादं तदा च क्षणम् ।
सुत्रामा सिचयाञ्चले विभुकचानादाय दायादव-
च्चिक्षेप क्षणमात्रकेण सुकृती क्षीराम्बुराशौ स्वयम् ।। ३२६ ।।
लोकानां तुमुलेऽतुलेऽथ हरिणा स्वीयाङ्गुलीसंज्ञया
व्यासिद्धे विधिवद् विभुः स विदधे सामायिकोच्चारणम् ।
स्यूतं चन्द्रकरैरिवातिविमलं सूक्ष्मं महाकोमलं
स्कन्धांशे विबुधेश्वरः स निदधे श्रीदेवदूष्यं प्रभोः ।। ३२७ ।।
ज्ञैरभ्यूहितमेव तद्विनिहितं स्कन्धे प्रभोस्तार्किकैः
किं पुण्याभ्युदयो यशःसमुदयो ध्यानं सितं वा किमु ? ।
मत्यादित्रयसंजिगीषु किमिदं तुर्यं मनःपर्यय-
ज्ञानं वाऽभ्युदितं चिराद् बहिरिवाऽप्राप्तप्रवेशं स्थितम् ?।।३२८।।
दीक्षामक्षयसौख्यदानरसिकां स्वीचक्रुषोऽस्य प्रभो-
र्गीर्वाणप्रभवो ललाटविलुलद्धस्तप्रशस्ताम्बुजाः ।
चक्रुः स्तोत्रमशेषविघ्नविपिनप्लोषक्रियोषर्बुधं
कैवल्यामृतवार्धिवर्धनविधौ पीयूषरोचिःप्रभम् ।।३२९।।
नो शक्नोति तव स्तवं रचयितुं सुत्राममन्त्री गुरु-
र्दैत्यानां गुरुरप्यबोधकलितः काव्यप्रकाशे तव ।
चाञ्चल्यं रसनाऽपि नः प्रथयति त्वद्वर्णने यत् प्रभो-
र्भक्तिस्तत्र जिनाऽपराध्यतितरां त्वत्पादपद्माश्रया ।। ३३० ।।
चक्रित्वेऽधिगते नवस्वपि निधिष्वेतेषु रत्नेष्वलं
संप्राप्तेषु चतुर्दशस्वपि गृहे वृद्धिं विलोक्याऽखिलाम् ।
आजन्मप्रकृतिप्रपन्ननिवसन्मत्यादिवित्तित्रय !

---

१ वह्निम् ।

न्यूनत्वापगमाय नूनमभजश्चारित्रमेतत् प्रभो ! ॥ ३३१ ॥

हिंसाऽपासनमात्रमारचयितुं मिथ्यावचः सर्वथा
त्यक्तुं पालयितुं परस्वविषयव्यावृत्तलौल्यं मनः ।
निःशेषं च परिग्रहं निरसितुं दीक्षेश ! कक्षीकृता
चेष्टन्ते न निरर्थकं कथमपि प्रायो हि युष्मादृशाः ॥ ३३२ ॥

प्रव्रज्या भवताऽऽदृता जिनपते ! जानीमहे सर्वतः
शौर्यं स्वस्य जगत्त्रयेऽपि विदितं कर्तुं च लोकोत्तरम् ।
कन्दर्पः प्रविहाय दर्पमखिलं संसेवनीयं सदा
त्वं च स्वं जनकं मनः क्वचन यद् युष्मद्धिया लीयते ॥३३३॥

साम्राज्यं प्रविहाय जीर्णतृणवद् युष्मादृशस्तादृशं
चारित्रं प्रतिपद्यते यदनघः संसारपारं गमी ।
क्षेत्रज्ञं प्रतिषेद्धुमक्षमतमो युक्तेरभावादसौ
तल्लौकायतिकः करोतु किमघं लोकं परं वा विदन् ? ॥३३४॥

दृष्ट्वा माध्यमिको भवन्तमपि किं नो जाज्वलीति क्रुधा
त्वत्सेवाऽप्रतिबद्धशुद्धमनसोऽप्यस्मान् समालोक्य वा ? ।
सिद्धान्तप्रतिपत्तिसक्तहृदयो नैव प्रमाणप्रमा-
मुख्यां स्वीकुरुते प्रवृत्तिमपि यो दुष्कर्मभिर्लोलितः ॥३३५॥

ज्ञाने मौनमिति न्यगादि विदुषा केनाऽपि शक्तौ क्षमा-
ऽपीत्येतद्द्वितयं त्वयि प्रथमतः साक्षाच्च साक्षात्कृतम् ।
यद्वा क्वानि भवन्ति नैव बहुधा रत्नानि रत्नाकरे
तेषां स्यादुपयोग एव महतां नानासमृद्धिस्पृशाम् ॥३३६॥

अस्माकं नयनानि नाथ ! सफलीभूतानि भूयांस्यपि
प्राप्तानल्पसमाधियोगिसुलभत्वद्रूपसंप्रेक्षणैः ।
ज्ञानं केवलमाप्य दुर्लभतमं धर्मोपदेशामृतैः
सत्यं पावयितासि तात ! सकलश्रोत्राणि नस्त्वं कदा ?॥३३७॥

इत्थं सर्वे सुरपरिवृढाः शान्तिनाथं जिनेन्द्रं
नुत्वा नत्वा प्रमदकलितास्तेऽथ नन्दीश्वरेऽपि ।
गत्वा कृत्वा बहुतरमहाष्टाहिकामृद्धिपूर्वं
भातं स्थानं निजनिजमयुर्नित्यकल्याणभावाः ॥३३८॥

आसीत् श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विज्ञानभाजां गुरुः ।
तच्छिष्येण कृते चतुर्दश इतः श्रीशान्तिवृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽयमीक्ष्यः सताम् ॥२३९॥

इति श्रीशान्तिनाथचरिते चतुर्दशः सर्गः समाप्तः ॥



अर्हम्

## अथ पञ्चदशः सर्गः ।



सद्बुद्धिप्रमुखैर्विभासितो विज्ञानैः स चतुर्भिराश्रितैः ।
सौधर्मेडिव लोकपालकैः श्रीशान्तिप्रभुरस्तु वः श्रिये ॥ १ ॥
स्वाम्यैर्यापथिकीं ततः श्रयन्नव्राजीद् दिवसे द्वितीयके ।
श्रीमद् मन्दिरनाम पत्तनं प्रालेयाचलतुङ्गमन्दिरम् ॥ २ ॥
अस्माकं भवनानि पारणं कृत्वाऽयं यदि पावयेदिति ।
स्वस्वागारबहिःस्थिताः सदा पौरा मार्गममार्गयन् प्रभोः ॥ ३ ॥
सर्वास्तानतिपत्य स प्रभुः सौधं प्राप सुमित्रभूपतेः ।
आकृष्टस्ततपुण्यसंपदा कल्पद्रुः परमस्य जङ्गमः ॥ ४ ॥
आयान्तं समवेक्ष्य तं नृपोऽभ्युत्थायाऽभ्युपगत्य संभ्रमात् ।
त्यक्तच्छत्रपवित्रचामरः प्राणंसीत् परमेश्वरं मुदा ॥ ५ ॥
प्राप्यं वित्तमनेकपुण्यतश्चित्तं श्रेयासि तत्र कस्यचित् ।
पात्रं पात्रमहो ! गुणश्रियां संपन्नं त्रितयं ममाधुना ॥ ६ ॥
तद् धन्योऽहमिति स्वचेतसा संचिन्त्योत्पुलकः प्रमोदतः ।
तीर्थेशं प्रतिलाभ्य पायसैर्भूपः कारयति स्म पारणम् ॥ ७ ॥
प्रोच्चैः शारदकौमुदीसितक्षैरेयीभृतपाणिसंपुटः ।
इत्यावेदयति स्म वा जिनः शुक्लध्यानमिदं करे मम ॥ ८ ॥
तारं दुन्दुभयोऽनदन्नथ प्रावृट्कालबलाहकस्वनाः ।
पुण्यौघं भुवनेषु विश्रुतं कुर्वाणा इव मित्रभूपतेः ॥ ९ ॥

गीर्वाणाः परितुष्टमानसा रत्नानां किल वृष्टिमादधुः ।
सौधे तस्य महार्घतामिवाऽतुल्यां प्रापयितुं तदा ध्रुवम् ॥ १० ॥
सौधं तद् महनीयमादराद् देवानामपि यत्र तीर्थकृत् ।
एतीति त्रिदशास्तदङ्गणे कुर्वन्ति स्म सुमौघवर्षणम् ॥ ११ ॥
संतापो भवपातसंभवो मा भूदस्य मनस्विनः परम् ।
इत्युर्वीन्द्रनिकेतनं सुराः सिञ्चन्ति स्म सुगन्धवारिभिः ॥ १२ ॥
अस्माकं भवदात्मवासनाः संक्रामन्तु महीन्द्र ! कर्हिचित् ।
अस्वप्नाः प्रभुपारणक्षणे चेलोत्क्षेपमितीव चक्रिरे ॥ १३ ॥
इत्यानन्दपरीतनागरात् तस्माद् मन्दिरपत्तनादयम् ।
संतोषेण विधाय पारणामन्यत्र व्यहरज्जिनेश्वरः ॥ १४ ॥
आक्रान्ता जिनपादपङ्कजैर्नोल्लङ्घ्याऽस्तु धरा नृणामियम् ।
इत्याधायि नृपेण पारणाभूमौ तत्र च रत्नपीठकम् ॥ १५ ॥
धर्मः कुत्रचन प्रवर्तते कस्मिन् नाप्युपवर्तते न्विति ? ।
विज्ञातुं व्यहरद् विभुर्भुवं विज्ञानां न मुधा प्रवृत्तयः ॥ १६ ॥
निद्रां नैव बभाज कर्हिचिज्जानन् मौनमसेवत प्रभुः ।
निःसङ्गो निषसाद न क्वचिद् निन्ये वत्सरमेवमेककम् ॥ १७ ॥
राज्यं चक्रिपदं ततो व्रतं तुर्यं ज्ञानमिदं समासदम् ।
यस्यां जन्मभुवीत्यवेत्य स प्रापत् तामथ हस्तिनापुरम् ॥ १८ ॥
साहस्राम्रवणाभिधे वने तस्मिन् नन्दितरोस्तलेऽमलम् ।
शुक्लध्यानमधिश्रितस्तपः षष्ठं चापि विघातिकर्मकः ॥ १९ ॥
पौषे मासि सिते तिथौ नवम्याख्याते भरणीगते विधौ ।
ज्ञानं पञ्चममाप केवलं लोकालोकविभासकं विभुः ॥ २० ॥
(युग्मम्)
आलोकेन विसर्पिणाऽभितः सर्वा एव दिशश्चकासिरे ।
वाता वान्ति सुखाः स्म तत्क्षणं प्रापुः शर्म च नारका अपि ॥ २१ ॥
पीठानि प्रचकम्पिरे तदा शक्राणां सुखलालितात्मनाम् ।
शङ्के पञ्चमवित्प्रभावनाप्रस्थानेशवियोगशङ्कया ॥ २२ ॥
सेन्द्रास्तत्र सुराः समागमन् हर्षोत्कर्षभृतोऽथ वाहनैः ।
जात्याष्टापदतुल्यलोचनभ्राज्यष्टापदसिंहगोमुखैः ॥ २३ ॥

आसीत् श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विज्ञानभाजां गुरुः ।
तच्छिष्येण कृते चतुर्दश इतः श्रीशान्तिवृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽयमीक्ष्यः सताम् ॥३३९॥

इति श्रीशान्तिनाथचरिते चतुर्दशः सर्गः समाप्तः ॥



अर्हम्

## अथ पञ्चदशः सर्गः ।



सद्बुद्धिप्रमुखैर्विभासितो विज्ञानैः स चतुर्भिराश्रितैः ।
सौधर्मेडिव लोकपालकैः श्रीशान्तिप्रभुरस्तु वः श्रिये ॥ १ ॥
स्वाम्यैर्यापथिकीं ततः श्रयन्नव्राजीद् दिवसे द्वितीयके ।
श्रीमद् मन्दिरनाम पत्तनं प्रालेयाचलतुङ्गमन्दिरम् ॥ २ ॥
अस्माकं भवनानि पारणं कृत्वाऽयं यदि पावयेदिति ।
स्वस्वागारबहिःस्थिताः सदा पौरा मार्गममार्गयन् प्रभोः ॥ ३ ॥
सर्वांस्तानतिपत्य स प्रभुः सौधं प्राप सुमित्रभूपतेः ।
आकृष्टस्ततपुण्यसंपदा कल्पद्रुः परमस्य जङ्गमः ॥ ४ ॥
आयान्तं समवेक्ष्य तं नृपोऽभ्युत्थायाऽभ्युपगत्य संभ्रमात् ।
त्यक्तच्छत्रपवित्रचामरः प्राणंसीत् परमेश्वरं मुदा ॥ ५ ॥
प्राप्यं वित्तमनेकपुण्यतश्चित्तं श्रेयसि तत्र कस्यचित् ।
पात्रं पात्रमहो ! गुणश्रियां संपन्नं त्रितयं ममाधुना ॥ ६ ॥
तद् धन्योऽहमिति स्वचेतसा संचिन्त्योत्पुलकः प्रमोदतः ।
तीर्थेशं प्रतिलाभ्य पायसैर्भूपः कारयति स्म पारणम् ॥ ७ ॥
प्रोच्चैः शारदकौमुदीसितक्षैरेयीभृतपाणिसंपुटः ।
इत्यावेदयति स्म वा जिनः शुक्लध्यानमिदं करे मम ॥ ८ ॥
तारं दुन्दुभयोऽनदन्नथ प्रावृट्कालबलाहकस्वनाः ।
पुण्यौघं भुवनेषु विश्रुतं कुर्वाणा इव मित्रभूपतेः ॥ ९ ॥

गीर्वाणाः परितुष्टमानसा रत्नानां किल वृष्टिमादधुः ।
सौधे तस्य महार्घतामिवाऽतुल्यां प्रापयितुं तदा ध्रुवम् ॥ १० ॥
सौधं तद् महनीयमादराद् देवानामपि यत्र तीर्थकृत् ।
एतीति त्रिदशास्तदङ्गणे कुर्वन्ति स्म सुमौघवर्षणम् ॥ ११ ॥
संतापो भवपातसंभवो मा भूदस्य मनस्विनः परम् ।
इत्युर्वीन्द्रनिकेतनं सुराः सिञ्चन्ति स्म सुगन्धवारिभिः ॥ १२ ॥
अस्माकं भवदात्मवासनाः संक्रामन्तु महीन्द्र ! कर्हिचित् ।
अस्वप्नाः प्रभुपारणक्षणे चेलोत्क्षेपमितीव चक्रिरे ॥ १३ ॥
इत्यानन्दपरीतनागरात् तस्माद् मन्दिरपत्तनादयम् ।
संतोषेण विधाय पारणामन्यत्र व्यहरज्जिनेश्वरः ॥ १४ ॥
आक्रान्ता जिनपादपङ्कजैर्नोल्लङ्घ्याऽस्तु धरा नृणामियम् ।
इत्याधायि नृपेण पारणाभूमौ तत्र च रत्नपीठकम् ॥ १५ ॥
धर्मः कुत्रचन प्रवर्तते कस्मिन् नाप्युपवर्तते न्विति ?।
विज्ञातुं व्यहरद् विभुर्भुवं विज्ञानां न मुधा प्रवृत्तयः ॥ १६ ॥
निद्रां नैव बभाज कर्हिचिज्जानन् मौनमसेवत प्रभुः ।
निःसङ्गो निषसाद न क्वचिद् निन्ये वत्सरमेवमेककम् ॥ १७ ॥
राज्यं चक्रिपदं ततो व्रतं तुर्यं ज्ञानमिदं समासदम् ।
यस्यां जन्मभुवीत्यवेत्य स प्रापत् तामथ हस्तिनापुरम् ॥ १८ ॥
साहस्राम्रवणाभिधे वने तस्मिन् नन्दितरोस्तलेऽमलम् ।
शुक्लध्यानमधिश्रितस्तपः षष्ठं चापि विघातिकर्मकः ॥ १९ ॥
पौषे मासि सिते तिथौ नवम्याख्याते भरणीगते विधौ ।
ज्ञानं पञ्चममाप केवलं लोकालोकविभासकं विभुः ॥ २० ॥
(युग्मम्)

आलोकेन विसर्पिणाऽभितः सर्वा एव दिशश्चकासिरे ।
वाता वान्ति सुखाः स्म तत्क्षणं प्रापुः शर्म च नारका अपि ॥ २१
पीठानि प्रचकम्पिरे तदा शक्राणां सुखलालितात्मनाम् ।
शङ्के पञ्चमवित्प्रभावनाप्रस्थानेशवियोगशङ्कया ॥ २२ ॥
सेन्द्रास्तत्र सुराः समागमन् हर्षोत्कर्षभृतोऽथ वाहनैः ।
जात्याष्टापदतुल्यलोचनभ्राज्यष्टापदसिंहगोमुखैः ॥ २३ ॥

देवास्तत्र मरुत्कुमारका हर्षाद् योजनमात्रभूतले ।
धन्यंमन्यहृदः समन्ततः पुण्यानामुदये रजोऽहरन् ॥ २४ ॥
सिञ्चन्ति स्म सुगन्धिवारिभिस्तां भूमिं जलभृत्कुमारकाः ।
पुंसां तत्र निषेदुषां ध्रुवं संतापाऽपनिनीषयाऽभितः ॥ २५ ॥
एतां व्यन्तरनिर्जरास्ततोऽबध्नन् रत्नसुवर्णराजिभिः ।
आत्मानं सहसा व्यमोचयंस्ते बुद्ध्यैव कुकर्मबन्धतः ॥ २६ ॥
पुष्पाण्यत्र ततः प्रचिक्षिपुर्याववद्वर्णमयानि ते सुराः ।
विश्वार्च्यं नमतां जिनेश्वरं सिद्धानीव फलानि भाषितुम् ॥ २७ ॥
प्रेङ्खद्वन्दनमालिका व्यधुर्देवास्तोरणमालिकास्तके ।
प्रत्याशं विलसत्कषायकश्रीणां दुर्धरपाशरज्जवः ॥ २८ ॥
उच्चस्तम्भकशालभञ्जिका रेजुस्तासु महाद्भुतश्रियः ।
विद्याधर्य इवाऽऽगताः पुरा श्रोतुं तीर्थकरस्य देशनाम् ॥ २९ ॥
तासूच्चैर्मकरावली तथाऽभाद् गारुत्मतरत्नमय्यसौ ।
जानानेति जिनस्य देशनापीयूषाम्बुनिधौ न भीर्मम ॥ ३० ॥
तस्या ऊर्ध्वविभागमाश्रिता रेजे च्छत्रचतुष्टयी भृशम् ।
संघस्याऽपि चतुर्विधस्य यत् स्थास्याम्यूर्ध्वमिदंमदादिव ॥ ३१ ॥
उद्धूता मृदुना नभस्वता रेजुस्तोरणमूर्धसु ध्वजाः ।
पापं वेक्ष्यति नात्र केवलं संज्ञां दातुमिवोद्यता इति ॥ ३२ ॥
अष्टौ माङ्गलिकानि तोरणाऽधस्तादुच्चधरासनोच्चये ।
प्रत्येकं विदधुर्दिवौकसः सिद्धीरासयितुं श्रुता इव ॥ ३३ ॥
क्ष्मापीठेऽथ समुन्नते व्यधुः शालं कल्पनिवासिनोऽमराः ।
रत्नैरच्छतमैर्जिनेशितुर्भक्त्या शक्तिवशादिवाशयैः ॥ ३४ ॥
तस्मिन् सा कपिशीर्षमण्डली नानारत्नमयी व्यराजत ।
देवानां स्वसमीक्षणे ययाऽक्लेशं दर्पणमण्डलायितम् ॥ ३५ ॥
ज्योतिष्का वरणं च तद्बहिश्चक्रुः स्वर्णमयं द्वितीयकम् ।
तीर्थाधीश्वरपर्युपासनारागैरेव हृदां विनिर्मितम् ॥ ३६ ॥
तत्राऽभात् कपिशीर्षसन्ततिर्भास्वद्रत्नमयी तमो घ्नती ।
सर्वद्वीपदिनेशमण्डली हर्तुं यद् मिलिताऽपि नाऽशकत् ॥ ३७ ॥
आतेने भवनाधिपैर्बहिर्वप्रो रूप्यमयस्तृतीयकः ।

शक्तिं प्राप्तुमिनात् क्ष्माधृतौ शेषः कुण्डलनामिवाऽऽगतः ॥ ३८ ॥
विभ्रेजे कपिशीर्षसंहतिस्तस्मिन् हेममयी महाद्युतिः ।
ताराणामुपवेशनाय या पीठश्रेणिरिवातिभास्वरा ॥ ३९ ॥
द्वाराणि प्रतिवप्रमाबभुश्चत्वार्येकसमानि मानतः ।
अत्र द्वादश पर्षदः सुखं वेक्ष्यन्तीति कृताऽऽकृतेरिव ॥ ४० ॥
ये लक्षेष्वथवाऽपि कोटिषु द्रव्येष्वेव भवन्ति हर्म्यिणाम् ।
तैरुद्भासितमूर्तयो ध्वजै रेजुस्तेषु विचित्रतोरणाः ॥ ४१ ॥
स्फूर्जद्धूमसमूहदम्भतो मेघाडम्बरमम्बराङ्गणे ।
तन्वाना नवधूपसंभृता गर्गर्यो विबभुस्तदग्रतः ॥ ४२ ॥
वाप्यः स्वर्णसरोरुहाः प्रतिद्वारं निर्ममिरेऽमरैस्ततः ।
स्नायं स्नायममी जना जिनं पद्मैरत्र महेयुरित्यथ ॥ ४३ ॥
देवच्छन्दममन्दभक्तयो विश्रामाय सुरा जिनेशितुः ।
ऐशान्यां मणिभिर्वितेनिरे मध्येऽष्टापदवप्रमुत्तमैः ॥ ४४ ॥
प्राक्प्राकारसहस्रनेत्रदिग्द्वारे स्वर्णविभाविभासिनौ ।
द्वौ वैमानिकनाकिनौ प्रतीहारत्वं दधतुर्महौजसौ ॥ ४५ ॥
शुक्लध्यानविवर्णिकामिव प्रादुष्कृत्य निदर्शयत्तमौ ।
मुक्तौ व्यन्तरनिर्जरावपाग्द्वारे द्वारपतित्वमूहतुः ॥ ४६ ॥
ज्योतिष्कावतिकिंशुकद्युती द्वाःस्थत्वं कलयाम्बभूवतुः ।
प्रत्यग्द्वारि सुरौ प्रवेक्ष्यतां लोकानामिव रागधित्सया ॥ ४७ ॥
द्वारे चोत्तरदिग्व्यवस्थितौ नीलाङ्गौ भुवनेश्वरौ सुरौ ।
वेत्रित्वं बिभराम्बभूवतुः को वा युक्तमुपेक्षते कृती ? ॥ ४७ ॥
रैवप्रस्य ततश्चतुर्ष्वपि द्वारेषु प्रथमक्रमेण च ।
देव्योऽस्थुर्विजया जयाऽजिता तुर्या श्रीविजयाऽपराजिता ॥ ४९ ॥
एताः पाशसृणी करद्वयेऽन्यस्मिन्निर्भयमुद्गरौ तथा ।
बिभ्राणास्तुहिनांशुपद्मरैफुल्लेन्दीवरपीवरात्विषः ॥ ५० ॥

( युग्मम् )

द्वारेषु स्थितवांस्तृतीयकप्राकारस्य चतुर्षु तुम्बुरुः ।
खट्वाङ्गीनरमुण्डमालितः कोटीरोरुजटाविभूषितः ॥ ५१ ॥
प्राकारप्रथमस्य मध्यतोऽकार्षुश्चैत्यतरुं वनामराः ।

विंशत्यूनधनुर्महाव्रतसंख्याख्यातशतोच्छ्रयं प्रथुम् ॥ ५२ ॥
चैत्यद्रोरध एव पीठकं नानारत्नमयं च चक्रिरे ।
गीर्वाणाधिपकार्मुकोच्चयं संगृह्येव च नैकवर्णभम् ॥ ५३ ॥
तेनुश्छन्दकमा वनामरास्तस्योपर्यमलैर्मणिव्रजैः ।
त्रैलोक्याक्षिषडंह्रिनीरजच्छायं कान्तिनिरस्तभास्करम् ॥ ५४ ॥
तस्यान्तर्मणिभिर्व्यधुः सुरा रत्नैः प्राङ्मुखसिंहविष्टरम् ।
श्रीवत्साङ्कितविग्रहेव सा भूमिर्येन बभौ विभाविता ॥ ५५ ॥
तस्याधः पद्पीठमद्भुतैर्माणिक्यैर्विरराज निर्मितम् ।
श्रीसिंहासनराजनायकस्याऽग्रे यद् युवराजतां दधौ ॥ ५६ ॥
त्रैलोक्यप्रभुतामिव प्रभोर्दृष्ट्वाऽनन्तरमेव बोधयत् ।
तत्राऽऽपूर्णसुधांशुमण्डलं छत्राणां त्रितयं व्यभासत ॥ ५७ ॥
रेजाते सुतरां प्रकीर्णके हस्तस्थे वटवासिनोः श्रिते ।
साधुश्रावकवर्गयोर्ध्रुवं धर्मौ तन्मिषतः पुरास्थितौ ॥ ५८ ॥
स्वर्णाब्जस्थितधर्मचक्रकं द्वारे पातकघातकं बभौ ।
शेषं यत्करणीयमत्र तत् सर्वं व्यन्तरनिर्जरा व्यधुः ॥ ५९ ॥
श्रीशान्तिर्भगवांश्चतुर्विधैः कोटाकोटिभिरावृतः सुरैः ।
आप्तोऽथो समवादिमे सृतिस्थाने प्रास्थित स स्थितिं विदन् ॥ ६०
अग्रे शान्तिविभोर्विकुर्वते स्माऽथ व्यन्तरनिर्जरा नव ।
हेमाब्जानि विकस्वराणि नु द्रष्टुं साम्यमिवाऽङ्गशोभया ॥ ६१ ॥
तेष्वंह्री न्यधित द्वयोर्द्वयोरादावेव चलन् जगद्गुरुः ।
सप्तान्यानि पुरः पुरः सुरा भक्त्याढ्याः समचारयन् रयात् ॥ ६२
स्वर्णाब्जानि पदोरधःस्थितान्यालोक्य ब्रुवते स्म निर्जराः ।
निर्ग्रन्थाऽऽलिशिरोऽवतंसकः स्वर्णाधःकरणादभूद् विभुः ॥ ६३ ॥
राजन् सोऽतिशयैरुदित्वरैर्नित्यज्ञानविभासुराकृतिः ।
प्राग्द्वारा समवादिमं सृतिस्थानं प्राविशदाऽऽश्रयः श्रियाम् ॥ ६४ ॥
चैत्यद्रुं स ततः प्रदक्षिणीकृत्याऽर्हन् शमतैकदक्षिणः ।
श्रीतीर्थाय नमो नमः सदेत्यूचे भाद्रपदाम्बुदध्वनिः ॥ ६५ ॥
नाथेऽथाऽमरनाथदिग्मुखं सत्येव श्रितसिंहविष्टरे ।
देवैर्दिक्ष्वपरासु तेनिरे भर्तुर्मूर्तिसमाख्यिमूर्तयः ॥ ६६ ॥

देहैर्व्यन्तरनिर्मितैः स तैर्व्यद्योतिष्ट विभुश्चतुर्वपुः ।
व्याख्यातुं युगपच्चतुर्विधं धर्मं संघमथेव शासितुम् ॥ ६७ ॥
तत् स्थानं न विवर्ण्यते कथ दृश्यं यत्र विरोधनाम न ? ।
चित्रं पश्यत देवदानवास्तस्थुः प्रीतिभृतो वयस्यवत् ॥ ६८ ॥
देशत्यागमिव प्रवर्तयन्नन्तर्वैरिगणस्य पाप्मनः ।
आकाशे प्रणनाद दुन्दुभिः स्वाम्यैश्वर्यमिव प्रकाशयन् ॥ ६९ ॥
व्यभ्राजिष्ट सुरेश्वरध्वजः प्राकारत्रितयीपुरःसरः ।
कीर्तिस्तम्भ इवोपसर्पतां भव्यानां सुकृताधिवासिनाम् ॥ ७० ॥
स्वर्वासिप्रमदाः प्रमोदतः प्राग्द्वारेण कृतप्रवेशनाः ।
दत्त्वा त्रित्वमिताः प्रदक्षिणास्तीर्थे तीर्थपतिं प्रणम्य च ॥ ७१ ॥
आग्नेय्यां दिशि तस्थुरूर्ध्वका मुक्त्वा साधुजनार्यिकास्थितिम् ।
तन्मध्येऽवधिबोधबन्धुराः किं जानन्ति न तादृशाः खलु ? ॥ ७२ ॥
(युग्मम्)

शेषं तच्च निकायनायकस्त्रैणं याम्यदिशा प्रविश्य च ।
पूर्वं पूर्वविधिं यथास्थितं कृत्वा चास्थित नैर्ऋते क्रमात् ॥ ७३ ॥
ज्योतिष्का भवनाधिपास्तथा सर्वे व्यन्तरनिर्जराः पुनः ।
प्रत्यग्द्वारकृतप्रविष्टयो वायव्यां स्थितिवेदिनः स्थिताः ॥ ७४ ॥
कौबेर्या ककुभा प्रवेशनं कृत्वा तीर्थपतिं विनम्य च ।
देवाः कल्पनिवासिनो नरा नार्यश्चेशदिशि स्थितिं व्यधुः ॥ ७५ ॥
नासीदत्र भयं न दुष्कथा मात्सर्यं न च किञ्चन क्वचित् ।
आबाधाऽपि न नो नियन्त्रणा तीर्थाधीशमहाप्रभावतः ॥ ७६ ॥
वप्रस्याऽऽद्यपरस्य मध्यतः पारीन्द्रद्विरदादयोऽखिलाः ।
तिर्यञ्चोऽपि यथासुखं मिथस्तस्थुः प्रेमभरोद्धुराशयाः ॥ ७७ ॥
अन्तप्रान्तिमवप्रमासत क्ष्मापालामरदेवविद्विषाम् ।
यानान्यक्षतकानि संकटेऽपीड्योऽयं महिमा महेशितुः ॥ ७८ ॥
श्रीचक्रायुधभूपुरन्दरं वेगादेत्य वनाद् वनाऽवनाः[1] ।
त्रैलोक्यप्रभुनित्यकेवलोत्पत्त्याऽथ प्रयता व्यवर्धयन् ॥ ७९ ॥
सत्कृत्याऽवनिपालपुङ्गवस्तान् सर्वांश्च वनीपतीनथ ।

---
१ वनरक्षकाः ।

नन्तुं तीर्थपतिं रयादयाज्ञः को वा सुकृते प्रमाद्यति ?॥ ८० ॥
औदीच्यं सुकृतालयस्य तद् द्वारं प्राप वसुन्धरापतिः ।
कृत्वा वैनयिकीं क्रियां स्वयं पञ्चैवाऽभिगमांश्च सोऽविशत् ॥ ८१ ॥
सर्वज्ञ ! त्वदुपासनां विना भ्रान्तोऽहं कुगतित्रये पुरा ।
भूपालः कथयन्निति प्रभोस्तिस्रः स प्रददौ प्रदक्षिणाः ॥ ८२ ॥
आनन्दं परमं निरत्ययं संप्राप्स्यामि जिनेशदर्शनात् ।
किं मेऽनेन विचिन्त्य चेतसेत्यानन्दाश्रु लुलोप पार्थिवः ?॥ ८३ ॥
स्वर्णाथोऽवनिनाथकुञ्जरोऽप्येषोऽथ प्रणिपत्य भक्तितः ।
निर्मायाऽञ्जलिमात्ममूर्धनि स्तोतुं प्राक्रमतैवमीश्वरम् ॥ ८४ ॥
जीवस्येव मतिर्न यद्यपि स्वामिन् ! मे रसनासहस्रकम् ।
शेषस्येव मुखे, तथाऽपि ते कांश्चित् स्तौमि गुणांस्त्वदाश्रितः ॥ ८५
कर्माण्यष्ट जिनेन्द्र ! सर्वथा नीतानि प्रशमं त्वयौजसा ।
तार्क्ष्येणेव कुलानि भोगिनां नित्यानन्दनिवर्तकान्यलम् ॥ ८६ ॥
मोहोऽयं भवता विनिर्जितः सर्वत्राऽस्खलितोरुविक्रमः ।
प्राकाम्यं यदिवा बिभर्ति नो शार्दूलः किमु सिंहनिर्जये ? ॥ ८७ ॥
वाणी ते भुवनोपकारिणी गङ्गेवाऽधिरजोऽपहारिणी ।
आसाद्याऽचलमुत्तमं पदं भव्यान् श्रौतपथाद् निवर्तते ॥ ८८ ॥
श्रीशान्ते ! तव नाम कामितं भव्यैः संस्मृतमातनोति यत् ।
चित्रं तत्र न यत् सुरद्रुमो देवानामपि तद् विचेतनः ॥ ८९ ॥
ब्रह्मादिष्वपि दैवतेषु मे चित्तं त्वत्पदपद्मसेवने ।
रोलम्बस्य यथैव मल्लिकापुष्पौघेष्वपि मालतीसुमे ॥ ९० ॥
सेवन्ते तव येंह्रिपङ्कजं ते स्युः श्रीगुणभद्रसूरयः ।
ये ध्यायन्ति भवन्तमादरात् तेषां किञ्चन नास्ति दुर्लभम् ॥ ९१
राज्यं शान्तिजिन ! त्वदर्थये नाहं चक्रिपदं च तादृशम् ।
स्वाराज्यं विबुधस्तुतं च नो त्वत्सेवामनिशं भवे भवे ॥ ९२ ॥
इत्याध्याय सुरेन्द्रपार्थिवौ भर्तुः संस्तवनं गुणोज्ज्वलम् ।
मूर्ध्नः स्वस्य तदोत्तमाङ्गतां भूयः कर्तुमिव प्रणेमतुः ॥ ९३ ॥
उद्धर्तुं भविकान् भवाम्बुधेः पोते सत्यपि मज्जतो भृशम् ।
पञ्चत्रिंशदहार्य्यगीर्गुणां प्रारेभेऽथ स धर्मदेशनाम् ॥ ९३ ॥

संपद्वर्धनहेतुदक्षिणावर्तं शङ्खमिवातिनिर्मलम् ।
चिन्तारत्नमिवेप्सितप्रदं मानुष्यं परमस्ति दुर्लभम् ॥ ९५ ॥
लब्ध्वा तत् सुकृतेन भूयसा सर्वार्थप्रतिपत्तिसाधनम् ।
संसारभ्रमसंनिबन्धनं भव्याः ! संत्यजत प्रमादकम् ॥ ९६ ॥
रे ! त्वं याहि कुरु प्रयोजनं निर्दिष्टं मयका यदस्ति ते ।
ईदृग्वाक्श्रवणं प्रमादतः केषाञ्चित् सदृशेऽप्यहो ! भवे ॥ ९७ ॥
प्रेष्यत्वं परकर्मवृत्तिता दौर्विध्यं परितोऽपमानता ।
दौर्भाग्यं प्रियविप्रयोगताऽनिष्टं किं न भवेत् प्रमादतः ? ॥ ९८ ॥
कैवल्यस्य सुखानि कस्य न स्वायत्तानि भवेयुरङ्गिनः ? ।
यद्येतेऽत्र चतुर्गतिप्रिया रुन्ध्युर्वर्त्मनि नो कषायकाः ॥ ९९ ॥
संसारस्य महानियोगिनश्चत्वारः प्रबलाः कषायकाः ।
क्षान्त्यादिप्रमुखैर्महाभटैर्जित्वैतान् जन एति निर्वृतिम् ॥ १०० ॥
पूज्यं नो पितरं न मातरं ज्येष्ठं भ्रातरमेव नाङ्गजम् ।
नैव स्वामिनमेव मन्यते क्रोधावेशवशंवदः पुमान् ॥ १०१ ॥
प्रीतिं यश्चिरकालपालितां प्रध्वंसं नयति क्षणादपि ।
स्वर्भानुः शशभृत्कलामिव क्रोधं तं विदधीत कः सुधीः ? ॥ १०२ ॥
सर्वाण्येव तपांसि भस्मसात् कर्तुं यस्य पुनः प्रगल्भता ।
दारूणीव कृपीटजन्मनः कस्तं क्रोधमपाकरोतु न ? ॥ १०३ ॥
ज्ञानं यत्र न चावभासते निःशेषार्थविबोधनक्षमम् ।
भास्वद्बिम्बमिवाम्बुदोदये मानं कः सुकृती तमाश्रयेत् ? ॥ १०४ ॥
राज्ये स्थापितमुत्तमैर्गुणैरागत्य स्वत एव रञ्जितैः ।
निःशङ्को विनयं निहन्ति यस्तं मानं वितनोतु को बुधः ? ॥१०५॥
आरूढः किल गर्वपर्वतं सर्वं खर्वमवेक्षते परम् ।
नाभ्युत्थानकथां करोति नाऽभ्यायाते गुरुबान्धवेऽपि यः ॥ १०६ ।
मानं यस्तनुते स माननां राजादेर्न कदाऽपि विन्दति ।
दुःखान्येव हि दुर्गदुर्गतौ शोचन् संविनयं विना मृतः ॥ १०७ ॥
मायां मुग्धजनानुरञ्जिकां पण्यस्त्रीमिव दूरतोऽपि ये ।
नोज्झन्त्यैहिकपारलौकिकस्वार्थं ते गमयन्ति निश्चितम् ॥ १०८ ॥
माया कुण्डलिनीव यैः परिस्पृष्टा दौष्ट्यविषा दुराग्रहा ।

दृष्टास्ते ननु पुण्यजीवितं निर्मूलं पुनराप्नुवन्ति न ॥ १०९ ॥
ये पुण्यं परलोकसाधनं मन्यन्ते मनुजा विवेकिनः ।
ते मायां क इव प्रकुर्वतां पापं यत्परविप्रतारणे ?॥ ११० ॥
मायामार्जवमन्तरेण यो निर्जेतुं क्षमते महामतिः ।
आदत्ते खलु पद्मनागिनीं विद्यां जाङ्गुलिकीं विनैव सः ॥ १११ ॥
हिंसामातनुतेऽनृतं वदत्यादत्ते स्वमदत्तमेव ना ।
अन्यस्त्रीमयते परिग्रहं पापं किं न करोति लोभतः ? ॥ ११२ ॥
लोभं दुःखनिदानमेककं मत्वा प्रोज्झत सिद्धिसिद्धये ।
संतोषं सुखकारणं बुधाः ! सत्यं स्वीकुरुतात्र तद्विदे ॥ ११३ ॥

जन्मस्थानमहीध्रविन्ध्यविरहो रेवाजलक्रीडना-
ऽभावः प्रेमवशंवदाशयवशासंयोगभोगक्षयः ।
यत्तीक्ष्णाङ्कुशताडनं दृढतरायःशृङ्खलाबन्धनं
तत्सर्वं करिणां दुरन्तविषयाऽऽकाङ्क्षासमुत्थं फलम् ॥ ११४ ।

शृङ्गारप्रभवस्य केतनतया यः ख्यातिमालम्बते
नीरक्षीरविवेककौशलकला यस्यास्ति सा हंसवत् ।
योऽस्ताघे सलिलाशये विचरति स्वच्छे सतां चित्तव-
ज्जालान्तर्विनिपत्य मृत्युमयते मत्स्यः स लोलोत्कटः ॥११५॥

मालत्याः कुसुमं विकाशि सरसं संत्यज्य गन्धोद्धुरं
तत् तादृक्सहकारकोरकरसप्राग्भारमुत्सृज्य च ।
मातङ्गस्य कपोलके विनिपतन् गन्धातिलोभादलि-
र्नित्यं चञ्चलकर्णतालनिहतः प्राप्नोति मृत्युं जवात् ॥११६॥

पादा यस्य विरिञ्चिना विरचिताः षट् पक्षिमर्त्यानडु-
ज्जातिभ्योऽभ्यधिकाश्चिरं विचरणव्यापारसंपत्तये ।
पक्षा यस्य विपक्षलक्षविहतौ चत्वार एवावनौ
रोलम्बः स विपत्तिमेति नियतं हा ! गन्धलोभादयम् ॥ ११७

( संदानितकम् )

चक्षुर्दूषणमेतदेव यदि नो जायेत चाऽऽजन्मनो
यत्प्रेक्षारसिकत्वमुत्सुकतया यद् विभ्रमाऽखण्डनम् ।
तत् किं पक्षपरिग्रहेऽपि सबले दीपं सुवर्णात्मना

जानन्नेव निपत्य मङ्क्षु शलभः पञ्चत्वमेवाप्नुयात् ?॥११८॥

विद्वांसः प्रवदन्ति यं किल जगत्प्राणस्य यानं परं
स्वप्राणानवितुं सुधांशुमभजन् पीयूषलिप्सुश्च यः।
नेत्राणामबलाजनस्य समता यल्लोचनैर्वर्ण्यते
गीताकर्णनलोलकर्ण इह स व्याधैः शरैर्हन्यते ॥ ११९ ॥

एकैको विषयस्ततोऽतिनिधनं चैवं समालिङ्गितः
पञ्चत्वाय भवन्ति पञ्च न कथं संसेवितास्ते समम् ?।
तस्मात् संयमरत्नतस्करनिभानेतान् विजेतुं जनाः !
संस्थाप्यैव विवेकयामिकमहो ! कैवल्यमालम्ब्यताम् ॥१२०॥

करणनिकरस्वैरीभावप्रवर्तनसंमिल-
द्विषयविमुखं चेतो यावद् बुधाः ! न विधास्यथ।
कुगतिगमनं रोद्धुं शक्तं जिनेश्वरभाषितं
कथमपि सितं तावद् धर्मं स्फुटं किमवैष्यथ ? ॥ १२१ ॥

नेत्रत्रयेणैव हिमांशुमौलिः शक्तित्रयेणैव महीमहेन्द्रः।
गुप्तित्रयेणैव महाव्रतीड्यो धर्मोऽपि रत्नत्रितयेन भाति ॥ १२२ ॥

संवेदनं सम्यगथापि दर्शनं चारित्रमेतानि शिवस्य पद्धतिः।
रत्नत्रयत्वेन जिनैरुदाहृतान्युद्भूतपापक्षयसंनिबन्धनम् ॥ १२३ ॥

निर्वान्ति स्म विमुक्तरागविषया निर्वान्ति चान्ये तथा
निर्वास्यन्ति जना जिनोदितमहारत्नत्रयाराधनात्।
तस्मात् सम्यगिदं विबुध्य भविकाः ! ध्यानैकतानं मनः
कृत्वैवाचरतोग्रकर्मनिहतौ ब्रह्मास्त्रकल्पं बुधाः ! ॥ १२४ ॥

इत्याकर्ण्य सकर्णमौलिमुकुटालङ्कारहीरप्रभः
श्रीचक्रायुधभूपतिर्जिनपतेर्वाचं सुधासोदराम्।
विज्ञो विज्ञपयाम्बभूव भगवन् ! मोहान्धकारच्छिदा-
धाने शारदसूरधामरुचिभं देहि व्रतं मे प्रभो ! ॥ १२५ ॥

राजंस्त्वं मा प्रमादीरिति स भगवतोदीरितः सद्म गत्वा
पुत्रं राज्ये निधाय प्रकटितविनयं भूरि भूरि[1] प्रदाय।
हस्त्यारूढः समेत्य प्रणतगुरुपदस्तात ! निस्तारयेति

---

१ भूमिं च धनं च।

प्रोच्चैः प्रोच्चार्य वाचं सुकृतकृतमना राडुपादत्त दीक्षाम् ॥१२६

पञ्चत्रिंशत् तदानीं वचनमिव विभोः सद्गुणा भूमिपाला
राजर्षिं दीक्षया तं शिवपदसुहृदोऽनु व्रजन्ति स्म धन्याः ।
तेषां चक्रायुधादिप्रवरगणभृतां शान्तिरुत्पादनाश-
ध्रौव्यप्रख्यातरूपं त्रितयमथ विभुर्व्याचचक्षे पदानाम् ॥१२७।

षट्त्रिंशद्गुणधारिभिर्गणधरैस्तस्यानुसारेण च
प्रोद्दामप्रतिपत्तिशालिहृदयैस्तैर्द्वादशाङ्गी कृता ।
शान्तिस्वाम्यनुयोगमेव सगणं तेषामनुज्ञातवान्
योग्यानामुचितोपचारविधये यद्वा स्थितिस्तादृशाम् ॥ १२८ ।

वैराग्याऽऽपूर्णचित्ता व्रतमथ जगृहुर्मानवास्तीर्थनाथाद्
मानव्यश्च प्रभूताः कतिचन विधिवत् श्राद्धधर्मं सधर्माः ।
देवच्छन्दं ततः स प्रभुरलमकरोत् पूर्तिमायातवत्यां
पौरुष्यामादिमायां श्रमपरिमथनं कर्तुमेष क्रमो हि ॥१२९॥

तीर्थाधीशांह्रिपीठं प्रथमगणधरोऽऽध्यास्य चक्रायुधोऽपि
व्याचक्के धर्ममेकं प्रभुरिव भविकक्लेशविध्वंसनाय ।
पौरुष्यां यातवत्यां द्विकपरिगणनाविश्रुतायां जनौघाः
सर्वे स्वं स्वं निकेतं ययुरथ सुकृताऽऽकर्णनेन प्रहृष्टाः ॥१३०।

पाणिभ्यां बीजपूरं कमलमपि दधद् दक्षिणाभ्यामुभाभ्यां
वामाभ्यामक्षसूत्रं नकुलमपि तथा पोत्रिवक्त्रेण राजन् ।
भाद्राम्भोवाहमूर्तिः करिरथगमनः शान्तिनाथस्य तीर्थे
जज्ञे यक्षः स दक्षो गरुड इति जगत्ख्यातचारुप्रभावः ॥१३१

पाण्योर्दक्षिणयोः सदैव दधती सत्पुस्तकं चोत्पलं
पद्मं चाऽपि कमण्डलुं भगवती वामार्चिता वामयोः ।
निर्वाणी प्रथिताऽऽख्यया सितवपुः पद्मासनाभासिता
देवी शासनदेवता जिनपतिश्रीशान्तितीर्थेऽजनि ॥ १३२ ॥

ताभ्यां नित्यमधिष्ठितो गुरुबुधोपास्यः प्राणिघ्नंस्तमः-
स्तोमं सोमकलानिधिं रविरिव क्षीणं समुल्लासयन् ।
पादैरेव भुवस्तलं विमलतामापादयन्नन्यतः
श्रीशान्तिर्विजहार भव्यकमलप्रोद्बोधकल्याणकृत् ॥ १३३

आसीत् श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुश्चारित्रभाजां गुरुः ।
तच्छिष्येण कृतेऽत्र पञ्चदशकः श्रीशान्तिवृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गः सुवृत्तोऽगमत् ॥ १३४ ॥

**इति श्रीशान्तिनाथचरिते पञ्चदशः सर्गः समाप्तः ॥**



अर्हम्

## अथ षोडशः सर्गः ।



प्रतीयते यत्पुरुषोत्तमत्वं संवेदनेनैव सनातनेन ।
अनन्यसामान्यभृता श्रिया च स शान्तिनाथस्तनुतां मुदं वः ॥ १ ॥
अथान्यदा हास्तिननामधेयं पुरं जिनेशः समवासरत् सः ।
जगत् पवित्रं रचयन् स्वपादैर्दिनेशवत् तामसभूतिभेत्ता ॥ २ ॥
आयुक्तपुम्भ्यो जिनसार्वभौमं श्रुत्वा समेतं कुरुचन्द्रभूपः ।
प्रदाय हर्षात् परितुष्टिदानं प्रभुं प्रणन्तुं सहसा जगाम ॥ ३ ॥
प्रदक्षिणानां त्रितयं विधाय जिनं नमस्कृत्य गणेश्वरांश्च ।
असौ यथास्थानमलञ्चकार भूमण्डलं भूमिभुजां पुरोगः ॥ ४ ॥
नृपे निविष्टे जिनचक्रवर्ती स देशनां धर्ममयीं ससर्ज ।
परोपकाराय सतां हि बोधः सरोवराणामिव वारिपूरः ॥ ५ ॥
अवाप्य चिन्तामणिवद् दुरापं मानुष्यमेतद् भविकाः ! कथञ्चित् ।
प्रमादमुत्सार्य्य विचार्य्य तत्त्वं धर्मं विदद्ध्वं शिवशर्महेतोः ॥ ६ ॥
न द्वेषिहालाहलनाहलानां भयं प्रकुर्वन्ति बुधास्तथाऽत्र ।
लोकद्वयस्वार्थविनाशकस्य यथा प्रमादस्य दुरन्तकस्य ॥ ७ ॥
मैरेयपाणं विषयातिसक्तिः कषाययोगः शयनाभिषङ्गः ।
पुण्यद्रुभङ्गो विकथाऽनुरङ्गः प्रोक्तः प्रमादः स च पञ्चधा ज्ञैः ॥ ८ ॥
तत्राऽपि मुख्यो मदिरोपसेवा यत् सेवनादर्थपरिक्षयोऽत्र ।
परत्र दुःखं नरके यथाऽऽपत् स स्कन्दिलो ना कुलपुत्रवाच्यः ॥ ९ ॥

तथाहि याम्ये भरते समृद्धिप्रथिम्नि पृथ्वीतिलके पुरेऽभूत् ।
चन्द्रः पृथिव्या इव नाम पृथ्वीचन्द्रः प्रजाऽऽनन्दकरो नरेन्द्रः ॥ १० ॥
देवी तदीया सुरसुन्दरीति ख्याता गुणौघैः सुरसुन्दरीव ।
यद्रूपमालोकितुमेकचित्तः सहस्रनेत्रो मघवा बभूव ॥ ११ ॥
तत्रैव वित्तः कुलपुत्रकोऽस्ति श्रीचन्द्रराजः श्रितराजमानः ।
तस्य प्रियाऽजायत चन्द्रकान्ता तदङ्गजः स्कन्दिलनामधेयः ॥ १२ ॥
मातापितृभ्यां परिणायितः स स्कन्दश्रियं नाम वधूं वयःस्थः ।
क्रमात् स पञ्चत्वमवाप चन्द्रप्रशस्यकीर्तिः किल चन्द्रराजः ॥ १३ ॥
तस्यान्यदा भाग्यविपर्य्ययेण मद्यैकपानव्यसनं बभूव ।
पुंसः कुकर्मोदयसंविधानात् संजायते यद् व्यसनं दुरन्तम् ॥ १४ ॥
स स्निग्धवाक्यैः प्रियया प्रयत्नाद् निवार्यमाणो विरराम नैव ।
तस्योग्रमेतद् व्यसनं विबुध्य जनैरनेकैः सुजनैरिवाऽयम् ॥ १५ ॥
अजीगमत् तद्व्यसने प्रसक्तः सर्वं सुवर्णं स निरङ्कुशः सन् ।
धान्यानि धेनूरपि गोकुलानि कुलामयः स व्ययति स्म पश्चात् ॥ १६ ॥
दूरीकृतस्तत्सुजनैः स्वपङ्क्तेरूरीकृतः कैश्चन नैव पापः ।
तथाऽपि किञ्चिद् धनमर्जयित्वा मद्यं पपौ स व्यसनोग्रचित्तः ॥ १७ ॥
अन्येद्युरेतस्य दुराशयस्य निपीतमद्यस्य पथि प्रयातः ।
भूमीपतिः संमुखमाजगाम लीलाविहारेण वनं प्रयातः ॥ १८ ॥
भूपालमान्यैः पुरुषैः पुरोगः क्षीबः स इत्येवमवादि भो भोः ! ।
अयं समभ्येति विभुस्ततस्त्वं स्थानादितो द्रागपसृत्य तिष्ठ ॥ १९ ॥
नाकर्णयामास यदा नराणां मत्तोऽपसारप्रवणाः स वाचः ।
बाहौ तदैकेन धृतो नरेन्द्रवाल्लभ्यभाजा पुरुषेण रोषात् ॥ २० ॥
छुरीं समाकृष्य सितां स तेन न्यघानि मत्तेन रुषाश्रितेन ।
वृत्तान्तमेतं विनिशम्य राज्ञा व्यापादितः स प्रहतो नयेन ॥ २१ ॥
विपद्य जातो नरके दुरात्मा दुःखानि भूयांस्यनुभूय कामम् ।
ग्रामे स धान्ये तिलकावसाने श्रीशङ्खदत्तस्य कुटुम्बिमौलेः ॥ २२ ॥
गीर्माधवीमाधविकातनूभूर्वसन्तनामा समभूदपुण्यः ।
स मद्यपानव्यसनं तदेव तत्रैव जन्मन्यपि नो मुमोच ॥ २३ ॥

( युग्मम् )

तद्ग्रामनाथः पथि चाऽऽजिहानस्तेनान्यदाऽदृश्यत दृश्यमूर्तिः ।
गालिप्रदानेन च मद्यपेन तस्य क्रुदाऽऽधीयत मानभाजः ॥ २४ ॥
प्रोज्जासितस्तेन स*मङ्क्षु तिर्यग्योनिष्वनेकासु चिरं भ्रमित्वा ।
नृत्वं प्रपन्नः पुनरेव देवदत्ताभिधस्तद्व्यसनं बभाज ॥ २५ ॥
स मद्यपानव्यसनेन तेन प्रवर्धमानेन विनीतसारः ।
विवेश कस्याऽपि महेश्वरस्य निकेतने चौर्य्यकलासुधैर्यः ॥ २६ ॥
आरक्षकेण भ्रमताऽर्धरात्रे विनिर्गतो लोप्त्रकरः स दृष्टः ।
समग्रलोकस्य सपत्नभूतो घाताय दत्तो नृपतेर्निदेशात् ॥ २७ ॥
दुर्ध्यानभावेन महाककुद्मान् भूत्वा ततः पृष्ठवहप्रतिष्ठः ।
भारं वहंस्तीव्रतृषाक्षुधाभ्यां कदर्थनाः स प्रचुरा विषेहे ॥ २८ ॥
ततो विपन्नो वटकूपनाम्नि ग्रामेऽभिरामे विततोर्वराभिः ।
स शेषराजस्य कुटुम्बिनोऽभूद् नेदाङ्गजः सोम इति प्रतीतः ॥ २९ ॥
तद् मद्यपानव्यसनं दुरन्तं तत्राऽपि तत्याज न सोऽपि सोमः ।
विकारमन्तर्निहितं खलो वा भुजङ्गमः क्ष्वेडमिवापमन्त्रः ॥ ३० ॥
श्रीमालिकां नाम स शूरगेहपतेः सुतां सूररथादिवैताम् ।
कुकर्मनिर्माणसुकर्मशूरः क्षीबोऽन्यदाऽऽलिङ्ग्य बलादभुक्त ॥ ३१ ॥
स मेहनच्छेदनपूर्वमेव कदर्थयित्वा बहुधा नृपेण ।
समेषु चाकार्य्य निवेशितेषु जनेषु पश्यत्सु विनाश्यते स्म ॥ ३२ ॥
भ्रमिष्यतीत्थं स भवांश्चिराय दुरन्तदुःखानुभवं प्रकुर्वन् ।
तद् मद्यपानव्यसनं पुमांसः ! समुज्झताऽन्यव्यसनापहत्यै ॥ ३३ ॥
चन्द्रानन ! श्रीकुरुचन्द्रराज ! विन्दन्ति दुःखं भवचारकेऽस्मिन् ।
न जन्तवः के विषयाभिधानप्रमादसेवापरतन्त्रचित्ताः ? ॥ ३४ ॥
जडैकबुद्ध्या प्रथमाभ्युपेतान् विज्ञाततत्त्वा मृगतृष्णिकावत् ।
त्यजन्ति केचिद् गुणवर्मनामकुमारवत् तान् विषयांस्तथाहि ॥ ३५ ॥
जम्बूमहाद्वीपगमुख्यवर्षे पुरोत्तमं शौर्यपुरं समस्ति ।
ध्वजैर्गृहाणामनुमीयते श्रीर्यस्मिन् पयोजैः सरसामिवाम्भः ॥ ३६ ॥
प्रौढप्रतापो दृढवर्मनामा भूवल्लभस्तत्र बभूव धीमान् ।
रणाङ्गणे यस्य समीक्ष्य शौर्य्यं हता विपक्षाः सहसा बभूवुः ॥ ३७ ॥
श्रीशीलशालिन्यभिधा तदीया जाया बभूवान्वयशुद्धनामा ।

मनोहरं रूपमवेक्ष्य यस्या मुमोच कान्तं न कदाऽपि लक्ष्मीः ॥ ३८ ॥
मुखप्रवेशोन्मुखसौम्यकान्तिर्मृगेश्वरस्वप्नविबुद्धजन्मा ।
तयोः कुमारो गुणवर्मनामा धर्मस्थितिः शर्मकरो जनानाम् ॥ ३९ ॥
विनीतमध्यापकसङ्गमेन कलास्तमाशिश्रियुरेककालम् ।
भागीरथीशैवलिनीबलेन रत्नाकरं नद्य इवातिवेलम् ॥ ४० ॥
विलासिनीचञ्चललोचनालिरोलम्बसंवासनपद्मरूपम् ।
शास्त्रेषु शस्त्रेषु च लब्धपारः क्रमादसौ यौवनमाससाद ॥ ४१ ॥
गुरुं बुधास्तं कलयाम्बभूवुर्मृगीदृशो मन्मथरूपमेतम् ।
प्रजा जयन्तप्रतिरूपमाराद् वनीपकाः कल्पतरुं त्वितश्च ॥ ४२ ॥
पुरे वसन्तोपपदेऽस्ति भूमानीशानचन्द्रः प्रविभूततन्द्रः ।
विनिर्जितो यस्य यशोभिरीशो भूत्या वपुः स्वं विशदीकरोति ॥ ४३ ॥
तत्कन्यकोत्तप्तसुवर्णवर्णा विवर्णनीयाऽप्सरसां रुचीभिः ।
यन्नाम पूर्वं कनकं वतीतिवर्णावलीद्योति पदं ततोऽन्त्यम् ॥ ४४ ॥
आकारिता दूतमुखेन राज्ञा रम्याः कुमाराः स्वपरिच्छदेन ।
स्वयंवरोद्वाहमहे तदीये पुरं तदेव त्वरितं समेयुः ॥ ४५ ॥
कुमारकः श्रीदृढवर्मराजनिदेशमासाद्य स सद्य एव ।
स्वयंवरस्थानमवाप दूताहूतस्तदिद्धं गुणवर्मनामा ॥ ४६ ॥
ईशानचन्द्रेण महीभुजा स प्रत्युद्गतः सङ्गतवत्सलेन ।
गन्धर्ववैतालिककल्पवृक्षः प्रदत्तसौधे दिवसान् निनाय ॥ ४७ ॥
कुतूहलालम्बिमना कुमारस्तमन्यदा प्राप जनाश्रयं सः ।
आदातुमभ्युत्सुकतां वितन्वन् विलोचनानां फलमात्मनैव ॥ ४८ ॥
अनेकमूर्तिः स विचित्ररत्नस्तम्भेषु संक्रान्तवपुर्बभासे ।
स्वयंवराडम्बरसुन्दरत्वावलोकनायेव नरेन्द्रसूनुः ॥ ४९ ॥
रूपप्रपञ्चातिविचित्रसारपाञ्चालिकाभिः प्रविलोकनीयम् ।
विलोकमानस्य तदा तमस्य सेशानभूपालसुता समागात् ॥ ५० ॥
सा तारताराभिरिवेन्दुलेखा विभ्राजमाना परितः सखीभिः ।
विद्योतयन्ती ककुभः स्वभासा विलोकयामास जनाश्रयं तम् ॥ ५१ ॥
ईशानचन्द्रक्षितिपालकन्या मान्या स्वरूपेण रतेरपीयम् ।
निध्याय तं तत्र नरेन्द्रपुत्रं स्मरेषुविद्धेव चिराय दध्यौ ॥ ५२ ॥

मौलयो राजानं साश्रुनेत्रं मृत्युसाहसाद् मुहुर्मुहुर्निवारयामासुः। तैर्लोकैर्निवारितोऽपि भूशक्रः प्रियाविरहव्यथां जीवितान्तकारिणीं ज्ञात्वा चितामासूत्रयामास । ततः सकलोऽपि राजलोको महीपालमनुगन्तुकामो देहत्यागोचितां बह्वीं चितां निर्ममे । अथ राजा हाहाकारमुखरे लोके प्रियामुत्सङ्गमारोप्य यावता चितां विशति, तथैव सकलोऽपि राजलोकः स्वां स्वां चितां प्रवेष्टुमुपचक्रमे। तथा राजादयो लोकाः स्वां स्वां चितां सप्तार्चिर्ज्वालया यावद् ज्वालयामासुः, तावद् नभोमार्गात् प्रभावत्या सह पार्थोऽभ्यागात्। तत्रागतोऽर्जुनो धूमस्तोमव्याप्तनभोङ्गणं चिताशतसहस्रैः सङ्कुलं, दुःश्रवलोकाक्रन्दाक्रान्तं च वनखण्डं दृष्ट्वा शोकाकुलान् सकललोकान् पप्रच्छ-भो भो लोकाः! किमेताश्चिताः सज्जिताः?, यूयं प्रवेष्टुकामा इव दृश्यध्वे, राजापि मरणोद्यतस्तथैव दृश्यते ह्येतत् किम्?। लोकैरुक्तम्—स्वामिन्! राज्ञी प्रभावती पुष्पोच्चयं कुर्वाणा राज्ञा लब्धा, तदनु सर्पदष्टा मृता, राजापि तां मृतां ज्ञात्वा स्वयं मरणोद्यतो जातः, राजानमनु एष सर्वोऽपि राजलोक आनृण्यमिच्छन् ज्वलनं प्रवेष्टुकामश्चितावह्निं सज्जीकृत्य यावता प्रविशति, तावत् त्वं परोपकृतिकर्मठो नीरदनिभः काले जगज्जीवन इव समागाः। तच्छ्रुत्वा विस्मितो धनञ्जयः प्रभावतीं राज्ञे समर्प्य राजानं निर्वापयामास । तथा सर्वान् लोकान् गतशोकान् कृत्वा स्ववागमृतैः सिञ्चन्निर्वापयामास । ताश्चिता जलैः प्लावयामास। धनञ्जयो राजचितासमीपं कृत्रिमां प्रभावतीं विलोकनाय यावता याति, तावता चितामध्यात् समुत्थाय विमुक्तस्फारफेत्कारा सर्वेषां पश्यतां कृत्रिमा प्रभावती पलायांचक्रे। ततो राजा स्वस्थो जातः। प्रभावत्याः सङ्गादात्मानं पीयूषनिमग्नममन्यत । ततः केसरविद्याधरो हेमाङ्गदपुरोभूय एवं व्यजिज्ञपत्--राजन्! एष पाण्डुपुत्रो धनञ्जयो नाम

विद्याधरापहृतां तव प्रियामानिनाय। तच्छ्रुत्वा सहसोत्थाय हेमाङ्गदो धनञ्जयं बन्धुप्रीत्या समालिलिङ्ग। ततो राजा धनञ्जयमुच्चे सिंहासने निवेश्य प्रियापहारवृत्तान्तं पप्रच्छ । अथ पार्थादेशात् केसरविद्याधरो हेमाङ्गदाय प्रभावतीवृत्तान्तं सर्वं विद्यया विज्ञाय तस्मै कथयामास। यथा-- हे राजन् ! तव प्रियां तव समीपे क्रीडन्तीं वैडूर्यपुरनाथो मेघनादो हृत्वा हेमकूटं गिरिं गतः। तत्रेन्द्रनाम्नि उद्याने गत्वा तव प्रियां प्रति मेघनाद एवं वक्ति स्म-- हे सुभ्रु ! मर्त्यकीटेन हेमाङ्गदेन त्वं किं करिष्यसि ? तव किं सुखं भविष्यति ?, मां पतिं विधाय वैडूर्यपुरस्वामिनी भव, यथा तत्र स्थिता विद्याधरविद्याधर्यस्तव सेवां करिष्यन्ति। अथाऽऽवामिन्द्रेन्द्राण्याविवाऽहर्निशं सुखमनुभवावः। तथाऽहं तव गगनगामिन्यादिका बह्वीर्विद्याः शिक्षयामि । तया विद्यया त्वं विद्याधरी भूत्वा विमानारूढा व्योमगामिन्यनेकशो द्वीपशैलान् विलोकयन्ती देवीव स्वेच्छया सुखं क्रीड । इत्याद्यनेकवचनैर्यावत् प्रभावतीं प्रलोभयन् विहरति स्म, तावत् प्रभावती तं मेघनादं प्रत्याह-- हे पाप ! चापलं मुञ्च, किमर्थं जीवितं विजहासि ? यतो मम पत्युः पुरः कस्त्वम् ?, केऽन्ये विद्याधरादयः ?, पुरुहूतोऽपि कातरः संग्रामे । अतः प्रोच्यते--भो विद्याधरेश ! मम प्राणेशखड्गदीपे त्वं शलभत्वं मा लभस्व । एवं वारं वारं तर्जयन्ती यावत्तिष्ठति, तावदवलोकिन्या विद्यया ज्ञात्वा धनंजयो विमानारूढो हत हतेति ब्रुवाणस्तत्रागात्। पार्थस्तं विद्याधरं जगाद--भो विद्याधराधम ! एतां हेमाङ्गदराज्ञः पत्नीं मणिचूडविद्याधरेशभगिनीं कपिध्वजस्यापि धर्मभगिनीं महासतीं प्रभावतीं पाणिना मा स्पृश, यतस्त्वमेनां बलात्कारेण संस्पृशन् विद्यारहितो भविष्यसि, परस्त्रीसङ्गात् भस्मसाच्च भविष्यसि; अतस्त्वं दूरतो भव इत्येवं वदन्तं धनञ्जयं मणिचूडमित्रं दृष्ट्वा प्रभावती प्रोत्फुल्लवदना एवं जगाद--धन्याऽहं

यद् ममानुगो मम भ्राता धनञ्जयः समागात् । पुनस्तयोक्तम्—भोः कुलदेवताः ! यदि प्रभावत्याः शीलप्रभावोऽस्ति, तर्हि सर्वाः कुलदेव्यो धनञ्जयशरीरमधितिष्ठन्तु, यथाऽर्जुनो युधि विजयी भवेत्; इति पतिव्रताव्रतश्रवणात् संतुष्टो धनञ्जयो नभश्चरं कर्कशया गिरा संततर्ज- रे विद्याधराधम ! सज्जो भव, कृपाणं करे कुरु, ममाप्येष खड्गस्त्वामन्यस्त्रीसङ्गकारिणं दुष्टं शिक्षयिष्यति; इत्युक्त्वा धनञ्जयो विद्याधरं हन्तुं दधावे । विद्याधरोऽप्यर्जुनं तर्जयन् युद्धसज्जो दधावे । एवं तावुभावपि पूर्वं विद्यया युद्धं विधाय, ततः खड्गाखड्गि युद्धं कुरुतः स्म । एवं युद्धे जायमाने लब्धजयेन धनञ्जयेन मेघनादः स्कन्धे खड्गेन तथाऽऽहतो यथा मूर्छया भुवस्तले पपात । ततश्चाऽर्जुनो दयार्द्रान्तरात्मा मूर्छालं विद्याधरं वस्त्राञ्चलेन संवीज्य चेतनामुपानीय एवमुवाच- हंहो विद्याधराधीश ! सज्जो भव, पौरुषं मा कलङ्कय, एहि मया सह युध्यस्व; इत्यर्जुनगिरं श्रुत्वा भयविह्वलो मेघनादविद्याधरोऽर्जुनं पाण्डुपुत्रं विज्ञाय सोत्साहं बभाषे—भो अर्जुन ! भूर्भुवःस्वस्त्रयीलोके त्राणशूराः पाण्डवा एव सन्ति, त्वयाऽहं जितः, तथा पुनस्त्वयाऽहं परस्त्रीसङ्गान्निवारितो नरकादुद्धृतश्च । अहो ! धनञ्जय ! अद्यप्रभृति परस्त्रीसङ्गं न करोमि ।

यतः—

“शीलं नाम नृणां कुलोन्नतिकरं शीलं परं भूषणं
शीलं ह्यप्रतिपाति वित्तमनघं शीलं सुगत्यावहम् ।
शीलं दुर्गतिनाशनं सुविपुलं शीलं यशः पावनं
शीलं निर्वृतिहेतुरेव परमं शीलं तु कल्पद्रुमः” ॥१॥

एवंविधं शीलं मयाऽङ्गीकृतम् । अथैतां प्रभावतीं गृहाण, इत्युक्त्वा प्रभावती धनञ्जयाय दत्ता । पुनर्विद्याधरेणोक्तम्—

भो धनञ्जय ! त्वं हेमाङ्गदराज्ञः समीपे शीघ्रं याहि, यतो मया तत्र प्रतारिणी विद्या प्रेषिताऽस्ति, तया विद्यया प्रभावतीरूपं विधाय राजा मोहितोऽस्ति, तया मोहितो राजा यावच्चितां न प्रविशति, तावत्त्वमिमां सत्यां प्रभावतीं लात्वा शीघ्रं याहि। तद्विद्याधरोक्तं श्रुत्वा धनञ्जयः प्रभावतीं विमानमारोप्य स्वयं विमाने आरुह्य त्वरितं त्वत्समीपं समागात्। विद्याधरो मेघनादोऽपि तव स्वमुखं दर्शयितुमक्षमोऽर्जुनमापृच्छ्य स्वस्थानं गतः। एवं प्रभावतीपूर्वगतचरित्रं केसरविद्याधरमुखात् श्रुत्वा हर्षितो हेमाङ्गदो राजा सप्रियः ससैन्यो धनञ्जयसहितो हिरण्यपुरनगरं महामहेन समागात्। तत्रागत्य धनञ्जयमुच्चे सिंहासने निवेश्यैवमवादीत्-हे धनञ्जय ! मम प्राणदायकस्य तवाहं किं प्रत्युपकरोमि?, अथाऽहं याचे-इदं राज्यं गृहाण, त्वं मम नायको भव, अहं तव सेवकोऽस्मि।

यतः—

"प्रीतिक्रीतानिमान् प्राणान् भुजक्रीतीरिमाः श्रियः।
गुणक्रीतमिदं राज्यं कृतार्थय यथारुचि" ॥ १ ॥

तच्छ्रुत्वा पार्थोऽब्रवीत्—भो हेमाङ्गद ! यदि स्वर्गतुल्यं तव राज्यं भवति, तथापि ते राज्येन मे कार्यं नास्ति, त्वं स्वस्थचित्तः स्वं राज्यं परिपालय। एवं धनञ्जयो हेमाङ्गदं प्रति यावद् वक्ति, तावद् भगिनीहरणोदन्तं श्रुत्वा मणिचूडविद्याधरः ससैन्यो धनञ्जयान्तिके समागात्। तत्रागतो मणिचूडो धनञ्जयं मिलित्वा प्रभावतीसमीपे गतः। प्रभावतीं कुशलोदन्तैः संभाष्य हेमाङ्गदं संभाष्य च धनञ्जयान्तिके समुपाविशत्। तत्र हेमाङ्गदराज्ये मणिचूडसहितो धनञ्जयो भगिनीपत्याऽऽग्रहात् कतिचिद् दिनान्यस्थात्। अथाऽन्यदा हस्तिनापुरात् कश्चित् पुमान् हर्षोत्फुल्लनयनः फाल्गुनमभ्येत्यैवं व्यजिज्ञपत्-हे कुमार ! चारचक्रेभ्यस्त्वामिहागतं श्रुत्वा त्वामाह्वातुमहं

प्रेषितोऽस्मि । यत उर्वीशः पाण्डुर्वार्द्धकार्हाः क्रियाः कर्तुं धर्मपुत्रं राज्येऽभिषेक्तुमना स्त्वामाह्वयति । तथा तव विरहे कुन्ती माता निरन्तरं साश्रुलोचने वहति, तथा तव बान्धवा युधिष्ठिराद्या मिलनायोत्सुका बभूवुः; अतस्त्वं शीघ्रं समागच्छ । अथार्जुनस्तं बभाषे—भो महापुरुष ! त्वं पुरो याहि, ममागमनेन मातापितरौ वर्द्धापय, एषोऽहं शत्रुञ्जयतीर्थे जिनं नत्वा त्वरितमेव समागमिष्यामि; इत्युक्त्वा दूतं विसर्ज्य स्वगं विमानमारुह्य मणिचूडसहितो विहायसा शत्रुञ्जयं प्रति चलति स्म । शत्रुञ्जये गत्वा भक्त्याऽऽदिमं जिनं नत्वा कृष्णदर्शनोत्कण्ठितोऽर्जुनो द्वारकामागमत् । द्वारकां समागतो धनञ्जयः । सम्मुखमागतेन कृष्णेन समालिङ्गितोऽर्जुनः । शरीरद्वययुक्तौ द्वावप्येकतामगाताम् । कृष्णेन धनञ्जयस्य स्वागतं विधाय निजा भगिनी सुभद्रा ददे । शुभमुहूर्त्ते द्वयोः पाणिग्रहणमकारयत् । तथा कृष्णेन तयोः पाणिमोचनकर्मणि बहुस्वर्णरत्नमणिमाणिक्यगजाश्वादिकं दत्त्वाऽर्जुनो बहु मेने । पित्रोर्मिलनायोत्कण्ठितोऽप्यर्जुनस्तत्र कृष्णानुरोधत उत्सवमयान् कांश्चिद् वासरानतीयाय । अन्यदा कापिकेतनः कृष्णमापृच्छ्य सुभद्रया पत्न्या समं विमानमारुह्य गगनाध्वना हस्तिनापुरं प्रतस्थे । ततः खेचरानीकैः परिवृतो मणिचूडहेमाङ्गदादिसहितो धनञ्जयो नगरग्रामसरित्सरोवराद्यलङ्कृतां महीं विलोकयन् खेचरनरेन्द्रैः समं वार्त्तां कुर्वन् वादित्रैर्दिशो बधिरयन् भट्टानां जयजयारवैर्विश्वमेकनादमयं कुर्वन् हस्तिनापुरपरिसरे समागात् । भ्रातृपित्रोरागमनं दृष्ट्वा विमानादवतीर्य महीतले लुठन् पित्रोः क्रमकजं मूर्ध्नाऽस्पृशत् । पाण्डुराडपि धनञ्जयं क्रमकजान्ते लुठन्तं बाहुना समादाय वक्षःस्थले चालिलिङ्ग, तथा मूर्ध्नि चुचुम्ब । बहुदिनैः समागतं पुत्रं दृष्ट्वा हर्षाश्रुवारिधाराभिर्धनञ्जयमूर्द्धानं राज्याभिषेकमिषादिवाऽश्रुधाराभिः सिषेच । तथा जाह्नवेयादिसमस्तगुरु-

वर्गे यथौचित्यमाचारः सव्यसाचिना प्रतिपेदे, मातृवर्गेऽपि तथैव भक्तिर्वितेने। एवं युधिष्ठिरादयोऽपि बान्धवाः प्रणमन्तं धनञ्जयं भृशमालिलिङ्गुः। ततो धनञ्जयः सर्वान् स्वजनान् विमानमारोप्य देवराज इव देवसमूहैः परिवृतो नागरिकैः संस्तुतो ध्वजव्रजमण्डितं हास्तिनापुरमाविशत्। नगरे विशन्तं धनञ्जयं दृष्ट्वा सर्वे नागरिका विस्मयस्मेराननाः केचिद्धनञ्जयं प्रशशंसुः, केचित् कुलं प्रशशंसुः, केचिन्मातापित्रोः पुण्यं प्रशशंसुः। एवं जनताप्रशंसां शृण्वानो धनञ्जयो दानं ददानः पथि नर्त्तयन्तीं नर्त्तकीमवलोकयन् स्वगृहमाविशत्। तत्रातिस्नेहेन कुन्त्या गृहप्रवेशमङ्गलं कृतम्। तन्मङ्गलं प्रतिगृह्य प्रतीहारैर्दूरमुत्सारितप्रजः सौधस्य मध्यं धनञ्जयो विशति स्म। राज्ञः पाण्डोरादेशात् सर्वे लोकाः स्वस्थानं जग्मुः। अथाऽर्जुनो गृहान्तःप्रविष्टो द्रौपद्या पूर्वं प्रणतः, ततः कुशलोदन्तं पृष्टः सर्वं स्ववृत्तान्तं समाचख्यौ। ततो द्रौपद्याऽऽवासे धनञ्जयः स्नानं विधाय जिनपूजां कृत्वा भुक्त्यनन्तरं सुखशय्यायां प्रियया सार्द्धं विषयक्रीडादिभिश्चिरविरहजदुःखस्यान्तं लेभे। तथा तया सार्द्धं कपिध्वजः प्रेमवार्त्तां कुर्वाणस्तां रात्रिमशेषां क्षणमात्रमिवागमयत्। मणिचूडविद्याधरो हेमाङ्गदश्चान्येऽपि विद्याधरा धनञ्जयप्रीत्या चिरं तत्राऽतिष्ठन्। एकस्मिन् दिने राजा पाण्डुः स्वकर्णान्तपलितं पुत्रेभ्योऽदर्शयत्। भोः पुत्राः! एषा जरा मां धर्मकर्मणि बलात् प्रवर्तयति, जरया ग्रस्तस्य किं मे वैषयिकसुखेन ?।

यतः—

"गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गता
दृष्टिर्भ्रश्यति रूपमेव ह्रसते वक्त्रं च लालायते।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते
हा! कष्टं जरयाऽभिभूतपुरुषं पुत्रोऽप्यवज्ञापरः॥ १॥
प्रद्ध रटति पलितदूतो मस्तकमासाद्य सर्वलोकस्य।

परिभवति जरा मरणं कुरु धर्मं विरम पापेभ्यः ॥ २ ॥
इयत्यामपि सामग्र्यां सुकृतं न कृतं त्वया ।
इतीव कुपितो दन्तानन्तकः पातयत्यलम् ॥ ३ ॥
वृद्धस्य मृतभार्यस्य पुत्राधीनधनस्य च ।
स्नुषावचनदग्धस्य जीविताद् मरणं वरम् " ॥ ४ ॥

हे सुताः ! श्यामलैः कुन्तलैः सह विषया वास्तव्याः, पुनः सितीभूतैः कुन्तलैः सह धर्मः कार्यः । अतो गुणज्येष्ठे ज्येष्ठपुत्रे युधिष्ठिरे क्ष्माभारं निक्षिप्य मे मनो धर्मं कर्तुमिच्छति । पाण्डुराज्ञ एतद्वचनं श्रुत्वा गाङ्गेयधृतराष्ट्रविदुरप्रभृतिभिः सकलस्वजनवर्गैः सर्वं प्रतिपन्नम्। हे राजन्! युधिष्ठिरे राज्यभारे न्यस्ते पृथ्वी राजन्वती भविष्यति। तत् श्रुत्वा भीमान्वितोऽर्जुनोऽभ्यधात्--हे तात ! त्वया सत्यमुक्तम्, धर्मयुक्ते धर्मपुत्रे राज्यं न्यस्तं सकलजनसुखदं स्यात् । य एतां तातगिरं न हि प्रमाणयिता स्यात्, तस्यैते मामकाः सायका मूर्द्धानं शिक्षयिष्यन्ति । तत् श्रुत्वा पाण्डुराट् धर्मात्मजाभिषेकाय पुत्रानाकार्य सकलसामग्रीं सज्जीकर्तुमुपचक्रमे । तथा हस्तिनापुरस्य परतश्चतुर्दिक्षु क्ष्माभृतां वासयोग्या निवासा विहिता हिमकरस्य पुरतः तारका इव शुशुभिरे। तथा कृष्णादीनामवनिपालानामाहूत्यै पृथक् पृथग् दूतान् प्राहिणोत्। पाण्डुराट् स्वगृहे सकलतूर्यधवलमङ्गलगीतानि प्रावर्त्तयत् । तस्मिन्नगरे जनाः स्वस्वमन्दिरेषु तोरणानि चाकार्षुः। जनैः प्रतिमन्दिरं कदलीस्तम्भकान्तिभिर्विराजितं तन्नगरं विदधे । नानाग्रामसमागतैर्जनैः सनेपथ्यैः पौराणां नेत्रकौतुकमपूर्यत । समागतैः सकलभूपालवाजिगजादिभिः क्षोणितलादुत्थापितरजोभिरभिषेकजलप्लावाभियेव गगनमण्डले गतम् । कुन्तीमाद्रिकादिभिर्मातृवर्गैर्युधिष्ठिरस्य माङ्गल्यकारि मज्जनमारेभे । गाङ्गेयादयः स्वजनवर्गास्तपस्सुताभिषेकाय माणिक्यमयमद्भुतं विमानमिव मनोहरं सौधर्मसभानुकारिणं

शिल्पिभिरेकमभिषेकमण्डपं कारयामासुः । तत्र मण्डपे धात्रीपतिरेकं भद्रपीठं निवेश्य तत्र युधिष्ठिरं निधाय विप्रैर्नीराजनाविधिः कारयाञ्चक्रे । पश्चात् पुरोहितं पुरस्कृत्य सर्वे राजानः स्वर्णकलशावर्जितैस्तीर्थोदकैस्तपस्सुतं राज्येऽभ्यषिञ्चन् । पाण्डुराडपि तथैव युधिष्ठिरं मन्त्रपूतेन वारिणाऽभ्यषिञ्चत् । एवं गाङ्गेयविदुरदुर्योधनभीमाऽर्जुनादयः स्वजना अभिषेकं विदधुः । ततो धर्मात्मजं बन्दिनो याचकाः सद्दानमानैस्तोषितास्तुष्टुवुः । धर्मनन्दनोऽर्थिकृतप्रशंसां शृण्वानस्तेभ्यो दानं ददाति स्म ।

यतः–

"पात्रे धर्मनिबन्धनं तदितरे प्रोद्यद्दयाख्यापकं
मित्रे प्रीतिविवर्द्धकं रिपुजने वैरापहारक्षमम् ।
भृत्ये भक्तिभरावहं नरपतौ स्याद् मानपूजाप्रदं
भट्टादौ च यशस्करं वितरणं न क्वाप्यहो ! निष्फलम् ॥१॥
इयं मोक्षफले दाने पात्रापात्रविचारणा ।
दयादानं तु सर्वज्ञैः कुत्रापि न निषिध्यते" ॥ २ ॥

इत्यादि विचार्य नवजलधरवत् सुवर्णरत्नमणिमाणिक्यादिभिर्धर्मपुत्रो याचकेभ्यो ववर्ष । सामन्तैर्युधिष्ठिरादेशात् देशे देशे पुरे पुरेऽमारिपटहो दीयते स्म । धर्मपुत्रादेशात् श्रीजिनप्रासादे पूजामहोत्सवाद्यनेकमहामहिमानं जनश्चक्रे । तदा युधिष्ठिरद्वारवेश्मनि भूभुजानामुपायनानि प्रविशन्ति स्म । ततोऽभिषेकान्ते युधिष्ठिरं सिंहासने निवेश्य प्रसाधिकास्तैस्तैर्नेपथ्यैः प्रसाधयामासुः । यथा--तस्य मूर्ध्नि भ्रमरनिकरसदृशं धम्मिल्लं मल्लिकादामगर्भितं विधाय मुकुटं निदधुः । ततस्तस्य राज्ञश्चन्द्रमण्डलवन्निर्मले कर्णयोः कुण्डले परिधाप्य हृदये हारं परिधापयन्ति स्म । एवमर्द्धहारं एकावलीं कनकावलीं बाह्वोरङ्गदे मु-

द्रिकाकटिसूत्रप्रभृतीन्याभरणानि परिधाप्य ततो दिव्यं देव-दूष्यवस्त्रयुगलं परिधाप्य दिव्यैश्चन्दनैश्चर्चयन्ति स्म। अथ प्रसाधि-काभिः प्रसाधितो युधिष्ठिरःसकलराजमण्डलीसंसेव्यमानचरणः सभासमागमनावसरं विज्ञाय धनञ्जयादेशात् मणिचूडविद्याधरेण तत्क्षणनिर्मितां स्फटिकरचितां मणिरत्नैः खचितां नीलमा-णिक्यतेजोभिरलङ्कृतभूतलां नानारत्नस्तम्भश्रेणिपाञ्चालि-काकृतविचित्रशोभां सुवर्णशिखरां मणिरत्नसभामध्यतिष्ठत्। यस्यां स्तम्भनिविष्टाः पाञ्चालीर्दृष्ट्वा आगन्तुजना नवनवा वारविलासिनीतुलना दधुः। स नूतनभूपतिर्धर्मपुत्रस्तस्यां सभायां छत्रचामरयुत उच्चे सिंहासने निविष्टः सौधर्म-सभायां सुनासीर इवाऽऽबभासे। ततश्च जानपदाः पौराः स-चिवसामन्ताश्च तं राजानमुपायनैरुपतस्थुः। स युधिष्ठिरो बन्धु-प्रीत्या तथा गुरूणां पर्यालोचनेन च दुर्योधनमिन्द्रप्रस्थराज्ये तत्क्षणादेवाऽभ्यषिञ्चत्। अन्येषां स्वबन्धूनां धृतराष्ट्रपुत्राणां च यथौचित्यं राजा युधिष्ठिरः पृथक् पृथग् देशान् ददौ। एवं युधिष्ठिरराज्याभिषेकमहोत्सवं विधाय कृष्णाद्याः सर्वे राजानो गजवाजिरथादिभिः संमानिताः स्वस्थानं जग्मुः ॥

इति श्रीमत्तपागच्छभट्टारक–श्री ५ श्रीहीरविजयसूरिपट्टालङ्कारभट्टारक-
श्रीविजयसेनसूरिराज्ये पण्डितश्रीदेवविजयगणिविरचिते गद्यबन्ध-
बन्धुरे श्रीपाण्डवचरिते पार्थतीर्थयुधिष्ठिरराज्या-
भिषेकवर्णनो नाम पञ्चमः सर्गः ॥ ५ ॥

अथ राजा पाण्डुर्ज्येष्ठाङ्गजदत्तराज्यश्रीर्मुक्तावुत्कण्ठितो दीक्षां ग्रहीतुकामः सुताऽऽग्रहात् तत्रैव राज्ये तस्थौ। सुयोधनो भक्तमानी मातापितराविन्द्रप्रस्थपुरमात्मना सह निनाय। युधिष्ठिरगुणग्राममोहिता गाङ्गेयविदुरद्रोणप्रमुखाः कुलवृद्धाः, कुलवृद्धाः स्त्रियोऽपि युधिष्ठिरमशिश्रियन्। एवं युधिष्ठिरे राज्यं कुर्वाण एकस्मिन् दिने भीमाद्याश्चत्वारो भ्रातरः स्वयं दिग्विजिगीषया यियासवो युधिष्ठिरमेवमवोचन्—हे भ्रातः! त्वदाज्ञया चत्वारोऽपि चतुर्दिक्षु देशान् साधयित्वा शीघ्रं समागच्छामः। युधिष्ठिरेणोक्तम्—एवं भवतु। ततः सकलसामग्रीसंयुक्तः सुमुहूर्त्ते भीमपराक्रमो भीमः पूर्वां दिशं साधयितुं जगाम। एवमर्जुनो दक्षिणस्यां दिशि देशसाधनाय ययौ। एवं नकुलोऽपि सकलकुलसहिताभिः कुलवृद्धाभिः कृतमङ्गलः पश्चिमाशां चचाल। एवं नरदेवसेवितः सहदेवः सेनापरिवृतः सकलसंप्राप्तजय-उत्तराशामशिश्रियत्। एवं चतुर्भिः समसैन्यैः समभारत्वात् फणीश्वरः शेषनागः क्षितिं सुखं बभार। अथ भीमः पूर्वदिग्मुखमण्डनानि अङ्गवङ्गकलिङ्गपञ्चालडाहलप्रभृतीन् देशान् साधयित्वा तद्देशाधिपान् विमुक्तराज्यचिह्नान् विधाय गङ्गासागरसंगमे जयस्तम्भान् समारोप्य भीमो भीमपराक्रमो लब्धजयो न्यवर्त्तत। एवमर्जुनो दक्षिणाशां प्रविश्य द्रमिलमहाराष्ट्रकर्णाटलाटतिलङ्गादीन् देशान् साधयन् तद्देशाधिपान् वशीकुर्वन् करलीदेशान् लुम्पन् दक्षिणाम्भोधिरोधसि ससैन्यः समाययौ। तत्र गत्वा ताम्रपर्णीसरित्तीरे कीर्त्तिस्तम्भानारोप्य सकलसैन्यपरिवृतः संप्राप्तजयो व्यावर्त्तत। अथ सकलकुलनतक्रमकमलो नकुलः पश्चिमाशां संचरन् सौराष्ट्रं ययौ। तत्र

सौराष्ट्रे सकलग्रामाकरपुरनगराणि साधयन् महार्णवसरस्वत्योः समीपे प्रियमेलकं प्रभासक्षेत्रं समाययौ । तत्र कृतस्नानश्चन्द्रप्रभं जिनवरमष्टप्रकारैः सप्तदशभेदैश्च संपूज्य महारम्भो जयस्तम्भानारोप्य सकलसंप्राप्तजयो न्यवर्त्तत । सहदेवोऽपि देवेन्द्रतुल्यपराक्रमः कुबेरचरितां दिशमुत्तरां व्यगाहत । तस्यां दिशि काम्बोजान् नेपालप्रभृतींश्च देशान् साधयामास । ततो हिमालयं समारुह्य पर्वतीयान् राज्ञो विजित्य जयस्तम्भं समारोपयन् उत्खातप्रतिरोपितान् भूपान् सहमानीय प्रत्यावर्त्तते । एवं स्वर्णरत्नमणिमाणिक्यवाजिगजाद्यनेकर्द्धिसंपन्नास्ते चत्वारोऽपि पाण्डवा यमकसमकं समाजग्मुः । अथ युधिष्ठिरोऽपि तेषां चतुर्णां बन्धूनां संमुखसमागमनेन परस्परालिङ्गनेन च बहु मेने । एवं ते पञ्चापि भ्रातरः पृथिव्यां मेरव इव बभासिरे । ते चत्वारोऽपि भीमाद्या भ्रातरो युधिष्ठिरं प्रत्यहं प्रीतिप्रह्वाः प्रणेमुः । युधिष्ठिरोऽपि तान् भ्रातॄनासनदानादिभिः संमान्य सिंहासने निवेशयामास । एवं ते पञ्चापि भ्रातरो राजलीलया गजाश्वसुखासनारूढाः स्वैरमारामादिषु क्रीडन्तो विचरन्ति स्म । एकस्मिन् दिने पार्थपत्नी सुभद्रानाम्नी सार्द्धसप्तदिनाधिकनवमासे सुमुहूर्त्ते सुलग्ने च सुतरत्नमजीजनत् । तस्मिन् पुत्रजन्मन्यर्थिनोऽर्थैः कृतार्थान् कृत्वाऽशुचिजातकर्मणि निवर्तिते संप्राप्ते द्वादशे दिवसे काश्यपीपतिर्धर्मपुत्रोऽस्य नाम अभिमन्युरिति व्यधात् । अभिमन्युजन्मनि राजा दानं ददाति स्म । सप्तक्षेत्र्यां धनबीजं वपति स्म ।

यतः—

"व्याजे स्याद् द्विगुणं वित्तं व्यवसाये चतुर्गुणम् ।
क्षेत्रे शतगुणं प्रोक्तं पात्रेऽनन्तगुणं भवेत्" ॥ १ ॥

तथाऽस्मिन् महे युधिष्ठिरेण स्वर्णमण्डितो मणिमाणिक्यप्रतिमाभिरलंकृतः श्रीशान्तिनाथजिनेशितुर्विहारः कारयांचक्रे ।

प्रासादवर्णनं यथा-स्वर्णमयो मणिशिखरः स्फाटिकसोपानपद्धतिरिन्द्रनीलाश्मतोरणैर्विराजित इन्द्रनीलाश्मकुट्टिमो मुक्ताजालैरलंकृतः। किं बहूक्तेन?, क्षितिवध्वाः कर्णताडङ्क इवाऽऽबभासे। तस्योपमानं स्वर्गे, अवनौ, रसातले च नास्ति, येनोपमीयते। विश्वाद्भुतश्रीकस्य तस्य प्रासादस्य ध्वजारोपणपर्वणि युधिष्ठिरः सर्वं राजसमूहं दूतैराह्वाययामास। युधिष्ठिरो द्वारकां प्रति केशवनिमन्त्रणाय नकुलं प्रेषयामास। तथा बन्धुवात्सल्यो युधिष्ठिरो दुर्योधनं सबान्धवं निमन्त्रणाय सहदेवं प्राहिणोत्। एवमन्येऽपि राजानो दूतैराहूता उपायनान्युपादाय सर्वे समाजग्मुः। पूर्वदिक्पालका राजानो युधिष्ठिरं करीन्द्रान् प्राभृतीकृत्य सिषेविरे। दाक्षिणात्या भूभुजो वज्रवैडूर्यमणिमाणिक्यभृतैः स्वर्णस्थालैः पुरोमुक्तैः सिषेविरे। पश्चिमाशाधिपा जलस्थलसमुद्भूतसैन्धवानुपदीकृत्य सिषेविरे। एवमुत्तराशाधिपैर्युधिष्ठिरस्तत्तद्देशोद्भवं विशिष्टं वस्तु पुरो मुक्त्वा सिषेवे। एवं सर्वेऽपि राजानो युधिष्ठिरसद्मनि संमिलिताः सन्तो यद्यत् कुर्वन्ति स्म, तत्तदाह-केचिद् राजानः श्रीशान्तिनाथप्रतिष्ठाकृते पुण्यं तीर्थोदकमाहरन्ति स्म। केचिद् राजानः सन्नद्धबद्धाः कर्षितायुधाः श्रीशान्तिनाथप्रासादपरितश्चतुर्दिक्षु रक्षाकृते परिभ्रमन्ति स्म। केचिद् राजानः स्नात्रौषधीजलादिकृते जात्याश्वारूढा इतस्ततो धावन्ति स्म। तथा चतुःषष्टी राजानो ध्वजदण्डं हिरण्मयमष्टादशवारान् स्वैरं स्नपयाञ्चक्रिरे। केचिद् राजानस्तेषां जनानां कुङ्कुमच्छटां विधाय तिलकानि चक्रुः। केचिद् राजानो धौतिकान् कृत्वा मुखकोशं विधाय धूपधूपितहस्ताः करधृतजलभृतहेमकुम्भाः स्नात्रं कुर्वन्ति स्म। केचिद् राजानः सुवर्णलेखिन्या यक्षकर्दमैः मणिमयपट्टके नन्द्यावर्त्तमालिखन्ति स्म। केचिद् राजानः श्रीशान्तिनाथपार्श्वतश्चामराणि वीजयन्ति स्म। केचिद् राजानो जिनवरपुरतो दर्पणं

दधुः । केचिद् राजानः सर्पिर्दध्यादिभाजनं करे कृत्वा तस्थुः । केचिद् राजानो जिनवरपुरतः फलादिकं ढौकयामासुः । केचिद् राजानः सुगन्धिद्रव्यसंमिश्रसंपुटकं करे कृत्वा ऋद्धिवृद्ध्याद्यौषधीर्दधिरे, इति यत् किञ्चित् जिनप्रतिष्ठाकार्यं तत्सर्वं राजान एव कुर्वन्ति स्म । अतः परतीर्थिका राजसूययज्ञं केचित् कथयन्ति, परमेष यज्ञो नास्ति, किन्तु जिनप्रतिष्ठाकार्यम् । एतत्सर्वगृहस्थकार्यानन्तरं बुद्धिसागराचार्यः शलाकाञ्जनं विधाय वासक्षेपं विधाय चाऽष्टस्तुत्या जिनं नमस्करोति स्म । ततः शान्तिवेश्मनः कलशध्वजारोपणपूर्वं प्रतिष्ठानन्तरं शान्तिस्तवं राजानः पठन्ति स्म । एवं तत्र युधिष्ठिरो दशाहिकोत्सवं चक्रे । अथोत्पताकं जिनमन्दिरमालोक्य सर्वे राजानो युधिष्ठिरं राजानं प्रशशंसुः । अथ ते सर्वे राजानः स्वर्णमणिमाणिक्यगजाश्वादिभिः संमानिता युधिष्ठिरेण विसृष्टाश्च निजं निजं देशं जग्मुः । तदनु धर्मनन्दनः समुद्रविजयादीन् यादवान् सत्कृत्य विससर्ज । तथा दुर्योधनं विना सर्वैः स्वस्थाने गतम् । दुर्योधनं तु बन्धुप्रीत्या धात्रीपतिरधारयत् । तत्र स्थितो दुर्योधनः पाण्डवस्फातिदर्शनात् संजातेर्ष्यो मातुलेन समं गूढकोपश्चिरं वसति स्म ।

यथा—

"लीलाशिलोच्चयक्रीडावापीकेलिवनादिषु ।
चिक्रीड पाण्डवैः सार्धं सुमनोभिः स दुर्मनाः" ॥ १ ॥

अन्येद्युर्मणिचूडविद्याधरनिर्मितां मणिरत्नकोट्टिमां दिव्यां सभां द्रष्टुं स्वल्पपरिवारो दुर्योधनः सपाण्डवस्तां विवेश । तस्यां सभायां मणिकोट्टिममविज्ञाय जलभृतभूभागं ज्ञात्वा दुकूलाञ्चलमूर्ध्वीकुर्वति सर्वैः सेवकैः पाण्डवैश्च हसितम् ।

यतः—

"संवृण्वन् वसनं नीलं कुट्टिमे जलशङ्कया ।

स्फाटिके व्योमबुद्ध्या तु कुर्वन्नुत्प्लुतिसङ्गतिम् ॥ १ ॥
आस्फलद् मणिभित्तौ तु मुख्यकृत्रिममूर्त्तिषु ।
भ्रान्तिमान् स तदा सर्वैरहस्यत सुयोधनः" ॥२॥ (युग्मम्)

तद् दृष्ट्वा दुर्योधनो मनसि खेदमुद्वहन् सभां विलोक्य शीघ्रं बहिराययौ । दुर्योधनं विलक्षवदनं निरीक्ष्य पाण्डवाः पप्रच्छुः-हे बान्धव ! किं निष्कारणेन विलक्षवदनो दृश्यसे ?। सुयोधनेनोक्तम्—भवद्हास्येन । धर्मपुत्रेणोक्तम्--किं बान्धवहास्येन ?, त्वं स्वस्थो भव, खेदं मुञ्च, प्रेमप्रकर्षं मनसि मानय । एवं बहूक्तोऽपि दुर्योधनः खेदं नाऽमुञ्चत् । अहो ! दुर्जनस्वभावोऽयम्, हास्यमात्रेऽपि दुर्जने मत्सरो भृशमुज्जजागार । पाण्डुपुत्रेण युधिष्ठिरेण गजवाजिरथादिदानेन संमानितोऽपि दुर्योधनः पाण्डुपुत्रे समत्सर इन्द्रप्रस्थं नगरं प्रतस्थे । मार्गे मातुलेन पृष्टो दुर्योधनः--भो भागिनेय ! तव चेतसि किं दुःखं वर्त्तते ?, यत्त्वं शून्यचित्त इव मुहुर्मुहुर्निःश्वसन् भाषितोऽपि किमप्युत्तरं न ददासि । एवं बलेन मातुलेन वारं वारं भाषितो यावद् न बभाषे, तावद् मातुलो दुर्योधनसमीपे गत्वा पथि यानारूढं गच्छन्तं करे धृत्वा जगाद—भो भागिनेय ! किं तव दुःखस्य कारणम् ?, यदि किमपि गोप्यं न भवति, तर्हि मम सत्यं समाख्याहि । दुर्योधनेनोक्तम्--भो मातुल ! सावधानो भूत्वा शृणु--एते पाण्डवा मम शत्रवः इन्द्रसभातुल्यसभां निर्माय सुखं क्रीडन्ति । तथा येन धर्मपुत्रेण सर्वे राजानो वशीकृताः सन्तः कर्मकरा इव प्रतिष्ठामहे गृहकार्याणि कुर्वन्ति स्म । तथा येन सकलराजानो दानमानैस्तोषिताः सेवका इव सेवां कुर्वन्ति । एतत् सर्वं युधिष्ठिरे पश्यतो ममान्तरात्मा भृशं हुताशने क्षिप्त इव दहति, परं किं करोमि ?, एते पुण्यभाजः, एतैः सह पौरुषेण किमपि न चलति, एतदेव शोचयामि । हे मातुल ! अनया चिन्तया दुर्बलोऽस्म्यहम् । तथैतेषां पाण्डवानां शत्रूणामुच्छेत्तुं कञ्चिद-

द्भुतं सहायमुत्पश्यामि, यः सहाय एतानुच्छेद्य मां तोषयति । यद्येवं न भविष्यति तर्ह्यहमत्रैवात्मानमुद्बध्य निःसंशयं मरिष्यामि । भो मातुल ! त्वं याहि, मम पितुरग्रे एतन्मम वाचिकं निवेदय । एतद् दुर्योधनोक्तं श्रुत्वा शकुनिमातुलो बभाषे--भो धृतराष्ट्रतनय ! तवैतद् वक्तुं युक्तं न । यत एते तव बान्धवास्तवैव शोभां कुर्वन्ति, एते वशीकृतराजानस्तवाऽऽनन्दाय किं न स्युः ?, येन त्वमेवं व्याकुरुषे असहायोऽहं किं करोमि ?। एते तव बान्धवाश्चतुर्दिक्षु प्रसृताः पृथिवीप्लावनक्षमा उद्वेलाः पयोधय इव तवैव शोभाकारिणः । अतस्त्वं खेदं मुञ्च, प्रेमोद्रेकं भजस्व, गजवत् स्वाश्रयं मा भाङ्क्षीः ।

यथा—

"यथा गजपतिः श्रान्तश्छायार्थी वृक्षमाश्रितः ।
विश्रम्य तं द्रुमं हन्ति तथा नीचः स्वमाश्रयम्" ॥१॥

त्वमप्येवं मा कृथाः । एवमुक्तयुक्त्या वारितोऽपि सुयोधनो दुष्टकदाग्रहाद् यावद् न न्यवर्तत, तावद् मातुलः पुनर्बभाषे--हे भागिनेय ! एते तव बान्धवा एकोनशतं दुःशासनादयो रणकर्मणि पाकशासनेनाऽपि दुःसाध्याः, तथाप्येकोऽयं कर्णः सर्वशत्रुक्षयङ्करस्तव सहायोऽस्ति, अहमेकधुरीणस्ते समरेषु समोदरः । अथ एतैः सहायैः परिवृतस्त्वमपि सकलां महीं साधय पाण्डवानपि वशमानय । अथ दुर्योधनो मातुलं प्रत्येवं जगाद--भो मातुल ! पाण्डवैः साधिता पृथ्वी पुनः कथं साध्यते ? । पुनर्मातुलेनोक्तम्--तर्हि पाण्डवान् साधयित्वा पृथ्वीं स्वायत्तां विधेहि । दुर्योधनेनोक्तम्--एते पाण्डवा रणे देवैरपि दुःसाध्याः, तर्हि मानवैः पुनः किं साध्यन्ते ? । भो मातुल ! अन्येन केनचिदुपायेन द्यूतादिना युधिष्ठिरं वशीकरिष्ये । इत्युक्त्वा द्वावपि मार्गे संचलितौ इन्द्रप्रस्थं नगरमीयतुः । पित्रा धृतराष्ट्रेण दुर्योधनस्य नगरे प्रवेशमहः कारितः । दुर्योधनोऽपि समातुलो मातापितरौ पञ्चा-

ङ्गमानस्य पुरतः समुपाविशत्। स्वापान्ते स्थितं मुखमारुतेन निःश्वसन्तं दुर्योधनं प्रियं पुत्रं दृष्ट्वा धरित्रीपतिरब्रवीत्--हे पुत्र-दुर्योधन! त्वमुष्णान् दीर्घोच्छ्वासान् वारं वारं किं मुञ्चसि?, तव केनाऽपि पराभवः कृतः?, अथवा केनापि तवाज्ञा खण्डिता?। अथवा त्वयि केनापि किंचिद् विरूपमाचरितम्, येन त्वं निःश्वासान् मुञ्चन् दुर्मना दृश्यसे। एते तव बान्धवा दुःशासनादयस्तवाज्ञां नातिक्रामन्ति। तथैते राजानस्तव सेवकाः पादपीठलुठन्मौलयः सेवां कुर्वन्ति। तथा धनदपुरजित्वरं तवेन्द्रप्रस्थं नाम नगरमस्ति। तथा जुगुप्सिताप्सरोरूपं तवाऽन्तः पुरमस्ति। दिग्गजानुकारी तव गजसमूहोऽस्ति। सूर्याश्वानुकारी तवाश्वसमूहोऽस्ति। कुबेरभाण्डागाराऽनुकारी रत्नस्वर्णराशिमयस्तव भाण्डागारोऽस्ति। देवविमानानुकारि तव सौधमस्ति। सुरेन्द्ररूपानुहारि तव रूपमस्ति। एवंविधस्य ते सकलसुखभाण्डागारस्य किमन्तश्चिन्ताकारणम्?। यदि किमपि कथ्यं भवति, तर्हि कथ्यताम्। हे तात! त्वया यत्प्रोक्तं तत् सर्वं सत्यमेव ममाऽस्ति, परं तपःसूनोः पुरः केयं ममार्द्धिः?, नदी तावन्मोदयते यावदर्णवो नालोक्यते, आलोककृद् दीपस्तावद् यावद् भानुमान् नोदेति। एवं बहून् दृष्टान्तान् दत्त्वा दुर्योधनः पुनर्बभाषे--हे तात! सर्वे राजानो युधिष्ठिराज्ञामेव ध्यायन्ति, योगिनः परमात्मानमिव। यस्याङ्गणे भूपा मण्डलीबन्धशालिनो धर्मपुत्रगुणानुद्गिरन्ति स्म। यस्य गृहाङ्गणं गजदानवारिभिः पङ्किलीभूतमिव दृश्यते। सूर्याश्वानुकारिणो यस्याऽश्वा हेषन्ते, यस्य गृहाङ्गणे रोहणभूधरानुकारिरत्नराशयो वर्त्तन्ते। एवं सर्वसंपदो दृष्ट्वा मत्सरेण मम हृदयं द्विधा भवति। तत् श्रुत्वा तातेनोक्तम्--भो वत्स! धिगस्तु तव मत्सरम्, त्वं तस्योपरि मत्सरं कुर्वन् किं न लज्जसे?, यैस्तव राज्यं दत्तं, यैस्तव लक्ष्मीर्दत्ता, सर्वत्र विख्यातो विहितः, तैः सह विरोधस्तव सुखाय न भविष्यति। तदा दुर्योधनेनोक्तम्-भोः तात!

इन्द्रो हरिर्दुश्च्यवनोऽच्युताग्रजो
वज्री विडौजा मघवान् पुरन्दरः ।
प्राचीनबर्हिः पुरुहूतवासवौ
संक्रन्दनाऽऽखण्डलमेघवाहनाः ॥ ८५ ॥
सुत्रामवास्तोष्पतिदल्मिशक्रा
वृषा शुनासीरसहस्रनेत्रौ ।
पर्जन्यहर्यश्वऋभुक्षिबाहु-
दन्तेयवृद्धश्रवसस्तुराषाट् ॥ ८६ ॥
सुरर्षभस्तपस्तक्षो जिष्णुर्वरशतक्रतुः ।
कौशिकः पूर्वदिग्देवाऽप्सरःस्वर्गशचीपतिः ॥ ८७ ॥
पृतनाषाडुग्रधन्वा मरुत्वान् मघवा

इन्दति इन्द्रः "भ्रीवृधि-" ॥ (उणा–३८७) ॥ इति रः ॥ १ ॥ हरति दैत्यप्राणानिति हरिः ॥ २ ॥ दुष्टं च्यवते परदारेषु रेतश्च्युतेर्दुश्च्यवनः, नन्द्यादित्वादनः । दुःखेन च्यवते रणाद् वा ॥ ३ ॥ अच्युतस्याऽग्रजो अच्युताग्रजः ॥ ४ ॥ वज्रमस्यास्ति वज्री ॥ ५ ॥ वेवेष्टि विड् व्यापकं ओजोऽस्य विडौजाः पृषोदरादित्वात्, विडं भेदकं ओजो यस्येति वा ॥ ६ ॥ मघः सौख्यमस्याऽस्ति मघवान्, मघो देवसभा सोऽस्यास्तीति वा ॥ ७ ॥ पुराणि अरीणां दारयति, त्रिपुरं वा पुरन्दरः "पुरन्दरभगन्दरौ" ॥ ५।१।११४ ॥ इति खान्तो निपात्यते ॥ ८ ॥ प्राचीनमुखा बर्हिषो दर्भा अस्य प्राचीनबर्हिः । यद्विष्णुपुराणे—

प्राचीनाग्राः कुशास्तस्य पृथिव्यां विश्रुता मुनेः ।
प्राचीनबर्हिरभवत् ख्यातो भुवि महाबलः ॥ १ ॥ ९ ॥

पुरु प्रभूतं हूतं यज्ञेष्वाह्वानमस्य पुरुहूतः ॥ १० ॥ वसति स्वर्गे वासवः "मणिवसेर्णित्" ॥ (उणा–५१६) ॥ इत्यवः, वसुरेव वा प्रज्ञाद्यण्, वस्वपत्यं वा ॥ ११ ॥ संक्रन्दयत्यरिस्त्रीः संक्रन्दनः ॥ १२ ॥ आखण्डयत्याखण्डलः ॥ १३ ॥ मेघो वाहनमस्य मेघवाहनः, इन्द्रो हि मेघानाविश्य वर्षति; मेघऐरावतो वा, अभ्राधिष्ठातृत्वात् ॥ १४॥८५ ॥ सुष्ठु त्रायते सुत्रामा मन्, शोभनं त्राम बलमस्य वा । बाहुलकाद् दीर्घत्वे सूत्रामाऽपि ॥ १५ ॥ वास्तोर्गृहक्षेत्रस्याऽधिष्ठाता वास्तोष्पतिः "वाचस्पतिवास्तोष्पति-" ॥ ३ । २ । ३६ ॥ इति षष्ठयलुपि षत्वम् ॥ १६ ॥ दलति गिरीन् दल्मिः "नीसात्र्युशृवलिदलिभ्यो मिः" ॥ (उणा–६८७) ॥ इति मिः ॥ १७ ॥ शक्नोति शक्रः "भ्रीवृधि-" ॥ (उणा–३८७) ॥

इति रः, शक्रं नाम सिंहासनमस्यास्तीति वा ॥ १८ ॥ वर्षतीति वृषा "इन्द्रो वै वर्षति" इति श्रुतेः "लूपूयुवृषि-" ॥ (उणा-९०१) ॥ इत्यादिना कन् ॥१९॥ शोभनं नासीरमग्रयानमस्य शुनासीरः, शुः पूजायाम्, श्वशुरवत् । दन्त्यादिरपि ॥ २० ॥ सहस्रं नेत्राण्यस्य सहस्रनेत्रः, यत् कौटल्यः– इन्द्रस्य हि मन्त्रिपर्षदृषीणां सहस्रं, स तच्चक्षुस्तस्मात् इन्द्रं द्व्यक्षं सहस्राक्षमाहुः ॥ २१ ॥ परिपर्षति पर्जन्यः ॥ २२ ॥ हरयः पिङ्गा अश्वा अस्य हर्यश्वः ॥ २३ ॥ इयर्ति ऋभुक्षाः "अर्तेर्भुक्षिनक्" ॥ (उणा-९२८) ॥ ऋभून् देवान् क्षयत्याधिवसति इत्यन्ये ॥ २४ ॥ बहुदन्त्या अपत्यं बाहुदन्तेयः ॥ २५ ॥ वृद्धे श्रवसी अस्य वृद्धश्रवाः, वृद्धेभ्यः शृणोतीति वा ॥ २६ ॥ तुरं त्वरितं साहयत्यभिभवत्यरीन्, तुरं वेगं सहते वा तुराषाट्, पृषोदरादित्वात् ॥ २७॥८६ ॥ सुराणामृषभः सुरर्षभः ॥ २८ ॥ तपस्तक्ष्णोति इन्द्रपदप्राप्तिशङ्कयाऽन्येषां तपस्तक्षः ॥ २९ ॥ जयतीत्येवंशीलो जिष्णुः "भूजेः ष्णुक्" ॥ ५।२।३० ॥ इति ष्णुक् ॥ ३० ॥ वराः शतं च क्रतवोऽस्य वरशतक्रतुः वरक्रतुः, शतक्रतुः; शतं क्रतवः प्रतिमाभिग्रहविशेषाः कार्तिकभवेऽस्याऽभूवन् इत्यागमविदः ॥३१॥३२॥ कुशैर्दर्भैश्चरति कौशिकः, जातमात्रस्याऽदित्या कुशैश्छादितत्वात्; यत्पुराणे—

जातमात्रोऽथ भगवानदित्या स कुशैर्वृतः ।
तदा प्रभृति देवेशः कौशिकत्वमुपागतः ॥ १ ॥

कुशिकापत्यमिति वा ॥ ३३ ॥ पूर्वदिशः, देवानां, अप्सरसां, स्वर्गस्य, शच्याश्च पतिः पूर्वदिक्पतिः, देवपतिः, अप्सरःपतिः, स्वर्गपतिः, शचीपतिः, यौगिकत्वात् प्राचीशः, पूर्वदिगीशः, सुरेशः, सुरस्त्रीशः, नाकेशः, शचीशः, पौलोमीश इत्यादयः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ८७ ॥ पृतनां साहयति पृतनाषाट्, पृषोदरादित्वात् षत्वम् ॥ ३९ ॥ उग्रं धनुरस्य उग्रधन्वा ॥ ४० ॥ मरुतो देवाः सन्त्यस्य मरुत्वान् ॥ ४१ ॥ मङ्क्ते मघवा "श्वन्मातरिश्वन्-" ॥ (उणा-९०२) ॥ इत्यनन्तो निपात्यते । मघाऽस्यास्तीति वा "ङ्यापो बहुलं नाम्नि" ॥ २।४।९९ ॥ इति ह्रस्वः । मघं सुखमस्यास्तीति वा ॥ ४२ ॥

शेषश्चात्र—

इन्द्रे तु खदिरो नेरी त्रायस्त्रिंशपतिर्जयः ।
गौरावस्कन्दी वन्दीको वराणो देवदुन्दुभिः ॥ १ ॥
किणालातश्च हरिवान् यामनेमिरसन्महाः ।
शयीचिर्माहिरो वज्रदक्षिणो वियुनोऽपि च ॥ २ ॥

अस्य तु ।

द्विषः पाकोऽद्रयो वृत्रः पुलोमा नमुचिर्बलः ॥ ८८ ॥

जम्भः

अस्येतीन्द्रस्य, द्विषः शत्रवः, ते तु पाकादयः–पात्यात्मानं पाकः "भीण्शालिवलि- " ॥ ( उणा–२१ ) ॥ इति कः ॥ १ ॥ अदन्ति अद्रयः ॥ २ ॥ वर्तते वृत्रोऽहिः " ऋज्यजि- " ॥ ( उणा—३८८ ) ॥ इति रक् ॥ ३ ॥ पुते लोमान्यस्य पुलोमा, पृषोदरादित्वात् तलोपः ॥ ४ ॥ न मुञ्चत्यहंकारं नमुचिः " नाम्युपान्त्य-- " ॥ ( उणा--६०९ ) ॥ इति किः, नखादित्वात् साधुः ॥ ५ ॥ वलति बलः ॥ ६ ॥ ८८ ॥ जम्भते जम्भः, जायत इति वा "गृदृरमि-- " ॥ ( उणा–३२७ ) ॥ इति भः ॥ ७ ॥ ततो ' वध्याद्भिद्द्वेषि– ' (पृ० ५ श्लो० १०) इत्यादिवचनात् पाकद्विट्, अद्रिद्विट्, वृत्रद्विट्, पुलोमद्विट्, नमुचिद्विट्, बलद्विट्, जम्भद्विट् इन्द्रः; यौगिकत्वात् पाकशासनादयः ॥

प्रिया शचीन्द्राणी पौलोमी जयवाहिनी ।

अस्येत्यनुवर्तते । प्रिया भार्या, शचते मधुरं वक्ति शची ॥१॥ इन्द्रस्य भार्या इन्द्राणी " वरुणेन्द्र--" ॥२।४।६२॥ इत्यादिना ङीः, आन् चान्तः ॥ २ ॥ पुलोम्नो मुनेरपत्यं पौलोमी, बाह्वादित्वात् इञ् ॥३॥ जयं वहतीत्येवंशीला जयवाहिनी ॥ ४ ॥

शेषश्चात्र—

स्यात् पौलोम्यां तु शक्राणी चारुधारा शतावरी।
महेन्द्राणी परिपूर्णसहस्रचन्द्रवत्यपि ॥ १ ॥

तनयस्तु जयन्तः स्याज्जयदत्तो जयश्च सः ॥ ८९ ॥

इन्द्रस्य तनयः, जयतीति जयन्तः " तॄजिभूवदि -- " ॥ ( उणा--२२१) ॥ इत्यन्तः ॥ १ ॥ जय एनं देयात् जयदत्तः " तिक्कृतौ नाम्नि " ॥ ५ । १ । ७१ । इति साधुः ॥ २ ॥ जयतीति जयः ॥ ३ ॥

शेषश्चात्र—जयन्ते यागसंतानः ॥ ८९ ॥

सुता जयन्ती तविषी ताविषी

इन्द्रस्य सुता, जयतीति जयन्ती ॥१॥ तवति गच्छति तविषी, ताविषी ॥२॥३

उच्चैःश्रवा हयः ।

इन्द्रस्य हयः, उच्चैः श्रवसी अस्य उच्चैःश्रवाः ॥ १ ॥

शेषश्चात्र--वृषणश्वो हरेर्हये ॥

मातलिः सारथिः

इन्द्रस्य सारथिः, मतलस्यापत्यं मातलिः ॥ १ ॥

शेषश्चात्र---मातलौ हयंकषः स्यात् ॥

देवनन्दी द्वाःस्थः

इन्द्रस्य द्वाःस्थः, देवान् नन्दयतीत्येवंशीलो देवनन्दी ॥ १ ॥

गजः पुनः ॥ ९० ॥

ऐरावणोऽभ्रमातङ्गश्चतुर्दन्तोऽर्कसोदरः ।

ऐरावतो हस्तिमल्लः श्वेतगजोऽभ्रमुप्रियः ॥ ९१ ॥

इन्द्रस्य गजः ॥९०॥ इरावणे भव ऐरावणः ॥१॥ अभ्रस्थत्वात् अभ्रमातङ्गः, अभ्ररूप इत्येके, यत्कात्यः--ऐरावतं विजानीयात् नागमम्बुदगोचरम् ॥२॥ चत्वारो दन्ता अस्य चतुर्दन्तः ॥ ३ ॥ अर्कस्य सोदरोऽर्कसोदरः, द्वयोः समुद्रजातत्वात् ॥ ४ ॥ इरावत्यब्धौ जातः ऐरावतः पुंक्लीबलिङ्गः ॥ ५ ॥ हस्तिनां मल्लः हस्तिमल्लः ॥ ६ ॥ श्वेतश्चासौ गजश्च श्वेतगजः ॥ ७ ॥ अभ्रतीति अभ्रमुः " अभ्रेरमुः " ॥ ( उणा–८०० ) ॥ अभ्रे खे माति न भ्राम्यति वा मन्थरगामित्वात्; यल्लक्ष्यम्--अभ्रम्वां जघनान्तदोलितकरः। तस्याः प्रियोऽभ्रमुप्रियः ॥ ८ ॥

शेषश्चात्र---ऐरावणे मदाम्बरः सदादानो भद्ररेणुः ॥ ९१ ॥

वैजयन्तौ तु प्रासादध्वजौ

इन्द्रस्य प्रासादो ध्वजश्च, वैजयन्ती पताकाऽनयोरस्ति वैजयन्तौ, विजयते विजयन्तो जिष्णुस्तस्येमाविति वा ॥ १ ॥

पुर्यमरावती ।

इन्द्रस्य पुरी, अमराः सन्त्यस्यां अमरावती " अनजिरादि– "॥३।२।७८॥ इत्यादिना मतौ दीर्घत्वम् ॥ १ ॥

शेषश्चात्र–पुरे त्वैन्द्रे सुदर्शनम् ॥

सरो नन्दीसरः

इन्द्रस्य सरः, नन्दीनाम्ना सरो नन्दीसरः ॥ १ ॥

पर्षत् सुधर्मा

इन्द्रस्य पर्षत्, शोभनो धर्मोऽस्यां सुधर्मा । यल्लक्ष्यम्–सुधर्माऽनवमा पुरी ॥१॥

नन्दनं वनम् ॥ ९२ ॥

इन्द्रस्य वनम्, नन्दयति नन्दनम् ॥ १ ॥ ९२ ॥

वृक्षाः कल्पः पारिजातो मन्दारो हरिचन्दनः ।

सन्तानश्च

इन्द्रस्य वृक्षाः, कल्पः संकल्पपूरणत्वात् ॥१॥ पारिणः पारवतोऽब्धेर्जातः पारिजातः ॥ १ ॥ मन्दन्ते मोदन्ते देवा अनेन मन्दारः "अग्यङ्गिमदिमन्दि-" ॥

( उणा–४०५ ) ॥ इत्यारः ॥ १ ॥ हरेरिन्द्रस्य चन्दनो हरिचन्दनः पुंक्लीबलिङ्गः, हरिः कपे पिङ्गश्चन्दन इति वा ॥ १ ॥ संतन्यन्ते पुष्पाण्यस्मिन् संतानः ॥ १ ॥

धनुर्देवायुधं

इन्द्रस्य धनुः, देवानामायुधं देवायुधम् ॥ १ ॥

तदृजु रोहितम् ॥ ९३ ॥

तद् देवेन्द्रधनुरुत्पाते ऋजु अवक्रं, रोहः संजातोऽस्य रोहितम्, रोहितवर्णत्वाद् वा । केचित्तु ऋजुरोहितमिति समस्तमिच्छन्ति ॥ १ ॥ ९३ ॥

दीर्घर्ज्वैरावतं

तदेव दीर्घं ऋजु च, इरावति मेघेऽब्धौ वा भवं ऐरावतं पुंक्लीबलिङ्गः ॥१॥

वज्रं त्वशनिर्ह्लादिनी स्वरुः ।

शतकोटिः पविः शंवो दम्भोलिर्भिदुरं भिदुः ॥ ९४ ॥

व्याधामः कुलिशः

वजति यात्येव न प्रतिहन्यते वज्रं पुंक्लीबलिङ्गः "भीवृधि-" ॥ (उणा–३८७) ॥ इति रः ॥ १ ॥ अश्नुते व्याप्नोति रिपून् ज्वालाभिः अशनिः पुंस्त्रीलिङ्गः "सदिवृत्यमि-" ॥ ( उणा–६८० ) ॥ इत्यनिः ॥ २ ॥ ह्लादः स्फूर्जथुरस्यास्ति ह्लादिनी ॥ ३ ॥ स्वरति स्वरुः पुंसि "भृमृतृत्सरि-" ॥ (उणा--७१६) ॥ इत्युः ॥ ४ ॥ शतं बह्वयः कोटयोऽस्येति शतकोटिः पुंलिङ्गः, यौगिकत्वात् शतारशतधारौ च ॥ ५ ॥ पुनाति पविः पुंसि हीरकस्य पवित्रत्वाम्नानात् ॥६॥ कृत्वा कार्यं शाम्यति शंवः "शम्यमेर्णिद् वा " ॥ ( उणा--३१८ ) ॥ इति वः, शं विद्यतेऽस्येति वा "कंशंभ्यां-" ॥ ७।२।१८॥ इति वः ॥ ७ ॥ दभ्नोति खेदयति दानवान् दम्भोलिः पुंसि " बहुलं " ॥ ५ । १ । २ ॥ इत्योलिः ॥ ८ ॥ भिनत्तीत्येवंशीलं भिदुरम् ॥ ९ ॥ भिनत्तीति भिदुः पुंसि "पृकाहृषि-" ॥ ( उणा--७२९ ) ॥ इति कुः ॥ १० ॥ ९४ ॥ विशेषेणाऽऽदधाति भयं दैत्यानां व्याधामः "अर्तीरि-" ॥ ( उणा--३३८ ) ॥ इति मः ॥ ११ ॥ कोलति सङ्घीकरोति भयदत्वाद् गिरीन् कुलिशः पुंक्लीबलिङ्गः "कुलिकनि-" ॥ (उणा--५३५) ॥ इति किशः, कुलिनः कुलपर्वतान् श्यति पक्षच्छेदेन तनूकरोतीति वा, कुत्सितं लिशति तक्ष्णोत्यरीनिति वा ॥ १२ ॥

अस्यार्चिरतिभीः

अस्य वज्रस्य, अर्चिर्ज्वाला, अतिशयेन बिभेत्यस्याः अतिभीः स्त्रीलिङ्गः ॥ १ ॥

स्फूर्जथुर्ध्वनिः ।

वज्रस्य ध्वनिः, स्फूर्जनं स्फूर्जथुः पुंसि "ट्वितोऽथुः"॥५।३।८३॥ इत्यथुः ॥१॥

स्वर्वैद्यावश्विनीपुत्रावश्विनौ वडवासुतौ ॥ ९५ ॥
नासिक्यावर्कजौ दस्रौ नासत्यावब्धिजौ यमौ ।

स्वर्गस्य वैद्यौ स्वर्वैद्यौ ॥ १ ॥ आश्विन्याः पुत्रौ अश्विनीपुत्रौ, यौगिकत्वात् आश्विनेयौ ॥ २ ॥ अश्वो विद्यतेऽनयोरश्विनौ सदाऽश्वारूढावित्यर्थः ॥ ३ ॥ वडवायाः सुतौ वडवासुतौ ॥ ४ ॥ ९५ ॥ नासिकाभवत्वेन नासिक्यवर्णसदृशौ नासिक्यौ, अश्विन्या नासिकारन्ध्रयो रवे रेतःपातात् उत्पन्नाविति प्रसिद्धिः ॥ ५ ॥ अर्काज्जातौ अर्कजौ ॥ ६ ॥ दस्यतो हरतो रोगान् दस्रौ "भीवृधि-" ॥ (उणा–३८७) ॥ इति रः ॥ ७ नाऽसत्सु साधू नासत्यौ, नाऽसत्याविति वा; नखादित्वात् साधुः ॥ ८ ॥ अब्धेर्जातौ अब्धिजौ ॥ ९ ॥ यमौ युग्मरूपौ ॥ १० ॥ नित्यद्विवचनान्ता इमे ॥

शेषश्चात्र–नासिक्ययोस्तु नासत्यदस्रौ प्रवरवाहनौ ।
गदान्तकौ यज्ञवहौ ॥

विश्वकर्मा पुनस्त्वष्टा विश्वकृद् देववर्धकिः ॥ ९६ ॥

विश्वं करोति विश्वकर्मा, मन् ॥१॥ त्वक्षति त्वष्टा "त्वष्टृक्षत्तृदुहित्रादयः"॥ (उणा--८६५) ॥ २ ॥ विश्वं करोति विश्वकृत् ॥ ३ ॥ देवानां वर्धकिः देववर्धकिः ॥ ४ ॥ ९६ ॥

स्वःस्वर्गिवध्वोऽप्सरसः स्वर्वेश्या उर्वशीमुखाः ।

स्वर्गस्य स्वर्गिणां, च वध्वः स्वर्वध्वः, स्वार्गिवध्वः, यौगिकत्वात् स्वर्गस्त्रियः, सुरस्त्रियः ॥ १॥२ ॥ आप्यन्ते पुण्यैरप्सरसः "आपोपासाप्सराब्जाश्च" ॥ (उणा–९६४) ॥ इत्यस्, आपोऽप्सरादेशश्च; अपः सरन्ति स्मेति वा समुद्रजातत्वाद्, वा बहुवचनान्तः स्त्रीलिङ्गोऽयम्, तेनाऽप्सरा इत्यपि ॥ ३ ॥ स्वर्गस्य वेश्याः स्वर्वेश्याः, स्वरिति स्वर्गिणोऽप्युपलक्षणम्, तेन देवगणिका इत्यपि ॥ ४ ॥ ऊरू अश्नुते नारायणस्योरूद्भवत्वात् उर्वशी, पृषोदरादित्वात् ह्रस्वः, यल्लक्ष्यम्–ऊरूद्भवा नरसखस्य मुनेः सुरस्त्रीमुखग्रहणात् प्रभावत्याद्याः ।

यद्व्याडिः—

अथ ब्रह्मणोऽग्निकुण्डात् समुत्पन्ना प्रभावती ।
वेदितलाद् वेदिवती यमात् पुनः सुलोचना ॥ १ ॥
उर्वशी तु हरेः सव्यमूरुं भित्त्वा विनिर्गता ।
रम्भा तु ब्रह्मणो वक्त्राच्चित्रलेखा तु तत्करात् ॥ २ ॥
शिरसस्तु महाचित्ता स्मृता काकलिसा वसा ।
मरीचिसूचिका चैव विद्युत्पर्णा तिलोत्तमा ॥ ३ ॥
अद्रिका लक्षणा क्षेमा दिव्या रामा मनोरमा ।

हेमा सुगन्धा सुवपुः सुबाहूः सुव्रता सिता ॥ ४ ॥
शारद्वती पुण्डरीका सुरसा सूनृतापि च ।
सुदाता कामला हंसपादी च सुमुखीति च ॥ ५ ॥
मेनका सहजन्या च पर्णिनी पुञ्जिकास्थला ।
ऋतुस्थला घृताची च विश्वाचीत्यप्सरःस्त्रियः ॥ ६ ॥

हाहादयस्तु गन्धर्वा गान्धर्वा देवगायनाः ॥ ९७ ॥

गानप्रारम्भे हाहाकरणात् हाहाः पुंसि, गन्धर्वविशेषस्य नामेदम्, हाहा आदिर्येषां ते हाहादयः, आदिशब्दात् हूहूस्तुम्बुरुर्वृषणाश्वो विश्वावसुर्वसुरुचिरित्यादयः । हाहाहूहूरिति पुंलिङ्गमेकमखण्डं नामेत्येके । गन्धर्वौ च हाहाहूहूरिति तु लक्ष्यम् । अव्ययावित्येके, यद्वाचस्पतिः— हसो हाहाहूहू च द्वौ वृषणाश्वश्च तुम्बुरुः । गन्धयन्ते हिंसन्ति दुःखं गन्धर्वाः "गन्धेरर् चान्तः" ॥ ( उणा-८ ) ॥ इति वः, गौर्ध्रियते वाक् सप्तस्वरसंपन्ना तिष्ठत्यत्रेति वा ॥ १ ॥ गन्धर्व गान्धर्वाः ॥ २ ॥ देवानां गायना देवगायनाः ॥ ३ ॥ ९७ ॥

यमः कृतान्तः पितृदक्षिणाशाप्रेतात्पतिर्दण्डधरोऽर्कसूनुः ।
कीनाशमृत्यू समवर्तिकालौ शीर्णाह्रिहर्यन्तकधर्मराजाः ॥९८॥
यमराजः श्राद्धदेवः शमनो महिषध्वजः ।
कालिन्दीसोदरश्चापि

यमयति यमः, यमलजातत्वाद् वा ॥ १ ॥ कृतोऽन्तोऽनेन कृतान्तः ॥ २ ॥ पितृशब्दात्, दक्षिणाशाशब्दात्, प्रेतशब्दाच्च परः पतिः पितृपतिः, दक्षिणाशापतिः, प्रेतपतिः ॥ ३॥४॥५ ॥ दण्डमस्त्रं धरति दण्डधरः ॥ ६ ॥ अर्कस्य सूनुः अर्कसूनुः ॥ ७ ॥ कनति दीप्यते कीनाशः " कनेरीश्चातः " ॥ ( उणा–५३४ ) । इत्याशः ॥ ८ ॥ म्रियतेऽनेन मृत्युः पुंसि " मुस्त्युक् " ॥ ( उणा--८०५ ) । इति त्युक् ॥ ९ ॥ राज्ञि रङ्के च समं वर्तत इत्येवंशीलः समवर्ती ॥१०॥ कालयति क्षिपत्यायुः कालः ॥ ११ ॥ शीर्णावंह्री अस्य शीर्णाह्रिः, शनैश्चरेणास्य दृशाऽवलोकितौ पादौ दग्धौ इति हि प्रसिद्धिः ॥१२॥ हरति प्राणान् हरिः ॥ १३ । अन्तयतीति अन्तकः ॥१४॥ धर्मस्य राजा धर्मराजः ॥१५॥९८॥ यमनेन राजते यमराजः, यमराड् इत्यपि ॥१६॥ श्राद्धे देवः श्राद्धदेवः पितृपतित्वात् ॥ १७ । शमयति शमनः ॥१८॥ महिषो ध्वजोऽस्य महिषध्वजः, महिषवाहनत्वात् ॥१९। कालिन्द्याः सोदरः कालिन्दीसोदरः ॥२०॥

शेषश्चात्र--यमे तु यमुनाग्रजः ।
महासत्यः पुराणान्तः कालकूटः ॥

धूमोर्णा तस्य वल्लभा ॥ ९९ ॥

तस्य यमस्य, वल्लभा भार्या, धूमवद् धूसरा ऊर्णा भ्रूमध्यावर्तोऽस्या धूमोर्णा ॥ १ ॥ ९९ ॥

पुरी पुनः संयमनी

संयम्यन्ते प्राणिनोऽस्यां संयमनी ॥ १ ॥

प्रतीहारस्तु वैध्यतः ।

विध्यतोऽपत्यं वैध्यतः ॥ १ ॥

दासौ चण्डमहाचण्डौ

अत्यन्तकोपनत्वात् चण्डो महाचण्डश्च ॥ १ ॥ २ ॥

चित्रगुप्तस्तु लेखकः ॥ १०० ॥

चित्रे लिखिते गुप्तः, चित्रमेनं गुप्यादिति वा चित्रगुप्तः ॥ १ ॥ १०० ॥

स्याद् राक्षसः पुण्यजनो नृचक्षा
यात्वाशरः कौणपयातुधानौ ।
रात्रिंचरो रात्रिचरः पलादः
कीनाशरक्षोनिकसात्मजाश्च ॥ १०१ ॥
क्रव्यात् कर्बुरनैर्ऋतावसृक्पः

रक्ष एव राक्षसः, प्रकृतेर्लिङ्गवचने बाधन्ते स्वार्थिकाः क्वचित् ॥ (लिङ्गा--१३५) ॥ इति पुंस्त्वम् ॥ १ ॥ पुण्यश्चासौ जनश्च पुण्यजनो विपरीतलक्षणया ॥ २ ॥ नॄन् चष्टे नृचक्षाः "चक्षः शिद् वा" ॥ (उणा--९६९) इत्यस् ॥ ३ ॥ यातीति यातु क्लीबलिङ्गः "कृसिकमि-" ॥ (उणा-७७३) ॥ इति तुन्, यातयति व्यथयतीति वा, यातुधानशब्दैकदेशो वा भीमवत्; पुंस्यपि धनपालः, यदाह--क्रव्यादा यातवो यातुधानाः ॥ ४ ॥ आ शृणाति हिनस्ति आशरः ॥ ५ ॥ कुणपस्यायं भक्षकः कौणपः, कुणपं अत्तीति वा "क्वचित्" ॥ ६ । २ । १४५ ॥ इत्यण् ॥ ६ ॥ यातूनि यातना धीयन्तेऽस्मिन् यातुधानः ॥ ७ ॥ रात्रौ चरति रात्रिंचरः "चरेष्टः" ॥ ५ । १ । १३८ ॥ इति टे "नवाऽखित्कृदन्ते रात्रेः" ॥ ३ । २ । ११७ ॥ इति वा मोऽन्तः पक्षे रात्रिचरः ॥ ८ ॥ ९ ॥ पलमत्ति पलादः ॥ १० ॥ कनति दीप्यते कीनाशः, कीनमामं मांसं अश्नातीति वा ॥ ११ ॥ रक्षन्ति अस्मात् रक्षः "अस्" ॥ (उणा--९५२) इत्यस् ॥ १२ ॥ नितरां कसति पतिं गच्छति निकसा तस्या आत्मजो निकसात्मजः, यौगिकत्वात् नैकसेय इत्यादयः ॥ १३ ॥ १०१ ॥ क्रव्यमामं मांसमत्तीति क्रव्याद् "क्रव्यात्क्रव्यादावामपक्वादौ" ॥ ५ । १ । १५१ ॥ इति

साधुः । क्रव्यादोऽपि ॥ १४ ॥ कर्बुरवर्णत्वात् कर्बुरः, कर्वति गच्छतीति वा "वाश्यसि-" ॥ ( उणा--४२३ ) ॥ इत्युरः ॥ १५ ॥ निर्ऋतेर्दिक्पालस्याऽपत्यं नैर्ऋतः ॥ १६ ॥ असृक् पिबति असृक्पः ॥ १७ ॥

शेषश्चात्र–अथ राक्षसे ।

पलप्रियः खसापुत्रः कर्बरो नरविष्वणः ।
आशिरो हनुषः शङ्कुर्विधुरो जललोहितः ॥ १ ॥
उद्वरः स्तब्धसंभारो रक्तग्रीवः प्रवाहिकः ।
संध्याबलो रात्रिबलस्त्रिशिराः समितीपदः ॥ २ ॥

**वरुणस्त्वर्णवमन्दिरः प्रचेताः ।**
**जलयाद:पतिपाशिमेघनादा**
**जलकान्तारः स्यात् परञ्जनश्च ॥ १०२ ॥**

वृणाति बिभर्ति वरुणः "कृवृदृदारिभ्य उणः" ॥ ( उणा-१९६ ) ॥ इत्युणः ॥ १ ॥ अर्णवो मन्दिरमस्याऽर्णवमन्दिरः ॥ २ प्रकृष्टं चेतोऽस्य, प्रचेतयते वा प्रचेताः ॥ ३ ॥ जलयादसोः पतिर्जलयाद:पतिः जलपतिः, यादःपतिः, यौगिकत्वात् अपां नाथः, यादोनाथ इत्यादयः ॥ ४ ॥ ५॥ पाशोऽस्याऽस्तीति पाशी, यौगिकत्वात् पाशपाणिरित्यादयः ॥ ६ ॥ मेघवद् नादोऽस्य मेघनादः ॥ ७ ॥ जलमेव कान्तारमस्य जलकान्तारः ॥ ८ ॥ परं जयति परञ्जनः "विद-नगगन-" ॥ ( उणा–२७५ ) ॥ इत्यादिशब्दाद् निपात्यते ॥ ९ ॥

शेषश्चात्र—

वरुणे तु प्रतीचीशो दुन्दुभ्युद्दामसंवृताः ॥ १०२॥

**श्रीदः सितोदरकुहेशसखाः पिशाच–**
**कीच्छावसुस्त्रिशिरऐलविलैकपिङ्गाः ।**
**पौलस्त्यवैश्रवणरत्नकराः कुबेर–**
**यक्षौ नृधर्मधनदौ नरवाहनश्च ॥ १०३ ॥**
**कैलासौका यक्षधननिधिकिंपुरुषेश्वरः ।**

श्रियं ददाति श्रीदः ॥ १ ॥ सितमुदरं यस्य सितोदरः, कुष्ठित्वात् ॥ २ ॥ कुहयते विस्मापयते कुहः ॥ ३ ॥ ईशस्य रुद्रस्य सखा ईशसखः ॥ ४ ॥ पिशाचाः सन्त्यस्य पिशाचकी "वातातीसारपिशाचात् कश्चान्तः" ॥ ७ । २ । ६१ ॥ इति इन् ॥ ५ ॥ इच्छया वसुस्य इच्छावसुः ॥ ६ ॥ त्रीणि शिरांस्यस्य त्रिशिराः ॥७॥ ईड्यतेऽसाविति ईडविड् विश्रवाः "ईडेरविड् ह्रस्वश्च" ॥ ( उणा–

८७९ ) ॥ तस्याऽपत्यं ऐडविडः, लत्वे ऐलविलः, ईडविड् धनदमातेत्यन्ये ॥ ८ ॥ एकं पिङ्गमस्य एकपिङ्गः, पिङ्गलैकनेत्रत्वात्, अत एव भागुरिणा हर्यक्ष उक्तः ॥ ९ ॥ पुलस्तेरपत्यं वृद्धं पौलस्त्यः "गर्गादेर्यञ्" ॥ ६। १। ४२ ॥ इति यञ् ॥ १० ॥ विश्रवसोऽपत्यं वैश्रवणः "णश्च विश्रवसो विश्लुक् च वा" ॥ ६। १। ६५ ॥ इति साधुः ॥ ११ ॥ रत्नानि करेऽस्य रत्नकरः ॥ १२ ॥ कुत्सितं बेरं शरीरमस्य कुष्ठित्वात् कुबेरः, कूयत इति वा "कुगुपतिकथि-" ॥ ( उणा- ४३१ ) ॥ इति केरः ॥ १३ ॥ किन्नरादिष्वप्यस्ति यक्षजातित्वाद् यक्षः ॥१४॥ नुर्मनुष्यस्येव धर्मः श्मश्रुलत्वादिरस्य नृधर्मा "द्विपदाद् धर्मादन्"॥७।३। १४१ ॥ इत्यन् समासान्तः, एवं मनुष्यधर्माऽपि ॥ १५ ॥ धनं ददाति धनदः ॥ १६ ॥ नरो वाहनमस्य नरवाहनः ॥ १७ ॥ १०३ ॥ कैलास ओकोऽस्य कैलासौकाः ॥ १८ ॥ यक्षाणां, धनस्य, निधीनां, किंपुरुषाणां च ईश्वरः यक्षेश्वरः, धनेश्वरः, निधीश्वरः, किंपुरुषेश्वरः, यौगिकत्वाद् गुह्यकेशः, वित्तेशः, निधानेशः, किंनरेशः। राजराजस्तु राज्ञां यक्षाणां राजेति यौगिकत्वाद् गृहीतः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

शेषश्चात्र—

धनदे निधनाक्षः स्याद् महासत्त्वः प्रमोदितः ।
रत्नगर्भ उत्तराशाऽधिपतिः सत्यसंगरः ॥
धनकेलिः सुप्रसन्नः परिविद्धः ॥

**विमानं पुष्पकं**

श्रीदस्येति शेषः । पुष्पस्य तुल्यं पुष्पकं "तस्य तुल्ये कः संज्ञाप्रतिकृत्योः" ॥ ७। १। १०८ ॥ इति कः ॥ १ ॥

**चैत्ररथं वनं**

चित्ररथेन निर्वृत्तं चैत्ररथं "तेन निर्वृत्ते च" ॥ ६। २। ७१ ॥ इत्यण् ॥ १ ॥

**पुरी प्रभा ॥ १०४ ॥**

**अलका वस्वोकसारा**

प्रकर्षेण भाति प्रभा ॥ १ ॥ १०४ ॥ अलति भूषयति अलका "दृकृनृ-" ॥ ( उणा--२७ ) ॥ इत्यकः, क्षिपकादित्वादित्वाभावः ॥ २ ॥ वसुयुक्तानि ओकांसि सारमस्यां वस्वोकसारा, पृषोदरादित्वात् सलोपः ॥ ३ ॥

शेषश्चात्र—अलका पुनः । वसुप्रभा वसुसारा ॥

**सुतोऽस्य नलकूबरः ।**

नलो नडः कूबरं रथावयवोऽस्य नलकूबरः ॥ १ ॥

वित्तं रिक्थं स्वापतेयं राः सारं विभवो वसु ॥ १०५ ॥
द्युम्नं द्रव्यं पृक्थमृक्थं स्वमृक्णं द्रविणं धनम् ।
हिरण्यार्थौ

विद्यते लभ्यते वित्तं "वित्तं धनप्रतीतम्" ॥ ४ । २ । ८२ ॥ इति क्तस्य नत्वाभावः ॥ १ ॥ रिच्यते विभज्यते रिक्थम् "नीनूरमि-" ॥ (उणा–२२७) ॥ इति थक् ॥ २ ॥ स्वपतौ साधु स्वापतेयम् "पथ्यातिथि-" ॥ ७ । १ । १६ ॥ इत्येयण् ॥ ३ ॥ राति एतं राः स्त्रीपुंसलिङ्गः "रातेर्डैः" ॥ (उणा--८६६) ॥ इति डैः ॥ ४ ॥ सरति कालान्तरं सारं क्लीबलिङ्गः, पुंस्यपि धनपालः, यदाह-- सारोऽर्थो द्रविणं धनम् । सरतेः स्थिरार्थे घञ् ॥ ५ ॥ विभवति विभवः ॥ ६ ॥ वस्ते छादयति, वसतीश्वरगृहे वा वसु क्लीबलिङ्गः ॥ ७ ॥ १०५ ॥ द्युभिर्मीयते द्युम्नं "द्युसुनिभ्यो माङो डित्" ॥ (उणा--२६६) ॥ इति नः ॥ ८ ॥ द्रुतुल्यं द्रव्यं "द्रोर्भव्ये" ॥ ७ । १ । ११५ ॥ इति यः; यथा--द्रुरग्रन्थि अजिह्मं दारु उपकल्प्यमानं विशिष्टेष्टरूपं भवति, तथा धनमपि विनियुज्यमानं विशिष्टेष्टमाल्याद्युपभोगफलं भवतीति द्रव्यमुच्यते ॥ ९ ॥ पृणक्ति संयुज्यते पृक्थं "नीनूरमि-" ॥ (उणा--२२७) ॥ इति बहुवचनात् थक् ॥ १० ॥ एवं ऋच्यते स्तूयते ऋक्थम् ॥ ११ ॥ अस्यते क्षिप्यते स्वं पुंक्लीबलिङ्गः "प्रह्वाह्वा-" ॥ (उणा--५१४) ॥ इति वान्तो निपात्यते, स्वनतीति वा ॥ १२ ॥ ऋच्यते स्तूयते ऋक्णं "घृवीह्वा-" ॥ (उणा--१८३) ॥ इति बहुवचनाद् णक् ॥ १३ ॥ द्रवति द्रविणम् "द्रुहृत्रृहि-" ॥ (उणा--१९४) ॥ इति इणः ॥ १४ ॥ धनति शब्दायते धनं पुंक्लीबलिङ्गः, धन्यत इति वा वर्षादित्वाद् अल् ॥ १५ ॥ ह्रियते हिरण्यं "हिरण्यपर्जन्यादयः" ॥ (उणा--३८०) ॥ इति साधुः ॥ १६ ॥ अर्यतेऽसौ अर्थः "कमिप्रुगार्तिभ्यस्थः" ॥ (उणा--२२५) ॥ इति थः, अर्थ्यत इति वा ॥ १७ ॥

निधानं तु कुनाभिः शेवधिर्निधिः ॥ १०६ ॥

निधीयते एतदिति निधानं, भुज्यादित्वात् कर्मणि अनट् ॥ १ ॥ कोः पृथिव्या नाभिरिव कुनाभिः पुंसि ॥ २ ॥ शेते शेवं स्थाप्यधनं "शीङापो ह्रस्वश्च वा" ॥ (उणा--५०६) ॥ इति वः, तद्धीयतेऽस्मिन्निति शेवधिः पुंसि "व्याप्यादाधारे" ॥ ५ । ३ । ८८ ॥ इति किः, पुंक्लीबयोर्वाचस्पतिः, यदाह- निधिः शेवधिरस्त्रियाम् ॥ ३ ॥ नियतं धीयते निधिः पुंसि ॥ ४ ॥ १०६ ॥

निधिविशेषानाह----

महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ।

मुकुन्दकुन्दनीलाश्च चर्चाश्च निधयो नव ॥ १०७ ॥

महापद्माकृतित्वात् महापद्मः ॥ १ ॥ पद्माकृतित्वात् पद्मः पुंसि; वाचस्पतिस्तु- पद्मोऽस्त्रियाम्, इत्याह ॥ १ ॥ शङ्खाकारत्वात् शङ्खः ॥ १ ॥ मकराकारत्वाद् मकरः ॥ १ ॥ कच्छपाकारत्वात् कच्छपः ॥ १ ॥ मुकुन्दवर्णत्वाद् मुकुन्दः ॥ १ ॥ कुन्दवर्णत्वात् कुन्दः ॥ १ ॥ नीलवर्णत्वाद् नीलः ॥ १ ॥ चर्च्यत इति चर्चाः पुंसि ॥ १ ॥ जैनसमये तु नैसर्पाद्या निधयः, यदवोचाम त्रिषष्टिशलाकापुरुषचरिते-

नैसर्पः पाण्डुकश्चाथ पिङ्गलः सर्वरत्नकः ।
महापद्मः कालमहाकालौ माणवशङ्खकौ ॥ १ ॥
तेषामेवाभिधानैस्तु तदधिष्ठायकाः सुराः ।
पल्योपमायुषो नागकुमारास्तन्निवासिनः ॥ २ ॥ १०७ ॥

यक्षः पुण्यजनो राजा गुह्यको वटवास्यपि ।

इज्यत इति यक्षः "मावावद्यमि-" ॥ (उणा--५६४) ॥ इति सः, यक्ष्यत इति वा ॥ १ ॥ पुण्यश्चासौ जनश्च पुण्यजनः ॥ २ ॥ राजते राजा ॥ ३ ॥ गुह्यं वित्तं करोति गुह्यकः, गूहतीति वा "कीचक-" ॥ (उणा--३३) ॥ इत्यादिशब्दाद् निपात्यते ॥ ४ ॥ वटे वसतीत्येवंशीलो वटवासी ॥ ५ ॥

किंनरस्तु किंपुरुषस्तुरङ्गवदनो मयुः ॥ १०८ ॥

कुत्सितो नरः, अश्वमुखत्वात् किंनरः "किं क्षेपे" ॥ ३ । १ । ११० ॥ इति समासः ॥ १ ॥ एवं किंपुरुषः ॥ २ ॥ तुरङ्गस्येव वदनमस्य तुरङ्गवदनः ॥ ३ ॥ मिनोति मयुः "मिवहिचरिचटिभ्यो वा" ॥ (उणा--७२६) ॥ इत्युः ॥ ४ ॥ १०८ ॥

शंभुः शर्वः स्थाणुरीशान ईशो
रुद्रोड्डीशौ वामदेवो वृषाङ्कः ।
कण्ठेकालः शङ्करो नीलकण्ठः
श्रीकण्ठोग्रौ धूर्जटिर्भीमभर्गौ ॥ १०९ ॥
मृत्युञ्जयः पञ्चमुखोऽष्टमूर्तिः
श्मशानवेश्मा गिरिशो गिरीशः ।
षण्ढः कपर्दीश्वर ऊर्ध्वलिङ्ग-
एकत्रिदृग्भालदृगेकपादः ॥ ११० ॥
मृडोऽट्टहासी घनवाहनोऽहि-

बुध्नो विरूपाक्षविषान्तकौ च ।
महाव्रती वह्निहिरण्यरेताः
शिवोऽस्थिधन्वा पुरुषास्थिमाली ॥ १११ ॥
स्याद् व्योमकेशः शिपिविष्टभैरवौ
दिक्कृत्तिवासा भवनीललोहितौ ।
सर्वज्ञनाट्यप्रियखण्डपर्शवो
महापरा देवनटेश्वरा हरः ॥ ११२ ॥
पशुप्रमथभूतोमापतिः पिङ्गजटेक्षणः ।
पिनाकशूलखट्वाङ्गगङ्गाऽहीन्दुकपालभृत् ॥ ११३ ॥
गजपूषपुरानङ्गकालान्धकमखाऽसुहृत् ।

शं सुखं तत्र भवति शंभुः "शंसंस्वयंविप्राद् भुवो डुः" ॥ ५।२।८४॥ इति डुः ॥ १ ॥ शृणाति संहरति शर्वः "लटिखटि---" ॥ ( उणा--- ५०५ ) ॥ इति वः ॥ २ ॥ तिष्ठति शाश्वतं स्थाणुः " अजिस्थाकृरीभ्यो णुः"॥ ( उणा--७६८) ॥ इति णुः ॥ ३ ॥ ईष्टे इत्येवंशीलः ईशानः, ताच्छील्ये शानः ॥ ४ ॥ ईष्टे इशः ॥ ५ ॥ रोदनाद् रुद्रः "ऋज्यजि--" ॥ (उणा--३८८) ॥ इति रक्, "सोऽरोदीद् यदरोदीत् तद् रुद्रस्य रुद्रत्वम्" इति श्रुतेः; रोदयत्यरिस्त्रीर्वा " खुरक्षुर--" ॥ ( उणा--३९६ ) इति निपात्यते ॥ ६ ॥ उद्दिशत्यागमविशेषं उड्डीशः, पृषोदरादित्वात् ॥ ७ ॥ वामः श्रेष्ठो देवो वामदेवः, संसारवामत्वाद् वा ॥ ८ ॥ वृषोऽङ्कं चिह्नमस्य वृषाङ्कः, यौगिकत्वाद् वृषलाञ्छन इत्यादयः ॥ ९ ॥ कण्ठे कालोऽस्य कण्ठेकालः "अमूर्धमस्तकात् स्वाङ्गादकामे" ॥ ३।२।२२ ॥ इति सप्तम्या अलुप् ॥ १० ॥ शं सुखं करोति शङ्करः "हेतुतच्छीलानुकूले-" ॥ ५।१।१०३ ॥ इति टः ॥ ११ ॥ नीलः कण्ठोऽस्य नीलकण्ठः ॥ १२ ॥ श्रीः शोभा कण्ठेऽस्य श्रीकण्ठः; तथाहि महाभारते—

इन्द्रेण तत् पुरा क्षिप्तं वज्रं श्रीकण्ठकाषिणा ।
दग्ध्वा कण्ठं तु तं पार्थ ! ततः श्रीकण्ठता मम ॥ १ ॥ १३ ॥

उच्यति क्रुधा समवैति, ओषति पुरं दहतीति वा उग्रः "खुरक्षुर-" ॥ ( उणा--३९६ ) ॥ इति रान्तो निपात्यते ॥ १४ ॥ धूर्गङ्गा जटासु अस्य धूर्जटिः पृषोदरादित्वात्, धूर्भारभूता जटयो जटा अस्येति वा, "धूम्रं रूपं च यत् तस्य तेन धूर्जटिरुच्यते" इति वा ॥ १५ ॥ बिभ्यत्यस्माद् भैरवरूपाद् भीमः "भियः षोऽन्तश्च वा" ॥ ( उणा--३४४ ) ॥ इति मः ॥ १६ ॥ बिभर्ति शक्तिं भर्गः "गम्यमि-" ॥ ( उणा--९२ ) ॥ इति गः, भृज्ज्यन्तेऽनेन काम-

कालादयो वा ॥ १७ ॥ १०९ ॥ मृत्युं जयति मृत्युञ्जयः "भृवृजि-" ॥ ५ । १ । ११२ ॥ इत्यादिना संज्ञायां खः ॥ १८ ॥ पञ्च मुखानि सद्योजातवामदेवाऽघोरतत्पुरुषेशानलक्षणानि अस्य पञ्चमुखः ॥ १९ ॥ अष्टौ मूर्त्तयः क्षितिजलपवनहुताशनयजमानाकाशसूर्यचन्द्रलक्षणा अस्य अष्टमूर्तिः ॥ २० ॥ श्मशानं वेश्माऽस्य श्मशानवेश्मा ॥ २१ ॥ गिरिरस्यास्ति गिरिशः "लोमपिच्छादेः शेलम्" ॥ ७ । २ । २८ ॥ इति शः, गिरौ शेते, गिरिं श्यति उपभोगेन तनूकरोतीति वा ॥ २२ ॥ गिरेरीशो गिरीशः ॥ २३ ॥ ऋषिभिः शापेन पातितलिङ्गत्वात् षण्ढः, यद्वामनपुराणे—

ततस्तमृषयो दृष्ट्वा भार्गवाङ्गिरसो मुने ! ।
क्रोधभाजोऽब्रुवन् सर्वे लिङ्गोऽस्य पततां भुवि ॥ १ ॥ २४ ॥

कपर्दोऽस्याऽस्ति कपर्दी ॥ २५ ॥ ईष्ट इत्येवंशील ईश्वरः "स्थेशभास-" ॥ ५ । २ । ८१ ॥ इति वरः ॥ २६ ॥ ऊर्ध्वं लिङ्गमस्य ऊर्ध्वलिङ्गः, नकुलीशमूर्तौ ॥ २७ ॥ एका तिस्रश्च दृशो यस्य स तथा एकदृक्, अर्धनारीश्वरमूर्तौ महेश्वराङ्गस्य एकदृक्त्वात्; त्रिदृक् ललाटे नेत्रयोगात्, यौगिकत्वात् एकनेत्रः, विषमनेत्रः ॥ २८ ॥ २९ ॥ भाले दृगस्य भालदृग् ॥ ३० ॥ अर्धनारीश्वरमूर्तौ एकः पादोऽस्य एकपात् "सुसंख्यात्" ॥ ७ । ३ । १५० ॥ इति पादस्य पाद्भावः । एकत्रिदृगादीनां त्रयाणां द्वन्द्वः ॥ ३१ ॥ ११० ॥ मृडति सुखयति मृडः ॥ ३२ ॥ अट्टहासोऽस्याऽस्ति अट्टहासी ॥ ३३ ॥ घना मेघा वाहनमस्य घनवाहनः, यौगिकत्वात् अब्दवाहनादयोऽपि ॥ ३४ ॥ अहिः शेषनागो बुध्नेऽस्य भूमूर्तेः अहिर्बुध्नः, पृषोदरादित्वाद् रेफागमः, द्वाभ्यां पृथक्पदाभ्यां प्रथमैकवचनान्ताभ्यां एकं नामेत्यन्ये, विभक्त्यन्तरेऽपि यथा–"अहये बुध्नाय नमो बुध्नाय नमो नमोऽस्तु गणपतये"॥३५॥ विरूपाणि विषमत्वाद् अक्षीण्यस्य विरूपाक्षः "सक्थ्यक्ष्णः स्वाङ्गे" ॥ ७ । ३ । १२६॥ इति टः ॥३६॥ विषमन्तयति विषान्तकः, समुद्रमथने विषभक्षणात् ॥३७॥ महाव्रतं कापालिकलिङ्गं विद्यतेऽस्य महाव्रती ॥ ३८ ॥ वह्निहिरण्यशब्दाभ्यां परो रेतःशब्दः वह्निरेताः वह्नौ रेतोऽस्येति कृत्वा, देव्या सोढुमशक्यत्वात् अग्नौ हि क्षिप्तं रेतः, अत एव अग्निभूः कुमारः ॥ ३९ ॥ हिरण्यं रेतोऽस्य हिरण्यरेताः, अग्निमूर्तिना ह्यमुना हिरण्यं प्रसूतमिति ॥ ४० ॥ शिवहेतुत्वात् शिवः, शेते वसति प्रलये जगदस्मिन्निति वा "शीङापो ह्रस्वश्च वा" ॥ ( उणा–५०६ ) ॥ इति वः ॥ ४१ ॥ अस्थिमयं धन्वाऽस्य अस्थिधन्वा ॥ ४२ ॥ पुरुषास्थीनि मलते धारयतीत्येवंशीलः पुरुषास्थिमाली ॥ ४३ ॥ १११ ॥ व्योम द्यौः के मूर्धनि शेतेऽस्य व्योमकेशः "शीर्षे द्यौः समवर्तत" इति श्रुतेः, गङ्गां धारयितुं व्योमव्यापिनः केशा अस्येति वा ॥ ४४ ॥ शिविर्नाम राजा नारायणेन हतः स चेश्वरस्याऽत्यन्तं प्रिय इति तस्याऽस्थीनि शिरसि धृतानि, अतः पिष्टोऽस्थ्यादिरूपेण शिविरत्र - शिपिविष्टः, पृषोदरादित्वात्; शिपिरिन्द्रलुप्तवातस्तेन विष्टो व्याप्त इति

वा ॥ ४५ ॥ बिभर्ति कपालं, बिभ्यत्यस्मादिति वा भैरवः "कैरवभैरव-" ॥ (उणा-५१९) ॥ इति निपात्यते ॥ ४६ ॥ दिशः कृत्तिश्च वासोऽस्य दिक्कृत्तिवासाः दिग्वासा नग्नत्वात्, कृत्तिवासा गजाजिनसंव्यानत्वात्; यौगिकत्वाद् दिग्वस्त्रः, चर्मवसन इत्यादयः ॥ ४७ ॥ ४८ ॥ भवत्यस्माद् रजोगुणापन्नाद् विश्वमिति भवः, औणादिकः अः ॥ ४९ ॥ नीलः कण्ठे लोहितश्च केशेषु अतो नीललोहित-इति पुराणम् ॥ ५० ॥ सर्वं जानाति सर्वज्ञः ॥ ५१ ॥ नाट्यं प्रियमस्य नाट्य-प्रियः ॥ ५२ ॥ दैत्ययुद्धे खण्डीभूतः पर्शुरस्य खण्डपर्शुः ॥ ५३ ॥ महापरा देवनटेश्वरा इति महांश्चासौ देवश्च महादेवः, तथा महानटः, नाट्यसृष्टिकारित्वात्; तथा महेश्वरः महोदधिवद् रूढः ॥ ५४ ॥ ५५ ॥ ५६ ॥ हरत्यघं हरः ॥ ५७ ॥ ॥ ११२ ॥ पशूनां, प्रमथानां, भूतानां, उमायाश्च पतिः पशुपतिः, सुरनरतिरश्चां पशुत्वेनोक्तत्वात् "आब्रह्मान्तं लोकाः पशवः" इति स्मृतेः; प्रमथपतिः, भूत-पतिः, उमापतिः; यौगिकत्वात् पशुनाथः, गणनाथः, भूतनाथः, गौरीनाथ इत्या-दयः ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ पिङ्गा जटा ईक्षणं च यस्य स तथा पिङ्गजटः, पिङ्गेक्षणः ॥ ६२ ॥ ६३ ॥ पिनाकं च शूलं च खट्वाङ्गं च गङ्गां च अहिं च इन्दुं च कपालं च बिभर्ति पिनाकभृत्, शूलभृत्, खट्वाङ्गभृत्, गङ्गाभृत्, अहिभृत्, इन्दुभृत्, कपालभृत्; यौगिकत्वात् पिनाकपाणिः, शूली, खट्वाङ्गधरः, गङ्गाधरः, उरगभूषणः, शशिभूषणः, कपाली इत्यादयः ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ११३ ॥ गजस्य, पूष्णः, पुरस्य, अनङ्गस्य, कालस्य, अन्ध-कस्य, मखस्य असुहृत् गजासुहृत्, गजासुरहन्तृत्वात्; पूषासुहृत्, दक्षाध्वरध्वं-सने हि पूष्णो दन्ता महेश्वरेण पातिताः, यद्वामनपुराणे----

ततः क्रोधाभिभूतेन पूष्णो वेगेन शंभुना ।
मुष्टिनाऽऽहत्य दशनाः पातिता धरणीतले ॥ १ ॥

पुरासुहृत्, शंभोराग्नेयबाणेन त्रिपुरस्य प्लुष्टत्वात्; अनङ्गासुहृत्, शंभो-स्तृतीयनेत्राग्निना कामस्य दग्धत्वात्; कालासुहृत्, दक्षमखध्वंसे यमस्य जित-त्वात्; अन्धकासुहृत्, अन्धको हि समरे शूलेन शूलिना प्रोतः; मखासुहृत्, दक्षस्य हि मखो महेश्वरेण विध्वंसितः; यौगिकत्वात् गजासुरद्वेषी, पूषदन्तहरः, त्रिपुरान्तकः, कामध्वंसी, यमजित्, अन्धकाऽरिः, दक्षाध्वरध्वंसक इत्यादयः ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥

शेषश्चात्र--

शंकरे नन्दिवर्धनः ।
बहुरूपः सुप्रसादो मिहिराणोऽपराजितः ॥
कङ्कटीको गुह्यगुरुर्भगनेत्रान्तकः खरुः ।
परिणाहो दशबाहुः सुभगोऽनेकलोचनः ॥ १ ॥
गोपालो वरवृद्धोऽहिपर्यङ्कः पांसुचन्दनः ।

कूटकृद् मन्दरमणिर्नवशक्तिर्महाम्बुकः ॥ २ ॥
कोणवादी शैलधन्वा विशालाक्षोऽक्षतखनः ।
उन्मत्तवेषः शबरः शिताङ्गो धर्मवाहनः ॥ ३ ॥
महाकान्तो वह्निनेत्रः स्त्रीदेहार्द्धो नृवेष्टनः ।
महानादो नराधारो भूरिरेकादशोत्तमः ॥ ४ ॥
जोटी जोटीङ्गोऽर्धकूटः समिरो धूम्रयोगिनौ ।
उलन्दो यजतः कालो जटाधरदशाव्ययौ ॥ ५ ॥
संध्यानाटी रेरिहाणः शंकुश्च कपिलाञ्जनः ।
जगद्योणिरर्धकलो दिशांप्रियतमोऽतलः ॥ ६ ॥
जगत्स्रष्टा कटाटङ्कः कटप्रूहीरहृत्कराः ॥

## कपर्दोऽस्य जटाजूटः

अस्य शंभोः, कं शिरः पिपर्त्ति कपर्दः "शशपि-" ॥ (उणा--२३७) ॥ इति बहुवचनाद् दः ॥ १ ॥ जटानां जूटो रचनाविशेषो जटाजूटः ॥ २ ॥

## खट्वाङ्गस्तु सुखंसुणः ॥ ११४ ॥

खट्वाया अङ्गमिव सरलत्वेनेषासदृशत्वात् खट्वाङ्गः, क्लीबेऽपि, यद्व्याडिः– खट्वाङ्गं शिवपांशुलम् ॥ १ ॥ सुष्ठु खं सुनोति संबध्नाति सुखंसुणः "भ्रूणतृण-" ॥ (उणा–१८६) ॥ इत्यादिशब्दाद् णान्तो निपात्यते ॥ २ ॥ ११४ ॥

## पिनाकं स्यादाजगवमजकावं च तद्धनुः ।

पिनष्टि अरीन् पिनाकं पुंक्लीबलिङ्गः "पिषेः पिन्पिण्यौ च" ॥ (उणा· ३६) ॥ इत्याकः ॥ १ ॥ अजगवोऽस्थिविकारः तस्येदं आजगवं, यत्कात्यः· धनुर्वदन्त्याजगवं पिनाकिकरगोचरम् ॥ २ ॥ अजका ग्रहणस्थानमस्याऽस्ति अजकावं "मण्यादिभ्यः" ॥ ७। २। ४४ ॥ इति वः, अमरस्तु–"पिनाकोऽजगवं धनुः" इत्याह; प्राच्यास्तु–"अजगावं धनुः प्रोक्तम्" इत्याहुः ॥ ३ ॥

## ब्राह्म्याद्या मातरः सप्त

ब्रह्मण इयं ब्राह्मी, ब्रह्माणीति शैवप्रसिद्धम्, सा आद्या आसां ब्राह्म्याद्याः । भ्रमन्ति वर्तन्ते मातृनाम्न्यः शम्भोः परिकरभूताः, यदुक्तम्—

स्मृताद्या ब्रह्माणी सिद्धी माहेश्वरी च कौमारी ।
वैष्णव्यथ वाराही चामुण्डा मातरः सप्त ॥ १ ॥

## प्रमथाः पार्षदा गणाः ॥ ११५ ॥

प्रमथन्ति अरीन् प्रमथाः ॥ १ ॥ पर्षदि साधवः पार्षदाः "पर्षदो ण्यणौ" ॥ ७। १। १८ ॥ इति णः, पारिषदा इत्यपि, यद् व्याडिः–गणास्तु प्रमथाः पारिषदाः कूष्माण्डकादयः ॥ २ ॥ गण्यन्ते दिव्यपदप्राप्त्येति गणाः ॥३॥११५॥

कुलिशकेसरिकेतुकुटाङ्कभृत् ।
सृजति पाणिरमुष्य शिशोः सतां
शुचिरसौ चिरसौख्यमुदीक्षितः ॥ ४६ ॥

अमुष्य शिशोः असौ शुचिः पवित्रः, पाणिः उदीक्षितः दृष्टः सन्, सतां चिरसौख्यं नित्यसुखं, सृजतीत्युत्तरार्धेनाऽन्वयः । पूर्वार्धेन पाणिं विशिनष्टि--पाणिः कीदृशः, कमलं प्रतीतं, कूर्मः कच्छपः, कुलं गृहं, अङ्कुशः सृणिः, कान्तिमान् सूर्यः, कुलिशं वज्रं, अथवा कान्तिमत् इति कुलिशविशेषणम् ; केसरी प्रतीतः, केतुर्ध्वजः, कुटः कुम्भः ; एतेषां अङ्को भूषा लक्ष्म वा बिभर्तीति पूर्वार्धार्थः ॥ ४६ ॥

तदयमेव भविष्यति मेदिनी-
प्रियतमः खलु यानबलर्धिभृत् ।
गमनमस्य शिशोरनयत् त्रपां
कलमरालमरालतयोज्झितम् ॥ ४७ ॥

तदिति तस्माद्धेतोः, अयमेव शिशुः, किं०, यानबलर्द्धिं बिभर्त्तीति यानबलर्द्धिभृत्, अत एव मेदिनीप्रियतमो राजा, भविष्यतीत्यन्वयः । तद्धेतुमाह--अत्र यच्छब्दोऽध्याह्रियते, तेन यद् यस्मात्कारणात्, अस्य शिशोः, गमनं गतिः, कलमरालं कलहंसं, त्रपां लज्जां, अनयत् नयति स्मेति, अत्र धातुर्द्वैकर्म्यं, गमनं किं०, अरालतया वक्रतया, उज्झितं सरलमिति भावार्थः ॥ ४७ ॥

अतिभरामयमेकपराक्रमी
ननु धरिष्यति यज्जगतो धुरम् ।
अनुसरन् गतिमस्य कथं नव-

श्चरति गौरतिगौरगुणाश्रियः ? ॥ ४८ ॥

अतिगौरगुणश्रियोऽस्य शिशोः, गतिं अनुसरन्, कथं नवो गौर्वृषभः, चरति गच्छति, अपि तु नेत्यन्वयः; अस्य गतेरनुकारी न स्यादिति तात्पर्यम्। तद्धेतुमेवाह—यदिति यस्माद्धेतोः, अयं शिशुः, एकपराक्रमी सन्, जगतोऽतिभरां महाभारामपि, धुरं धरिष्यति, नवो गौस्तु पराक्रमवानपि एकाकी धुरं न धरतीति निगर्वः ॥ ४८ ॥

इति जगत्प्रभुतापिशुनैर्महो-
दयकृतिप्रवणैर्वरलक्षणैः ।
पृथुशिराः पृथुकः श्रयते श्रियं
सकमलैः कमलैरिव वापिका ॥ ४९ ॥

इति व्यावर्णितस्वरूपैः, पुनः, जगत्प्रभुतापिशुनैर्विश्वैश्वर्यसूचकैः, पुनः, महोदयकृतिप्रवणैः सर्वाऽभ्युदयकरणपरायणैः, वरैः प्रधानैर्लक्षणैः, अयं पृथुको बालकः, कीदृशः, पृथुशिरा विस्तीर्णशीर्षः, श्रियं श्रयते शोभां भजति इत्यन्वयः। दृष्टान्तमाह--यथा सकमलैः सश्रीकैः, कमलैर्वापिका वापीत्यर्थः ॥४९॥

अतिमहत्तरकारणकारणा-
ऽगणितलक्षणलक्षणलक्षितम् ।
अमुमुदीक्ष्य शिशुं गुरवोऽदधु-
र्मुदममी दममीनमहार्णवाः ॥ ५० ॥

अतिमहत्तराणां द्विषतां यत् कारणं घातनं तत्कारणानि प्रकृष्टहेतुभूतानि यानि अगणितानि गणनाऽतीतानि लक्षणानि नामानि येषां तानि लक्षणानि लाञ्छनानि तैर्लक्षितं अलङ्कृतं, अमुं शिशुं उदीक्ष्य दृष्ट्वा, गुरवोऽधिकारात् श्रीवि-

कुलिशकेसरिकेतुकुटाङ्कभृत् ।
सृजति पाणिरमुष्य शिशोः सतां
शुचिरसौ चिरसौख्यमुदीक्षितः ॥ ४६ ॥

अमुष्य शिशोः असौ शुचिः पवित्रः, पाणिः उदीक्षितः दृष्टः सन्, सतां चिरसौख्यं नित्यसुखं, सृजतीत्युत्तरार्धेनाऽन्वयः । पूर्वार्धेन पाणिं विशिनष्टि--पाणिः कीदृशः, कमलं प्रतीतं, कूर्मः कच्छपः, कुलं गृहं, अङ्कुशः सृणिः, कान्तिमान् सूर्यः, कुलिशं वज्रं, अथवा कान्तिमत् इति कुलिशविशेषणम्; केसरी प्रतीतः, केतुर्ध्वजः, कुटः कुम्भः; एतेषां अङ्को भूषा लक्ष्म वा बिभर्तीति पूर्वार्धार्थः ॥ ४६ ॥

तदयमेव भविष्यति मेदिनी-
प्रियतमः खलु यानबलर्धिभृत् ।
गमनमस्य शिशोरनयत् त्रपां
कलमरालमरालतयोज्झितम् ॥ ४७ ॥

तदिति तस्माद्धेतोः, अयमेव शिशुः, किं०, यानबलर्द्धिं बिभर्त्तीति यानबलर्द्धिभृत्, अत एव मेदिनीप्रियतमो राजा, भविष्यतीत्यन्वयः । तद्धेतुमाह—अत्र यच्छब्दोऽध्याह्रियते, तेन यद् यस्मात्कारणात्, अस्य शिशोः, गमनं गतिः, कलमरालं कलहंसं, त्रपां लज्जां, अनयत् नयति स्मेति, अत्र धातुर्द्विकर्म्यं, गमनं किं०, अरालतया वक्रतया, उज्झितं सरलमिति भावार्थः ॥ ४७ ॥

अतिभरामयमेकपराक्रमी
ननु धरिष्यति यज्जगतो धुरम् ।
अनुसरन् गतिमस्य कथं नव-

श्चरति गौरतिगौरगुणश्रियः?॥ ४८॥

अतिगौरगुणश्रियोऽस्य शिशोः, गतिं अनुसरन्, कथं नवो गौर्वृषभः, चरति गच्छति, अपि तु नेत्यन्वयः; अस्य गतेरनुकारी न स्यादिति तात्पर्यम्। तद्धेतुमेवाह—यदिति यस्माद्धेतोः, अयं शिशुः, एकपराक्रमी सन्, जगतोऽतिभरां महाभारामपि, धुरं धरिष्यति, नवो गौस्तु पराक्रमवानपि एकाकी धुरं न धरतीति निगर्वः॥ ४८॥

इति जगत्प्रभुतापिशुनैर्महो-

दयकृतिप्रवणैर्वरलक्षणैः।

पृथुशिराः पृथुकः श्रयते श्रियं

सकमलैः कमलैरिव वापिका॥ ४९॥

इति व्यावर्णितस्वरूपैः, पुनः, जगत्प्रभुतापिशुनैर्विश्वैश्वर्यसूचकैः, पुनः, महोदयकृतिप्रवणैः सर्वाऽभ्युदयकरणपरायणैः, वरैः प्रधानैर्लक्षणैः, अयं पृथुको बालकः, कीदृशः, पृथुशिरा विस्तीर्णशीर्षः, श्रियं श्रयते शोभां भजति इत्यन्वयः। दृष्टान्तमाह--यथा सकमलैः सश्रीकैः, कमलैर्वापिका वापीत्यर्थः॥४९॥

अतिमहत्तरकारणकारणा-

ऽगणितलक्षणलक्षणलक्षितम्।

अमुमुदीक्ष्य शिशुं गुरवोऽदधु-

र्मुदममी दममीनमहार्णवाः॥ ५०॥

अतिमहत्तराणां द्विषतां यत् कारणं घातनं तत्कारणानि प्रकृष्टहेतुभूतानि यानि अगणितानि गणनाऽतीतानि लक्षणानि नामानि येषां तानि लक्षणानि लाञ्छनानि तैर्लक्षितं अलङ्कृतं, अमुं शिशुं उदीक्ष्य दृष्ट्वा, गुरवोऽधिकारात् श्रीवि-

जयदानसूरयः, मुदं हर्षं, अदधुरिति धरन्ति स्मेत्यन्वयः । गुरवः कीदृशाः, दममीनमहार्णवाः उपशमरूपमत्स्यमहाम्भोधयः, तदाधारत्वात् ॥ ५० ॥

सुदृगयं जयसिंहशिशुर्व्रति-
व्रतकलत्रकरग्रहणोत्सुकः ।
शुभति तत्र पुरे सममम्बया
सदयया दयया सुकृती यथा ॥ ५१ ॥

सुदृक् सुलोचनः, सुधीर्वा, सुदर्शनो वा; अयं जयसिंहशिशुः, किं०, व्रतिव्रतकलत्रकरग्रहणोत्सुकः संयमस्त्रीपरिणयनपरायणः, तत्र पुरे सूरतिबन्दिरे, अम्बया मात्रा, समं सार्धं, शुभति शोभते, अम्बया किंलक्षणया, सदगया सद्भाग्यया, यथा सुकृती पुण्यवान्, दयया कृपया, शुभतीति दृष्टान्तः ॥५१॥

सांप्रतं जयसिंहकुमारस्य दीक्षामहोत्सवो वर्ण्यते—

अथ जगज्जनचित्तचमत्कृति-
प्रसित आविरभूदतिशायिमुत् ।
सपदि तत्र महोत्सव उल्लस-
ल्लवमयोऽवमयोगलताहिमम् ॥ ५२ ॥

अथेति अन्यदा, तत्र सूरतिबन्दिरे, सपदि महोत्सवः आविरभूत् प्रकटीबभूव, महोत्सवः कीदृशः, जगज्जनचित्तचमत्कृतौ विश्वलोकचेतश्चमत्कारे, प्रसितः परायणः, पुनः किं०, अतिशायिमुत् घनहर्षदायीति, पुनः किं०, उल्लसन् यो लवो विलासः तन्मयस्तत्प्रधानः, अत्र प्राधान्ये मयट्; पुनः कीदृशः, अवमयोगलतायां पापयोगवल्लौ हिमं तुहिनं, तत्प्लोषकत्वादिति ॥ ५२ ॥

अतुलमङ्गलकृद् धवलध्वनिः
समभवत् पुरि तत्र तदीरितः ।
हृदनयन् विकृतिं ननु याः सदा
युवतयो बत ! योगजुषामपि ॥ ५३ ॥

पुनस्तत्र पुरे, याः पश्चिमार्धे वर्णयिष्यामः, ताभिः स्त्रीभिरीरितस्तदीरितः, धवलध्वनिर्मङ्गलारवः, समभूत्। कीदृशः, अतुलमङ्गलानि करोतीति सोऽतुलमङ्गलकृत् निस्तुलकल्याणकारीति पूर्वार्धम्; या युवतयः स्त्रियः, बतेति कोमलामन्त्रणे, योगजुषां योगिनां, हृद् हृदयं, विकृतिं विकारं, अनयन् नयन्ति स्मेति ॥ ५३ ॥

नटनमाविरभूत् पणसुभ्रुवां
तदिह हारि जितामरसुभ्रुवाम् ।
नयनयोः पथि यन्नयतां नृणां
समुदभूद् मुदभूतसुखाङ्कुरः ॥ ५४॥

पुनरिह पुरे, हारि मनोज्ञं, तन्नटनं नाट्यं, आविरभूत्। कासां, पणसुभ्रुवां पण्याङ्गनानां पात्रनामधारिणीनां, स्वैरिणीनामिति योगः; पण्याङ्गनानां किं०, जितामरसुभ्रुवां निर्जितनिर्जराङ्गनानां, रूपयौवनहावभावादिभिरिति शेषः । तत्किमित्याह—यन्नटनं नयनयोः पथि नयतां पश्यतां नराणां, मुद् हर्षः, समुदभूत्; कीदृक्, अभूतं पुरा कदाऽप्यजातं यत्सुखं तस्याङ्कुरो बीजं कारणमिति यावत् ॥ ५४ ॥

उदयदर्यमरम्यरुचां भरै-
र्भवति या खचिते वसुधातले ।

जयदानसूरयः, मुदं हर्षं, अदधुरिति धरन्ति स्मेत्यन्वयः । गुरवः कीदृशाः, दममीनमहार्णवाः उपशमरूपमत्स्यमहाम्भोधयः, तदाधारत्वात् ॥ ५० ॥

सुदृगयं जयसिंहशिशुर्व्रति-
व्रतकलत्रकरग्रहणोत्सुकः ।
शुभति तत्र पुरे सममम्बया
सदयया दयया सुकृती यथा ॥ ५१ ॥

सुदृक् सुलोचनः, सुधीर्वा, सुदर्शनो वा; अयं जयसिंहशिशुः, किं०, व्रतिव्रतकलत्रकरग्रहणोत्सुकः संयमस्त्रीपरिणयनपरायणः, तत्र पुरे सूरतिबन्दिरे, अम्बया मात्रा, समं सार्धं, शुभति शोभते, अम्बया किंलक्षणया, सदयया सद्भाग्यया, यथा सुकृती पुण्यवान्, दयया कृपया, शुभतीति दृष्टान्तः ॥५१॥

सांप्रतं जयसिंहकुमारस्य दीक्षामहोत्सवो वर्ण्यते—

अथ जगज्जनचित्तचमत्कृति-
प्रसित आविरभूदतिशायिमुत् ।
सपदि तत्र महोत्सव उल्लस-
ल्लवमयोऽवमयोगलताहिमम् ॥ ५२ ॥

अथेति अन्यदा, तत्र सूरतिबन्दिरे, सपदि महोत्सवः आविरभूत् प्रकटीबभूव, महोत्सवः कीदृशः, जगज्जनचित्तचमत्कृतौ विश्वलोकचेतश्चमत्कारे, प्रसितः परायणः, पुनः किं०, अतिशायिमुत् घनहर्षदायीति, पुनः किं०, उल्लसन् यो लवो विलासः तन्मयस्तत्प्रधानः, अत्र प्राधान्ये मयट्; पुनः कीदृशः, अवमयोगलतायां पापयोगवल्लौ हिमं तुहिनं, तत्प्लोषकत्वादिति ॥ ५२ ॥

अतुलमङ्गलकृद् धवलध्वनिः
समभवत् पुरि तत्र तदीरितः।
हृदनयन् विकृतिं ननु याः सदा
युवतयो बत ! योगजुषामपि ॥ ५३ ॥

पुनस्तत्र पुरे, याः पश्चिमार्धे वर्णयिष्यामः, ताभिः स्त्रीभिरीरितस्तदीरितः, धवलध्वनिर्मङ्गलारवः, समभूत्। कीदृशः, अतुलमङ्गलानि करोतीति सोऽतुलमङ्गलकृत् निस्तुलकल्याणकारीति पूर्वार्धम्; या युवतयः स्त्रियः, बतेति कोमलामन्त्रणे, योगजुषां योगिनां, हृद् हृदयं, विकृतिं विकारं, अनयन् नयन्ति स्मेति ॥ ५३ ॥

नटनमाविरभूत् पणसुभ्रुवां
तदिह हारि जितामरसुभ्रुवाम्।
नयनयोः पथि यन्नयतां नृणां
समुदभूद् मुदभूतसुखाङ्कुरः ॥ ५४॥

पुनरिह पुरे, हारि मनोज्ञं, तन्नटनं नाट्यं, आविरभूत्। कासां, पणसुभ्रुवां पण्याङ्गनानां पात्रनामधारिणीनां, स्वैरिणीनामिति योगः; पण्याङ्गनानां किं०, जितामरसुभ्रुवां निर्जितानिर्जराङ्गनानां, रूपयौवनहावभावादिभिरिति शेषः। तत्किमित्याह—यन्नटनं नयनयोः पथि नयतां पश्यतां नराणां, मुद् हर्षः, समुदभूत्; कीदृक्, अभूतं पुरा कदाऽप्यजातं यत्सुखं तस्याङ्कुरो बीजं कारणमिति यावत् ॥ ५४ ॥

उदयदर्यमरम्यरुचां भरै-
र्भवति या खचिते वसुधातले।

अजनि सा नगरे रुचिरेऽद्भुतै-
रुरुणि माऽरुणिमास्पदकुङ्कुमैः ॥ ५५ ॥

उदयन् उद्गच्छन् योऽर्यमा सूर्यस्तस्य रम्यरुचां मनोहरप्रभाणां भरैः, खचिते व्याप्ते, वसुधातले या चतुर्थचरणाऽऽनीता, मा लक्ष्मीः, स्यात्; अद्भुतैराश्चर्यैः, रुचिरे तत्र नगरे, पुनः किं, उरुणि विस्तीर्णे, अरुणिमास्पदकुङ्कुमै रक्तिमापदघुसृणैः, सा मा, अजनि जातेत्यर्थः ॥ ५५ ॥

अजनि चङ्गमृदङ्गकदम्बक-
प्रमुखतूर्यरवः स तदा महान् ।
य इतवान् जगतां लघु रोदसी-
विवरगो वरगोचरमात्मनः ॥ ५६ ॥

तदा तत्र क्षणे, महान् चङ्गानां वाद्यविशेषाणां, देश्यभाषया मनोज्ञानां वा; मृदङ्गानां मुरजानां यत् कदम्बकं समूहः तत्प्रमुखाणि यानि तूर्याणि तूराणि तेषां रवः शब्दः, सः अजनि जज्ञे। स क इत्याह—यो रवः, लघु शीघ्रं, रोदसीविवरगः दिवस्पृथिवीप्राप्तः सन्, जगतां आत्मनो जीवलोकस्येति, वरगोचरं प्रधानविषयं, इतवान् प्राप्तवानिति ॥ ५६ ॥

रविसुतः किमितो बहुरूपवान्
ननु निरीक्ष्य तदा ददतो जनान् ।
महसि तत्र धनानि पुरेऽर्थिनो-
ऽभ्यधुरिदं धुरि दम्भभिदां स्थिताः ॥५७॥

तदा तत्र पुरे, तत्र महसि दीक्षामहे, जनान् धनानि ददतो निरीक्ष्य अर्थिनः, किं०, दम्भभिदां निष्कपटानां, धुरि स्थिता

इदं अभ्यधुः वदन्ति स्म । किमित्याह–किं बहुरूपवान् रविसुतः कर्णनामा राट्, इतोऽत्राऽऽगतवान्, तस्य हि "सैष कर्णो महात्यागी" इति दातृत्वश्रुतेरिति ॥ ५७ ॥

मणिमनोरममौक्तिककाञ्चना-
ऽऽभरणभूषितभूरिमृगीदृशः ।
अतुलमङ्गलगीतसृजस्तदा
श्रियमिता यमिताद्भुतकञ्चुकाः ॥५८॥

मणिभिः मनोरमैर्मौक्तिकैश्च काञ्चनाभरणैश्च भूपिता अलङ्कृता या भूरिमृगीदृशो बहुहरिणीनेत्राः, किं०, अतुलमङ्गलानि सृजन्तीति ता धवलमङ्गलानि गायन्त्य इति, तदा तत्र महे, श्रियं इताः प्राप्ताः, पुनः किं०, यमितो यन्त्रितोऽद्भुतः कञ्चुको याभिस्ताः ॥ ५८ ॥

इति पुरे दिवति प्रवरोत्सवैः
पुरजनेऽपि च निर्जरति श्रिया ।
त्रिदशनाथति चात्र शिशूत्तमे
सुधिषणा धिषणा गुरवोऽभवन् ॥ ५९ ॥

इत्यमुना वर्णकेन व्यावर्णितैः, प्रवरोत्सवैः पुरे सूरतिबन्दिरे, दिवति देवलोक इवाचरिते सति, पुनः, पुरजने श्रिया संपत्त्या, शोभया वा; निर्जरति देव इवाचरिते सति, पुनः, अत्र शिशूत्तमे जयसिंहे कुमारे, त्रिदशनाथति इन्द्र इवाचरिते सति, गुरवः श्रीविजयदानसूरिपादाः, कीदृशाः, सुधिषणाः सुबुद्धयः, धिषणा बृहस्पतय इव, अभवन्; इत्येकोनषष्ट्या वृत्तैर्द्रुतविलम्बितच्छन्दसा वर्णनम् । अथ तु स्वागताच्छन्दसा, तल्लक्षणं चेदम् " स्वागतेति रनभाद् गुरुयुग्मम् " ॥ ५९ ॥

शोभितः सुभगमौक्तिकरत्न-
स्वर्णभूषणगणेन यथाऽर्हम् ।
हेमतन्तुततदिव्यदुकूलः
श्रीतनूज इव रूपसुरूपः ॥ ६० ॥

दीक्षादिने जयसिंहकुमारः, कीदृशः, सुभगमौक्तिकरत्न-स्वर्णभूषणगणेन यथाऽर्हं शोभितो राजितः, पुनः किं०, हेमतन्तुभिस्ततं विस्तीर्णं वा, निर्मितं वा दिव्यं दुकूलं यस्य सः। उत्प्रेक्ष्यते--श्रीतनूजः कन्दर्प इव, किं०, रूपेण सुरूपो रम्यः, " सुरूपस्तु बुधे रम्ये " इत्यनेकार्थत्वात् ॥ ६० ॥

ईदृक् कः किं च कृतवानित्याह—

नागजारुणशिरस्कमथोच्चं
कुम्भिनं कनकशृङ्खलकान्तम् ।
आरुरोह जयसिंहकुमारः
पूर्वपर्वतमिवाम्बुजबन्धुः ॥ ६१ ॥

स जयसिंहकुमारः, कुम्भिनं गजं, आरुरोहेत्यन्वयः । किं० गजं, नागजारुणशिरस्कं सिन्दूररक्तशीर्षं, पुनः, उच्चं तुङ्गं, पुनः कनकशृङ्खलेन कान्तम् । दृष्टान्तमत्राह--पूर्वपर्वतं उदयाचलं अब्जबन्धुः सूर्य इव । इति युग्मव्याख्या ॥ ६१ ॥

पद्ममस्य कमलाङ्कितमास्यं
तेन नौ घटत एतदुपास्तिः ।
चामरच्छलत आशु मराला-
वित्यवेत्य तमिवाऽऽगतवन्तौ ॥ ६२ ॥

अस्य जयसिंहस्य, आस्यं मुखं, कमलया लक्ष्म्या अङ्कि-

तमलङ्कृतं, पद्ममासीत्, तेन नौ आवयोः, एतदुपास्तिर्घटते युज्यते, इति हेतोः आशु शीघ्रं, चामरच्छलतः, मरालौ हंसौ, तं जयसिंहं, इत्यवेत्य ज्ञात्वा; इवोत्प्रेक्ष्यते--आगतवन्तौ; सेवितुमिति हृदयम् ॥ ६२ ॥

आननेन यदनेन जितोऽहं
सर्वदोदयभृता सुभगेन ।
सेव्यते स्म शशिनेव तदानीं
छत्रकैतववतेति कुमारः ॥ ६३ ॥

यत् अनेन कुमारेण, अहं आननेन मुखेन, जितः, आननेन किं०, सर्वदा उदयभृता सदोदयेनेति, पुनः, सर्वदा सुभगेन, इति हेतोः, कुमारो जयसिंहनामा, शशिना चन्द्रेण उक्तविशेषणद्वयाविपरीतस्वरूपेण, सेव्यते स्मेति, शशिना किं०, छत्रकैतववता आतपत्रदम्भभृतेति भावः ॥ ६३ ॥

रूपमस्तु सुभगं खलु मा दृग्-
दोषदूषितममुष्य मुखस्य ।
अञ्जनं न्यधित पौरपुरन्ध्री
काचिदस्य दृशि धन्यधियेति ॥ ६४ ॥

तदानीमिति सर्वत्र योज्यं, अमुष्य बालस्य, रूपं सुभगं दृग्दोषदूषितं माऽस्तु मा भवतु, इति धन्यधिया साधुबुद्ध्या, काचित् अनिर्दिष्टनामिका, पौरपुरन्ध्री नागरनारी, अस्य दृशि नेत्रे, स्वर्णाऽऽभरणादि विहाय अञ्जनं कज्जलमेव, न्यधित स्थापयामासेत्यर्थः ॥ ६४ ॥

शोणिमानमधरोष्ठरसज्ञा-
तालुमूलमतुलं कलयत् किम् ।

आस्यमस्य शुशुभे भृशरक्तं
नागवल्लिदलरङ्गतरङ्गैः ? ॥ ६५ ॥

नागवल्लिदलरङ्गतरङ्गैर्भृशरक्तं अस्य आस्यं शुशुभे इत्यन्वयः । किमित्युत्प्रेक्षायां, अधरोष्ठरसञ्जातालुमूलं अतुलं शोणिमानं कलयत् दधत्, अस्तीत्युत्प्रेक्ष्यते; अनेन रक्तताऽतिशायित्वमुक्तमिति ॥ ६५ ॥

भाविगच्छविभुतासुरवल्ले-
रालवाल इव दीप्तिपयोभूः ।
मूर्ध्नि रत्नमुकुटो विकटोऽभा-
दस्य जात्यकनकोत्कट उच्चैः ॥ ६६ ॥

अस्य मूर्ध्नि विकटः पृथुः, रम्यो वा, यदाहुः श्रीहेमाचार्यपादा अनेकार्थसंग्रहे—"विकटः कराले पृथुरम्ययोः" इति; विकटो रत्नमुकुटः, पुनः किं०, जात्येन कनकेन उत्कटः, अभात् शुशुभे इत्यन्वयः। इवोत्प्रेक्ष्यते—भाविगच्छविभुतासुरवल्लेः आगमिष्यद्गच्छैश्वर्यकल्पलतायाः, आलवालः स्थानकमिव, कीदृक्, दीप्तिपयोभूः कान्तितोयास्पदम् ॥ ६६ ॥

अस्य कुन्दकुमुदेन्द्वनुकारः
शोभते स्म हृदि हार उदारः ।
उल्लसल्लवणिमैकपयोधेः
फेनपिण्ड इव पाण्डिमपूर्णः ॥ ६७ ॥

अस्य बालस्य, हृदि हारः शोभते स्मेत्यन्वयः। हारः किं०, कुन्दकुमुदेन्दूनां अनुकारः साम्यं यस्य सः, पुनः, उदारः। इवोत्प्रेक्ष्यते—उल्लसल्लवणिमैकपयोधेः देदीप्यमानलावण्यार्णवस्य, फेनपिण्डः, कीदृशः, पाण्डिम्नाऽतिपाण्डुरत्वेन पूर्ण इति ॥६७॥

कुण्डले कनककान्तमणीरुग्-
मण्डले शिशुमुखे शुशुभाते ।
राहुभीतिचकितौ रविचन्द्रौ
निर्भयं शरणमेनमितौ किम् ? ॥ ६८ ॥

कनककान्तमणीनां सुवर्णरम्यरत्नानां रुग्मण्डलं कान्ति-कदम्बकं ययोस्ते, कुण्डले कर्णाभरणे, शिशुमुखे जयसिंहानने, शुशुभाते इत्यन्वयः। किं०, एनं बालं, निर्भयं, मत्वेत्यध्याहारः कार्यः, राहुभीतिचकितौ सन्तौ रविचन्द्रौ शरणं इतौ प्राप्तौ ॥ ६८ ॥

कान्तकुन्तलविलासिनि सौमी
मूर्धनि स्रगनघा शुशुभेऽस्य ।
शारदे नभसि नीलतमे किं
निर्मला तरलतारकराजी ? ॥ ६९ ॥

अस्य मूर्धनि अनघा निर्मला, सुमानां पुष्पाणामियं सौमी, स्रक् कुसुममाला, शुशुभे इत्यन्वयः। मूर्धनि किं०, कान्ता ये कुन्तलाः केशास्तैर्विलासिनि शोभमाने। किमित्युत्प्रेक्ष्यते—नीलतमेऽतिनीले, शारदे शरत्कालसंबन्धिनि, नभसि व्योम्नि, तरला भास्वरा तारकाणां राजी श्रेणीति ॥ ६९ ॥

गन्धबन्धुरपयोभरसेका-
ऽत्यन्तशान्तपृथुपौरपरागे ।
लोकलोचनचयोत्सवनृत्य-
त्तोरणप्रगुणकाञ्चनकुम्भे ॥ ७० ॥

मण्डपोल्लसदखण्डदुकूल-

व्रातवारितसदातपतापे ।
लोकयन् नगरवर्त्मनि लोकान्
संचचार जयसिंहकुमारः ॥ ७१ ॥

नगरवर्त्मनि पुरमार्गे, कीदृशे, गन्धबन्धुरः सुगन्धिर्यः पयोभरस्तस्य यः सेकः सेचनं तेनाऽत्यन्तं शान्तः शमितः पृथुर्विस्तीर्णः पौरपरागः पुररेणुर्यत्र तस्मिन्, पुनर्नगरवर्त्मनि किं०, लोकलोचनचयस्य जननयनवृन्दस्य उत्सवप्रायाणि यानि नृत्यन्ति वातादिना वेल्लन्ति तोरणानि तत्र प्रगुणाः पट्टकृताः काञ्चनकुम्भा यस्मिंस्तस्मिन् ॥ ७० ॥ पुनर्नगरवर्त्मनि किं०, मण्डपे विचित्रवस्त्रादिमाण्डिते उल्लसन्तो ये दुकूलव्राताः पट्टकूलपटलास्तैर्वारितः सदाऽऽतपस्य विद्यमानोपतापस्य निरन्तरातपस्य वा तापः कष्टं यस्मिंस्तस्मिन् नगरपथे, लोकान् नरनारीरूपान् नागरजनान्, लोकयन् निभालयन्, जयसिंहकुमारः संचचाराऽचलत्, तपस्यार्थमिति। इति युग्मव्याख्या ॥ ७१ ॥

स्वर्णमौक्तिकमणिप्रकरोद्यद्-
भूरिभूषणविभूषितदेहा ।
दानमर्थिनिवहाय ददाना
मूर्त्तिभृत् सुरलतेव रथस्था ॥ ७२ ॥

चीनचीररुचिरा फणिवल्ली-
पत्रपूर्णवदना वनजाक्षी ।
वारिराशिदुहिता किमु साक्षा-
दन्वगात् तनुजमेनमथाम्बा ? ॥ ७३ ॥

स्वर्णमुक्ताफलमणीनां प्रकरेण उद्यन्ति दीप्तानि भूरीणि बहूनि यानि भूषणानि तैर्भूषितं देहं यस्याः सा, पुनः, अर्थिनिवहाय याचकनिकराय, दानं ददाना मूर्त्तिभृत् सुरलतेव साक्षात्कल्पवल्लीव, पुनः किं०, रथस्था ॥ ७२ ॥ पुनः, चीनचीरेण दक्षिणीयवस्त्रविशेषेण रुचिरा चार्वी, पुनः किं०, फणिवल्लीपत्रैर्नागलतादलैः पूर्णं वदनं यस्याः सा, पुनः किं०, वनजाक्षी कमललोचना, किमु साक्षात् प्रत्यक्षा, वारिराशिदुहिता लक्ष्मीः, एनं तनुजं जयसिंहं, अम्बा माता कोडिमदेनाम्नी, अन्वगाद् अनुप्राप्तेत्यर्थः। इयमपि युग्मव्याख्या ॥७३॥

अथ तयोर्जन्यजनन्योर्निर्गमने सति नागरस्त्रीविचेष्टितं यज्जातं तद् वर्णयति–

तन्निरीक्षणभृशोत्सुकयोषा-
शोभिसौधशिखराणि तदास्यैः ।
अभ्रवर्त्मनि विनिद्रसरोज-
स्तोमसौम्यसरसीत्वमवापुः ॥ ७४ ॥

तन्निरीक्षणाय भृशोत्सुका या योषाः स्त्रियस्ताभिः शोभीनि शोभायमानानि यानि सौधशिखराणि तानि, तदास्यैस्तन्मुखैः, अभ्रवर्त्मनि गगने, विनिद्रसरोजस्तोमसौम्यसरसीत्वं विस्मेरकमलकलापकमनीयसरोवरभावं, अवापुः प्राप्नुवन्ति स्मेति ॥७४॥

सौधमूर्ध्नि पृथुकोल्लसदङ्का
काऽप्यभात् तदवलोकनशीला ।
शाखिनः शिरसि चापलमुक्ता
वानरीव गललिङ्गितबाला ॥ ७५ ॥

तयोरवलोकनमेव शीलं स्वभावो यस्याः सा तदवलो-

कनशीला, काऽपि स्त्री, पुनः किं०, पृथुकेन बालकेन उल्लसन् अङ्क उत्सङ्गो यस्याः सा, अभात् शोभते स्म। इवोत्प्रेक्ष्यते- शाखिनः शिरसि वृक्षस्याग्रे, चापलेन मुक्ता अङ्गीकृतस्थैर्या, पुनः, गललिङ्गितबाला कण्ठलग्नस्वार्भका, वानरीवेति ॥ ७५ ॥

काऽप्यभात् तदवलोकनवृत्त्यै
लम्बिताननमनोज्ञगवाक्षा ।
वासरेऽप्युदितपूर्णमृगाङ्कं
तत्क्षणात् त्रिदशवर्त्म सृजन्ती ॥ ७६ ॥

तदवलोकनवृत्त्यै तद्वीक्षणाय, लम्बितेन आननेन वदनेन मनोज्ञगवाक्षा, काऽपि स्त्री, अभादित्यन्वयः । किं कुर्वती, सृजन्ती, किं, त्रिदशवर्त्म व्योम, कीदृशं, वासरेऽपि उदितः पूर्णमृगाङ्कः संपूर्णचन्द्रमा यत्र तत्, वासरेऽपि सचन्द्रं नभस्तलं कुर्वतीत्यर्थः ॥ ७६ ॥

नूपुरध्वनितराजपथाश्च
काश्चिदस्थुरथ नीरजनेत्राः ।
बालहंसललिताः कमलिन्यः
किं सुपर्वपथपर्वतजायाम् ? ॥ ७७ ॥

अथेति पुनरर्थे, काश्चित् नीरजनेत्राः स्त्रियः, किंलक्षणाः, नूपुरैर्मञ्जीरैर्ध्वनितो मुखरीकृतो राजपथो राजमार्गो याभिस्ताः, तस्थुः स्थिता इति, बालहंसैर्ललिता रमणीयाः, सुपर्वपथपर्वतजायां गङ्गायां, कमलिन्यः किमित्युत्प्रेक्षा ॥

अभ्यमुं मृगदृशो मुहुरौज्झन्
काश्चिदक्षततती रतिशुद्धाः

शीकरोत्करमिवोत्तममन्तः-

शायिकेशवहृदम्बुधिवेलाः ॥ ७८ ॥

काश्चिद् मृगदृशः स्त्रियः, मुहुर्वारं वारं, अमुं जयसिंहं, अभि संमुखं, शुद्धा उज्ज्वलाः, अक्षतानां ततीः श्रेणीः, औज्झन् त्यजन्ति स्म; वर्द्धापयन्ति स्मेति भावः। अन्तःशायिनः केशवस्य हरेर्हृद् हृदयं, अम्बुधिवेला इव यथा, उत्तमं शीकरोत्करं क्षिपन्तीति दृष्टान्तः ॥ ७८ ॥

तत्र सौधशिखरेषु मृगाक्ष्यो

लोललोचनचयाः स्म विभान्ति ।

बम्भ्रमद्भ्रमरभासुरकोशाः

पुष्करिण्य इव शैलशिरस्सु ॥ ७९ ॥

तस्मिन् महे, सौधशिखरेषु मृगाक्ष्यः, किंलक्षणाः, लोललोचनचयाश्चपलनयनोत्कराः, विभान्ति स्मेत्यन्वयः। इवोत्प्रेक्ष्यते-शैलशिरस्सु शिखरिशिखरेषु, पुष्करिण्यः पद्मिन्य इव, किं०, बम्भ्रमद्भिः अतिशयेन भ्रमद्भिर्भ्रमरैर्भासुराः कोशा यासां ताः ॥ ७९ ॥

सौधमूर्धसु वधूवरगीता-

ऽऽराव उच्च उदभूत् पुरि तत्र।

प्रावृषीव धरणीधरशृङ्गे-

ष्वब्दहृद्यमनसां शिखिनीनाम् ॥ ८० ॥

पुनस्तत्र सौधमूर्धसु वधूनां वरः प्रधानो गीताराव:, किं०, उच्चः, द्वेधा द्रव्यतो भावतोऽपि, उदभूत् संजातः। दृष्टान्तमाह--प्रावृषि वर्षासमये, धरणीधरशृङ्गेषु गिरिशिखरेषु, अब्दे

हृद्यं मनो यासां तासां मेघमनोज्ञचेतसां, शिखिनीनां मयूरी-णामिवेति ॥ ८० ॥

इत्यशेषवरवेषविशेषाः

प्रीतिपात्रपुरपौरपुरन्ध्यः ।

द्रष्टुमेनमचलद्दृश आसन्

वारिवाहमिव मोरमृगाक्ष्यः ॥ ८१ ॥

इत्यमुना प्रकारेण, अशेषवरवेषाणां सर्वोत्तमनेपथ्यानां विशेषो वैशिष्ट्यं यासां ताः, पुनः, प्रीतिपात्रं पुरं शरीरं यासां ताः "पुरं शरीरे" इत्यनेकार्थत्वात्, प्रीतिभाजनीभूतदेहाश्च ताः पौरपुरन्ध्यो नागरनार्यः कर्तृभूताः, एनं जयसिंहं, द्रष्टुं अचल-दृशः स्थिरनयनाः, आसन् बभूवुः, इवेति यथा, वारिवाहं घनाघनं, द्रष्टुं मोरमृगाक्ष्यः शिखण्डिन्यः, मयूरवाचको मोर-इत्युणादिसिद्धः शब्दोऽस्तीति ॥ ८१ ॥

आगतः किमु धरासु सुराणां

भूरुहः सुकृतसंचयतो नः ? ।

याचकैरयमतर्कि ददानो

रूप्यहेममुखमर्थमदभ्रम् ॥ ८२ ॥

अयं जयसिंहकुमारः, रूप्यहेममुखं अदभ्रं भूरि, अर्थं वित्तं, ददानः, याचकैरिति अतर्कि चिन्तयाञ्चक्रे, अत्र इतेरध्या-हारः, इतीति किं०, नः अस्माकं, सुकृतसंचयतः पुण्यप्रकर्षात्, धरासु पृथिवीषु, सुराणां भूरुहः कल्पपादपः, किमागतः ? इति ॥ ८२ ॥

सादरं विजयदानमुनीन्द्रा-

लङ्कृतामनघसंघमनोज्ञाम् ।

आम्रकम्रवनधारिधरित्री-

माजगाम जयसिंहकुमारः ॥ ८३ ॥

सादरं चित्तोत्साहपूर्वकं, जयसिंहकुमारो विजयदानमुनीन्द्रैरलङ्कृतां, पुनः, अनघेन संघेन मनोज्ञाम्, पुनः, आम्राणां आम्रैर्वा कम्रं यद्वनं तद्धारिणी या धरित्री तां आम्रकम्रवनधारिधरित्रीं, आजगाम आगतवानित्यर्थः ॥ ८३ ॥

अथ गुरुदीक्षावर्षमासतिथिलग्नादिनिर्णीतिं वृत्तत्रयेणाह—

वत्सरेऽग्निशशिषट्क्षितिसंख्ये

विश्वविश्वसुखसूत्रणदक्षे ।

ज्येष्ठमासि विशदद्युति हृद्यै-

कादशीदिवस एणपलग्ने ॥ ८४ ॥

वत्सरे संवत्सरे, वर्षे इति यावत्; कीदृशे, अग्निशशिषट्क्षितिसंख्ये अग्नयस्त्रयस्तेन तृतीयाङ्कः, शशी एकस्तेन एकाङ्कः, षडिति षडङ्कः, क्षितिरेका तेन एकाङ्कः, "अङ्कानां वामतो गतिः" इति वचनात् प्रातिलोम्येन एतेषामङ्कानां मीलने संवत् १६१३ वर्ष इत्यागतम्; वत्सरे कीदृशे, विश्वविश्वस्य समस्तजगतो यत् सुखस्य सूत्रणं करणं तत्र दक्षे निपुणे, पुनः कस्मिन्, ज्येष्ठमासि शुक्रमासे, पुनः कस्मिन्, हृद्यैकादशीदिवसे वर्यैकादशीतिथौ, कीदृशे, विशदा उज्ज्वला द्युत् कान्तिर्यत्र तत्र ज्येष्ठशुक्लैकादश्यामिति, अथवा विशदद्युतिश्चन्द्रस्तेन हृद्यो य एकादशीदिवसस्तस्मिन् विशदद्युतिहृद्यैकादशीदिवसे इत्यखण्डितमेव पदम्; पुनः क सतीत्याह—एणपलग्ने सिंहलग्ने वहमाने सतीत्यर्थः ॥ ८४ ॥

अथ ग्रहसंस्थितिमाह—

चापगे सुरगुरावजभाजोः

सूर्यसूनुतमसोर्मिथुनस्थे ।
ज्ञे रवौ च वृषगे भृगुपुत्रे
चन्द्रभूमिसुतयोश्च तुलायाम् ॥ ८५ ॥

चापगे सुरगुरौ धनुःस्थिते बृहस्पतौ, पुनः, अजभाजोः मेषस्थितयोः, सूर्यसूनुतमसोः शनिराह्वोः, पुनः, मिथुनस्थे ज्ञे बुधे, च पुनः, रवौ सूर्येऽपि मिथुनस्थे सति, च पुनः, भृगुपुत्रे शुक्रे, वृषगे वृषभवनगते सति, च पुनः, चन्द्रभूमिसुतयोः सोममङ्गलयोः, तुलायां गतयोरिति । ग्रहसंस्थापना यथा—

| | | |
|---|---|---|
| ६ मं७चं | ५ | ४ बु३ र |
| ८ | श्रीः | शु २ |
| बृ ९ १० | ११ | श१ रा १२ |

इयं दीक्षाकुण्डलिका । दीक्षाग्रहाणां फलादिविचारस्तु दैवज्ञदीपकलिकादेरवधार्य इति ॥ ८५ ॥

अस्मिन् मुहूर्त्ते के किं कृतवन्त इत्याह—

चक्रिरे विजयदानमुनीन्द्राः
श्रीयुतं स्मरमिवाद्भुतरूपम् ।
अम्बया सममिमं जयसिंहं
शावमाशु नियमस्थितिमन्तम् ॥ ८६ ॥

श्रीविजयदानाख्या मुनीन्द्रा गुरवः, इमं जयसिंहं, शावं बालकं, अम्बया जनन्या समम् । इवोत्प्रेक्ष्यते—श्रीयुतं लक्ष्मी-

सहितं, स्मरमिव कन्दर्पमिव, अद्भुतरूपं, नियमस्थितिमन्तं चक्रिरे दीक्षयामासुरित्यर्थः । इति काव्यत्रिकव्याख्या ॥८६॥

अखिलसुखलताया मूलमेवानुकूलं
भुवनवशविधाने वर्णविद्यामनिन्द्याम् ।
विदधुरनघचित्ता विश्ववित्ता व्रतीन्द्रा
जयविमल इति श्रीधाम नामाऽस्य शस्यम् ॥८७॥

व्रतीन्द्रास्ते गुरवः, किं०, अनघचित्ता निर्मलमनसः, पुनः किं०, विश्ववित्ता जगत्प्रसिद्धाः, अस्य शिष्यस्य, जयविमल-इति नाम विदधुरित्यन्वयः । नाम किं०, श्रीधाम, अत एव शस्यं श्लाघ्यं, पुनः किं०, अनुकूलं मूलमेव, कस्याः, अखिल-सुखलतायाः समस्तसुखवल्ल्याः, पुनः, भुवनस्य जगतो वशवि-धाने वशीकरणे, अनिन्द्यां वर्णविद्यामिवेत्यध्याहार्यम् ॥ ८७ ॥

गुरुरपि मुदितात्मा तस्य शिष्यस्य लाभात्
सविधशिव इवासीत् साधुधर्मस्य साक्षात् ।
प्रथममथ स तस्थौ तच्चतुर्मासकं च
प्रचुरपरमपुण्यैः सुन्दरे बन्दिरेऽस्मिन् ॥ ८८ ॥

गुरुः श्रीविजयदानसूरिः, तस्य शिष्यस्य जयविमलस्य, लाभात् प्राप्तेः, मुदितात्मा आसीत् । क इव कस्येति दृष्टान्तं योजयति--इव यथा, सविधशिवः आसन्नसिद्धिकः पुमान्, साधुधर्मस्य लाभात्तथेति । अथ च स गुरुः, प्रथमं तच्चतुर्मा-सकं प्रचुरपरमपुण्यैः सुन्दरेऽस्मिन्नेव बन्दिरे सूरतिनाम्नि, तस्थौ स्थित इति ॥ ८८ ॥

गुरुचरणसरोजोपास्तिलीलामरालः

सनयविनयविद्याऽम्भोजिनीभृङ्गबालः ।
शिशुरपि जयसिंहः शुद्धबुद्धिः सुनन्दा-
तनुरुह इव सद्यः शास्त्रपाठानपाठीत् ॥ ८९ ॥

गुरुचरणसरोजानां उपास्तेः सेवाया या लीला तत्र मरालो हंसः, तदासक्तत्वात्; पुनः, सनयविनया या विद्या सैवाम्भोजिनी पद्मिनी तत्र भृङ्गबालो द्विरेफः, शिशुरपि नववर्षीयोऽपि, जयसिंहमुनिः सुनन्दातनुरुह इव वज्रस्वामीव, शुद्धबुद्धिः सन्, सद्यः शीघ्रं, शास्त्रपाठान्, अपाठीत् पठति स्मेत्यर्थः। अन्त्ये वृत्तत्रये मालिनीनाम च्छन्दः, तल्लक्षणं चेदम्– "ननमयययुतेयं मालिनी भोगिलोकैः" इत्युक्तेः॥ ८९ ॥

. . . . . . . . . . . . . . . . . . . . . . .

इतीति सर्वं सुगमम् ।

इति सुविहितसभासार्वभौमसमानसकलपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिशिष्यमुख्यपण्डितपुरन्दरमुख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां विजयप्रदीपिकाऽभिधानधारिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां पञ्चमः सर्गोऽर्थतः समर्थितः ।



अर्हम्

# अथ षष्ठः सर्गः ।

——:०:——

अथ षष्ठः सर्गः प्रारभ्यते, तस्येदमादिकाव्यम्—

अन्येद्युरेनमनघं विनयावनम्रं
साक्षाद् बृहस्पतिमिव प्रतिभापटिष्ठम् ।
दृष्ट्वा विशिष्टगुणधाम विनेयमेवं
तैश्चिन्तितं विजयदानमुनीन्द्रचन्द्रैः ॥ १ ॥

अथ अन्येद्युः अन्यदा, एनं विनेयं जयविमलाऽऽख्यं शिष्यं, किं०, अनघं मनोज्ञं, पुनः, विनयावनम्रं, पुनः, साक्षाद् बृहस्पतिमिव प्रतिभया प्रज्ञया, पटिष्ठं पटीयांसं, पुनः, विशिष्टगुणानां धाम गृहं, दृष्ट्वा तैर्विजयदानमुनीन्द्रचन्द्रैः, एवमिति वक्ष्यमाणलक्षणं, चिन्तितं विचारितम् ॥ १ ॥

चिन्तितमेवाह—

नन्वेष शिष्यवृषभः शुभलक्षणश्री-
रस्त्यम्बुराशिरिव दीधितिदीप्ररत्नः ।
आचार्यहीरविजयव्रतिवर्यपार्श्वे
हेमेव चारुमणिरर्हति रम्यधामा ॥ २ ॥

ननु इति वितर्के, एष शिष्यवृषभः अम्बुराशिरिव समुद्र इव, शुभलक्षणश्रीः, पुनः,दीधितिरेव दीप्रं रत्नमस्मिन्निति अस्ति, अत एव आचार्यहीरविजयव्रतिवर्यस्य मम पट्टधरस्य पार्श्वे अर्हति योग्यतामेति । किमिव क इत्याह--हेमेव सुवर्णमिव, चारुमणिः, किं०, रम्यधामा कान्ततेजा इति दृष्टान्तः ॥ २ ॥

ध्यात्वेति साधुशशिभिः शकुनानुकूल्या-
ऽतुल्यर्क्षवारतिथियोगमनोहरेऽह्नि ।
शिष्योत्तमः प्रहित एष चचाल मूर्त्त-
आद्यः पुमर्थ इव सुन्दरसाधुसार्थः ॥ ३ ॥

इति ध्यात्वा तैः साधुशशिभिर्गुरुभिः, प्रहित एष शिष्योत्तमः, चचालाऽचलत्; कस्मिन्, अह्नि दिने, किं०, शकुनानुकूल्यं च अतुल्यानि यानि ऋक्षाणि अश्विन्यादीनि, वाराश्च रव्यादयः, तिथयः प्रतिपदादयः, योगाश्च विष्कम्भप्रमुखाः, अथवा योगा रवियोगराजयोगकुमारयोगप्रमुखाः, अथवाऽतुल्यर्क्षवारतिथीनां यो योगस्त्रिकसिद्धियोगादिस्तेन ताभ्यां वा शकुनानुकूल्याऽतुल्यर्क्षवारतिथियोगाभ्यां मनोहरे दिवसे। इवोत्प्रेक्ष्यते--आद्यः प्रथमः, पुमर्थः पुरुषार्थः, अर्थाद्धर्मः, अङ्गवान् मूर्त्त इति, पुनः, सुन्दरसाधुसार्थ इति शिष्यविशेषणम् ॥ ३ ॥

अथ शकुनान् वर्णयति–

पीनः पृथुः श्रवणयुग्ममनोज्ञमूर्धा
श्यामश्चतुश्चरणचारुरतुच्छपुच्छः ।
द्राक् संमुखं वलितकन्धरबन्धुरास्यो
वामः पथि प्रथमतः सरमासुतोऽगात् ॥ ४ ॥

पीनः पुष्टः, मांसोपचितत्वात्, अत एव पृथुर्विस्तीर्णः, अङ्गोपाङ्गादिभिरिति, पुनः, श्रवणयुग्ममनोज्ञमूर्द्धा श्रोत्रयुगलशालिशिराः, पुनः, श्यामो वर्णतः, वसन्तराजादौ श्यामः श्वानोऽतिवरीयानिति ज्ञायते, पुनः, चतुश्चरणैः चारुः, पुनः, अतुच्छं पुच्छं यस्य सः, पुनः, संमुखं अभिमुखं, तस्य शिष्यस्य संमुखं, वलितकन्धरं वलितग्रीवं यथा स्यात्तथा बन्धुरं आस्यं यस्य

सः, सरमासुतः श्वानः, प्रथमतः पूर्वं, पथि मार्गे, वाम इति दक्षिणपार्श्वाद् वामपार्श्वे, अगात् गत इति । स हि प्रयाणेऽतीव शुभः, यदुक्तम्—“दक्षिणाद् वामगमनं प्रशस्तं श्वसृगालयोः” इति ॥४॥

छायाकुले तरुतले पथि तस्थिवांस-
मेनं विनेयमथ दक्षिणमेत्य चाषः ।
संसूचयन् सपदि चारुवचःप्रपञ्चै-
स्त्रिर्भाविनीमुदयिनीं पदवीं परीतः ॥ ५ ॥

छायया आकुले, अथवा छायायाः कुले गृहे, तरुतले, पथि मार्गे, तस्थिवांसं स्थितिजुषं, एनं विनेयं जयविमलाख्यं, वामतो दक्षिणं दिग्भागं, चाषः चासपक्षी, एत्य आगत्य, त्रिः परीतः तिस्रः प्रदक्षिणा दत्तवान्, चाषः किं कुर्वन्, संसूचयन् ज्ञापयन्, कां, भाविनीं पदवीं गच्छैश्वर्यलक्षणां; प्रदक्षिणां ददानो हि चाषोऽतीव श्रेष्ठः ।

यदुक्तं श्रीभद्रबाहुस्वामिपादैः—

“जम्बू चासमऊरे भारद्दाए तहेव नउले अ ।
दंसणमेव पसत्थं पयाहिणे सव्वसंपत्ती” ॥ १ ॥ इति ।

पुनः पदवीं किं०, उदयिनीं अग्रतोऽभ्युदयवतीमिति, कैः, चारुवचःप्रपञ्चैः मनोहरवाग्विस्तरैः । एतावता शब्दायमानस्य चाषस्य दर्शनमप्यतिश्रेयः सूचितम् ।

यतः—

“नकुलाजमयूराणां चाषखञ्जनयोरपि ।
दर्शनं कीर्त्तनं शब्दः सर्वसिद्धिकरं नृणाम्” ॥१॥

इति वचनात् ॥ ५ ॥

आनन्दकन्दसदृशा स्वदृशा पुरस्तात्

पश्यन् पथि प्रचलतां परमर्द्धिसिद्ध्या ।
सव्येतरः सुकृतिनोऽस्य विनेयवृन्द-
चन्द्रस्य पेशलकुलो नकुलो जगाम ॥ ६ ॥

अस्य विनेयवृन्दचन्द्रस्य शिष्यसमूहशशिनः, नकुलः सव्येतरो दक्षिणः जगामेत्यन्वयः । अस्य किं०, सुकृतिनः पुण्यात्मनः, कथम्, पुरस्तात् अग्रतः, किं कुर्वन्, पश्यन्, कया, स्वदृशा निजचक्षुषा, किं०, आनन्दकन्दसदृशा हर्षाङ्कुरतुल्यया, पुनर्दृशा किं०, परमर्द्धिसिद्ध्या उत्कृष्टसम्पत्साधिन्या, केषां, पथि प्रचलतां, पुरुषाणामिति गम्यम् । नकुलः किं०, पेशलकुलः कमनीयकुटुम्बयुक् ॥ ६ ॥

सौन्दर्य्यमत्यधिकमात्मदृशोर्विशाल-
स्फारत्वतारतरयोरपि दृश्यमुष्य ।
सव्येतराः सविधगाः प्रविलोकयन्त-
उत्तेरुरध्वनि मृगाः सुभगास्तदानीम् ॥ ७ ॥

अमुष्य शिष्यस्य, दृशि नयने, आत्मदृशोर्निजनयनयोः, किं०, विशालत्वस्फारत्वाभ्यां तारतरयोर्मनोज्ञतरयोरपि, अत्यधिकं सौन्दर्यं प्रविलोकयन्त इवेत्यध्याहार्यम्, तदानीं तत्र क्षणे, सुभगाः सौभाग्यशालिनः, मृगाः; अध्वनि मार्गे, सविधगाः समीपप्राप्ताः, सव्येतरा दक्षिणाः, उत्तेरुरुत्तीर्णा इत्यर्थः॥७॥

दुर्गाऽहमस्मि मुनिरेष महाव्रती च
स्थानेऽस्य सव्यसविधे मम वाक् स्थितायाः ।
मत्वेति किं शकुनरत्नमियं सदैव
देवी पथि प्रमुदिता विदधे तथैव ? ॥ ८ ॥

महेशजन्मा किमयं कुमारः स्वामी महासेनतया श्रुतो यत् ? ।
श्रीनन्दनोऽयं किमु कामरूपो, नासत्यबन्धुः किमु वा तृतीयः ? ॥५३॥
एतादृशी मूर्तिरसाम्यरूपा सुरेषु चेन् स्याद् यदि वाऽसुरेषु ।
महाकवीनामपि वर्णनायां श्रूयेत द्रव्यार्थविवर्णकानाम् ॥ ५४ ॥
मर्त्येषु चेदेष विशेषवेदी कश्चिद् विपश्चित्तमशंसनीयः ।
स्वर्गेण तत् किं करणीयमस्ति किमर्थमायास्यत एव चात्मा ? ॥ ५५ ॥
घुणाक्षरन्यायवशादवश्यं ससर्ज धाताऽपि नृरत्नमीदृक् ।
अन्यत्र चेद्दक्षमवेक्ष्यते न यद्रूपमाकर्ण्यत एव नैव ॥ ५६ ॥
परिश्रमः स्यात् सफलो विधातुस्तदा जगन्निर्मितिनिर्मितोऽयम् ।
संयोक्ष्यतेऽनेन समं यदा मामनन्यसामान्यकलाङ्ककेन ॥ ५७ ॥
एतं परित्यज्य कदाचिदन्यं भर्तारमार्ताऽपि न संश्रयिष्ये ।
इति स्वचित्तेन विचिन्तयन्ती प्रसह्य साऽऽलीभिरनायि सौधम् ॥५८॥
सा राजकन्याऽपि नरेन्द्रसूनोर्हृत्वाऽप्यहो ! मानसराजहंसम् ।
नालक्षि केनाऽपि गृहं व्रजन्ती ह्यशिक्षितं कौशलमेतदस्याः ॥ ५९ ॥
कस्यापि शापेन मुनेः शचीयं दिवोऽवतीर्णा यदि वोर्वशीयम् ? ।
इति स्वचित्ते दधदूहमेष राजाङ्गजोऽपि प्रविवेश सौधम् ॥ ६० ॥
पञ्चेषुणा पञ्चभिरेव बाणैः प्रक्षोभमाणानि निजेन्द्रियाणि ।
पञ्चाऽपि रक्षन् दृढवर्मसूनुस्तस्याः स्मरन्नेव दिनान् निनाय ॥ ६१ ॥
यातेऽथ यामे प्रथमे रजन्या वृद्धस्त्रियं स्वीयभुजिष्ययाऽमा ।
प्रस्थापयामास तदन्तिके सा रागं दधाना हृदयेऽसमानम् ॥ ६२ ॥
निवेदिता वेत्रिविशेषकेण कुमारसामीप्यमवाप्य साऽपि ।
उपायनं तस्य करे चकार चित्राऽऽस्पदं चित्रितपट्टिकाङ्कम् ॥ ६३ ॥
विचित्रवर्णस्थितिराजमानां पुरीमिवैक्षिष्ट स तत्र हंसीम् ।
अत्युज्ज्वलश्लोकविगाढदिक्कं एकं पुनः श्लोकमधश्च तस्याः ॥ ६४ ॥
अहो ! प्रियालोकनकाल एव जाताधिरागा कलहंसिकेयम् ।
खिन्नाऽपि तस्यानवलोकनेन समीहते दर्शनमेव भूयः ॥ ६५ ॥
विज्ञाय विज्ञापनयैव दास्यास्तस्या अभिप्रायमसौ कुमारः ।
तद्रूपमालिख्य च राजहंसं श्लोकं ततस्तादृशमालिलेख ॥ ६६ ॥
प्रवृद्धरागप्रचयं प्रियाया हंसोऽप्यसौ तत्क्षणवीक्षणेन ।

नित्यं प्रियाप्रेक्षणमेव कामं सुखोपलब्ध्यै परमिच्छतीह ॥ ६७ ॥
आदाय तां चित्रितपट्टिकां साऽप्येषा जरत्स्त्री नृपनन्दनाय ।
ताम्बूलपुष्पादिविचित्रवस्तु व्यश्राणयत् तत्प्रहितं च तस्मै ॥ ६८ ॥
स्वयं समादाय नृपाङ्गजोऽपि प्राणप्रियाप्रेषितमित्यदस्तत् ।
कृतार्थयामास कृती समस्तं निजाङ्गसङ्गेन सरागचित्तः ॥ ६९ ॥
तस्यै कुमारोऽपि ददौ स्वहारं तच्चित्तवृत्तेः परितोषहेतोः ।
सा स्पष्टमाचष्ट रहस्तवैव कन्यावचः किञ्चन कथ्यमस्ति ॥ ७० ॥
स्वरूपमारेण कुमारकेण भ्रूसंज्ञयोत्थापित एव लोके ।
व्यजिज्ञपत् सा जरती समस्तं संदिष्टमिष्टाय तया निविष्टा ॥ ७१ ॥
रसज्ञया देव ! मया द्विधाऽपि राजाङ्गजा वक्ति भवन्तमेवम् ।
हृत्वा पुरा रक्षक ! चित्तरत्नं ममाऽसि यातः प्रथमे क्षणेऽपि ॥ ७२ ॥
नियन्त्रयिष्यामि ततो भवन्तं शक्ता स्वयं श्वो वरणस्रजैव ।
परं न यावत् परिपूर्यते सा प्राज्ञ ! प्रतिज्ञा मम काऽपि चात्र ॥ ७३ ॥
तावद् न किञ्चिद्भवताऽपि वाच्या वाच्योज्झिता भोगसमर्थनार्थम् ।
तथेति तेन प्रतिपादिता सा स्वस्थानमायातवती विमाया ॥ ७४ ॥
ईशानचन्द्रक्षितिचन्द्रकन्या वरिष्यते पुण्यनिधिं कमद्य ? ।
इति स्वयं द्रष्टुमिवोदयाद्रिशृङ्गं दिनेशोऽथ बभाज तुङ्गम् ॥ ७५ ॥
महीपतीनां सकलाः कुमाराः शृङ्गारसंसर्गमनोज्ञरूपाः ।
मञ्चेषु कैलाससमुन्नतेषु तस्थुर्नु पञ्चेषुमिवावजेतुम् ? ॥ ७६ ॥
उदारशृङ्गारविभासमानो विभाऽसमानः स पुनः कुमारः ।
अध्यास्य सिंहासनमात्ममञ्चे पूर्वाद्रिशृङ्गे स्थितवानिवेन्दुः ॥ ७७ ॥
भूमीन्द्रकन्याऽप्यथ याप्ययानारूढा प्ररूढाऽऽत्मभवाङ्कुरा सा ।
वृता सखीभिः सरसानपश्यद् राज्ञां कुमारान् शुचिरूपसारान् ॥७८॥
तद्गोत्रनामानि विवर्णितानि चित्रं प्रतीहारिकयैकयैव ।
आकर्ण्य सा सुष्ठ्वपकर्ण्य बाला पार्श्वे कुमारस्य समाजगाम ॥ ७९ ॥
चित्रावदानानि पुरातनानां पुरावदेतस्य च शंसितानि ।
श्रुत्वा निचिक्षेप कुमारकण्ठे सोत्कण्ठचित्ता वरमालिकां सा ॥ ८० ॥
ईशानचन्द्रो महता महेन लग्ने प्रशस्ते गुणवर्मणा ताम् ।
विवाह्य वाहादि वितीर्य सारं कृतार्थयामास नृपो द्विधा स्वम् ॥८१॥

मनोरथान् मार्गणमानसानां वाञ्छाऽतिरिक्तैर्द्रविणप्रदानैः ।
संपूर्य्य स क्ष्मापतिना विसृष्टो वध्वा समं स्वं नगरं जगाम ॥ ८२ ॥
राज्ञा महेच्छेन महोत्सवेन प्रवेशिता पत्तनमात्मजेन ।
समं वधूः सा श्वशुरेण हर्षात् सौधे प्रदत्ते स्थितिमाततान ॥ ८३ ॥
कदाचिदस्या भवनं समेतः सखीसमाजेन समाश्रितायाः ।
प्रहेलिकाभिः सुचिरं स रेमे प्रश्नोत्तरैश्चापि नरेन्द्रसूनुः ॥ ८४ ॥
सौधं पुनः स्वं समुपागतोऽयं भुजिक्रियापूर्वविलेपनं च ।
कृत्वा सभां संप्रतिपद्य तिष्ठन् दौवारिकेणैवमवादि नन्त्रा ॥ ८५ ॥
कश्चित् परिव्राड् नियतः कुमार ! द्वारि स्थितस्त्वां स दिदृक्षुरस्ति ।
प्रवेश्यतां तर्हि स शीघ्रमेवेत्युक्तस्तथा सोऽपि चकार विद्वान् ॥ ८६ ॥
तत्सान्निधानं गुणसन्निधानं प्राप्तः परिव्राड् विकृताकृतिः सः ।
आशीर्गिराऽनन्तरमेव तेन भद्रासने भद्रतमेऽपि दत्ते ॥ ८७ ॥
उपाविशत् तत् प्रविहाय बृष्यां समाहृतायां सममात्मनैव ।
पृष्टस्त्वभाषिष्ट गुरुप्रतिष्ठः समागमस्याऽपि निदानमेवम् ॥ ८८ ॥
( युग्मम् )
आह्वानहेतोर्भवतः कुमार ! श्रीभैरवाचार्यगुरुर्गरीयान् ।
मां चेह शिष्यं प्रजिघाय विज्ञं न वेद हेतुं पुनरत्र कञ्चित् ॥ ८९ ॥
अत्रागमिष्यामि मुने ! प्रभात इतीरयित्वा विससर्ज तं सः ।
अत्रान्तरे कालनिवेदनोत्को बन्दी पपाठेदमपापशापः ॥ ९० ॥
तमो निहत्याभ्युदयं प्रपन्नः सर्वत्र दीप्तिप्रकरं वितत्य ।
मन्दायमानद्युतिरेष देव ! प्रद्योतनः सांप्रतमस्तमेति ॥ ९१ ॥
इदं समाकर्ण्य समुद्यमं स क्ष्मापाङ्गजः सान्ध्यविधौ व्यधत्त ।
विसृज्य भृत्यानपि सन्निधिस्थान् निद्रासुखं संश्रयति स्म किञ्चित्॥९
अहर्मुखे मङ्गलतूर्यतारनादेन पद्माकरवद् विबुद्धः ।
आकर्णयन् मङ्गलपाठकेन प्रपठ्यमानं मधुरं स चेदम् ॥ ९३ ॥
भास्वानसावभ्युदयं तनोति विश्वोपकारप्रवणस्वभावः ।
तमो विनिघ्नन् परितः प्रसर्पद्भवानिवाऽव्याहतगोप्रचारः ॥ ९४ ॥
तन्निशम्योज्झिततल्पकल्पः प्रभातकृत्यं प्रवितत्य तूर्णम् ।
भैरवाकारपरार्धरूपः स भैरवाचार्यसमीपमाप ॥ ९५ ॥

प्रत्युद्गतं दर्शनमात्रतोऽपि जटाधरं सोऽपि तमाननाम ।
जटी प्रदायाशिषमाप्रहर्षः स्वचर्मपीठार्धकमुत्ससर्ज ॥ ९६ ॥
नैवाऽऽसनार्धे च गुरोर्ममाऽपि युक्ता स्थितिः स्यादिति स ब्रुवाणः ।
निजस्य वण्ठस्य वसुन्धरायां पटे विमुक्ते निपसाद धन्यः ॥ ९७ ॥
आलापमाधाय मुहूर्तमात्रमौचित्यसंभावितमुज्जगार ।
स भैरवोऽभ्यागतराजपुत्र! कां सत्क्रियां ते वितनोमि चाहम्? ॥९८॥
यद् बाल्यमारभ्य मया धनस्य परिग्रहो नैव मनाग् व्यधायि ।
विना न तेनैव कदाचनाऽपि लोकव्यवस्था घटनामुपैति ॥ ९९ ॥
न गौरवं क्वापि गुणा लभन्ते कर्म प्रसिद्धिं भजते न चापि ।
न चापि सामान्यविशेषसिद्धिर्द्रव्यं विना नो समवाय एव ॥ १०० ॥
कान्तेन कान्तेन विशा कलत्रं जलेन मिष्टेन यथा तडागः ।
जिनेन देवेन यथैव चैत्यं तथैव दानेन धनं विभाति ॥ १०१ ॥
पूजा गुरूणां यदि वा सुराणां संमाननं सज्जनमार्गणानाम् ।
प्रेमप्रथा भक्तिविकाशनं च नैतानि दानेन विना भवन्ति ॥ १०२ ॥
धनं विना नैव कदापि दानं संपद्यते तत् सुकृतं विना न ।
तदेव लोके विनयं विना न स चापि मानापगमं विना न ॥ १०३ ॥
निशम्य चेदं न्यगदत् कुमारः कुमारशौर्यप्रतिघातिसारः ।
भवादृशां दर्शनमेव मानः सत्कार एवेश! निदेशनं मे ॥ १०४ ॥
प्रसद्य तद् ब्रूत निदेशमेकं कुर्वे यथाहं तव किङ्करोऽस्मि ।
इतीरिते तेन स भैरवोऽद्धा बोद्धाऽस्य कार्यं निजमाचचक्षे ॥ १०५ ॥
संवत्सरानष्ट मया कृतोऽस्ति सन्मन्त्रजापस्य परिश्रमस्तत् ।
एकां निशां यावदप्रमादस्त्वं संश्रयस्वोत्तरसाधकत्वम् ॥ १०६ ॥
महाप्रसादोऽयमयि! प्रजल्पन्नित्यभ्यधत्ताऽथ पुनः कुमारः ॥
कस्मिन् दिने कुत्र पवित्रगात्राः! साहाय्यमेतत् क्रियतां मयाऽपि॥१०७॥
जटी जगौ खड्गवता श्मशाने श्यामे चतुर्दश्यभिधानधुर्ये ।
तिथौ निशायाः प्रहरे द्वितीये त्वया समागम्यमगम्यधाम्ना ॥ १०८ ॥
त्रिभिर्जनैः सार्धमतन्द्रितात्मा स्थास्यामि तत्राहमकम्प्रवृत्तिः ।
ओमित्युदीर्य प्रतिपत्तिसारं स राजसूनुर्निजसौधमागात् ॥ १०९ ॥
समागतायां क्रमशोऽथ तस्यां तिथौ विसृज्याऽनुचरव्रजं सः ।

विनिर्ययौ स्वीकृतवण्ठवेषः प्रदोषकाले हृतदोषजालः ॥ ११० ॥
पाणौ कृपाणं निशितं दधानः कुम्भीन्द्रकुम्भस्थलभेदशक्तम् ।
संकेतितं स्थानमयं श्मशाने प्राप प्रतापक्षतचित्रभानुः ॥ १११ ॥
तं भैरवाचार्यकमात्मतुर्यं तत्र व्यलोकिष्ट विलोक्यभक्तिः ।
सोऽपि क्षमानायकनन्दनं तं जटाधरः पादनतं बभाषे ॥ ११२ ॥
शिष्यत्रयेणान्वितमात्मबोधप्रागल्भ्यशालीव हृदि श्मशाने ।
त्रायस्व मां साध्वससंकुलेऽस्मिन् नेत्रत्रयेणेव ललाटनेत्रम् ॥ ११३ ॥
आमेति तस्मिन् परिभाषमाणे भूपालपुत्रे स जटाधरोऽपि ।
अमण्डयद् मण्डलमीक्षितं प्राक् तदन्तरे द्राग् मृतकं च रौद्रम् ॥११४॥
तदाननान्तर्ज्वलने प्रणीतप्रज्वालितेऽनेन जटाधरेण ।
कर्तुं समारभ्यत मन्त्रजापपुरःसरं होमविधिर्विशङ्कम् ॥ ११५ ॥
ते पूर्वयाम्या परदिक्षु तस्थुः क्रमात् त्रयोऽपि प्रहतप्रमादाः ।
स धैर्यवर्मा दृढवर्मसूनुर्भयं विहायोत्तरदिश्यतिष्ठत् ॥ ११६ ॥
अथो शिवासंहतिवासितानि घोराण्यभूवन् परितोऽशिवानि ।
वेतालमालाः कलिताट्टहासं शब्दान निचक्रुर्भयबीजभूतान् ॥ ११७ ॥
अत्रान्तरे वारिदघोषवादी निर्घात एकः प्रससार सारः ।
पुस्फोट तेनैव वसुन्धरेयं वियोगिवक्षःस्थलवत् प्रकामम् ॥ ११८ ॥
एकस्तदन्तर्निरगात् करालाकारान्धकारावजयी जयेनः ।
कृशोदरोऽत्युद्धुषितोर्ध्वकेशः कठोरबाहुद्वयदीर्घजङ्घः ॥ ११९ ॥
पिङ्गेक्षणो दृश्यनिशातपर्शुर्हुङ्कारसंपूरितखप्रदेशः ।
दधत् करे खण्डितमण्डलाग्रं महापुमान् प्रेतपतिप्रकारः ॥ १२० ॥
( युग्मम् )
सोऽप्येवमाचष्ट निरस्तशङ्को निकृष्ट ! रे भैरव ! भैरवाज्ञात् ।
त्वया किमारब्धमिदं मदेन पूजामकृत्वा मम बुद्धिहीन ! ? ॥१२१॥
क्षेत्रस्य चास्यस्य महाप्रभावः स्वामी प्रसिद्धः खलु मेघनादः ।
त्वद्दुर्नयस्याऽस्य फलं स्वशक्त्या तद् दर्शयाम्येव तवाधुनाऽहम् ॥१२२॥
इति प्रजल्पन्तमिमं स्वनादवित्रासिताग्र्योत्तरसाधकं तम् ।
उत्क्षिप्य कौक्षेयकमाहतकुज्जगाद चैवं दृढवर्मसूनुः ॥ १२३ ॥
अरे ! महामूढ ! विलज्ज ! गर्जिं करोषि किं शारदवार्दवत् त्वम् ?।

दोर्दण्डशौण्डीर्यमवार्यवीर्यं यद्यस्ति तन्मे पुरतो भव द्राक् ॥१२४॥
निरर्थकं यो वचनं ब्रवीति विशिष्यते स ग्रहिलाद् न धीरैः ।
राजाऽहमस्मीति वदन् नरेन्द्रैर्न साधुवद् दण्ड्यत एव यन् सः ॥१२५॥
इति ब्रुवाणः स पुरःस्थितं तं निरायुधं प्रेक्ष्य सुरं सलज्जः ।
हित्वाऽऽयुधं शूरशिरोललाम नियुद्धयुद्धाय समुद्यतोऽभूत् ॥१२६॥
कुमारदोर्दण्डनियन्त्रितोऽसौ श्रीक्षेत्रपालो विरसं रसन् सः ।
प्राह स्वयं विस्मयमादधानः कुमार ! मां सात्त्विक ! मुञ्च मुञ्च॥१२७॥
अहं महासत्त्व ! तवाऽस्मि सिद्धो वरं वृणीष्वेप्सितमाशयस्य ।
निशम्य तस्योक्तमिदं नृपस्य सुतस्तमित्याह स साहसाढ्यः ॥१२८॥
सिद्धोऽसि चेद् भैरव ! साधकस्य समीहितं साधय साधयाऽस्य ।
विनिर्मिते चैवमवश्यमेव भविष्यसे त्वं कृतकृत्यभावम् ॥ १२९॥
जगाद भूयोऽपि स मेघनादः सत्त्वेन ते कामितमस्य दत्तम् ।
समीहितं प्रार्थककल्पवृक्ष ! किञ्चित् परं प्रार्थय निःस्पृहोऽपि ॥१३०॥
इत्येष तस्यैव महाग्रहेण प्रणुन्नरूपोऽभिदधे कुमारः ।
सा प्रेयसी मे वशगाऽस्तु तर्हि, विज्ञाय वित्त्याऽथ स चावदत् तम्॥१३१॥
सा कामरूपत्वमधिष्ठितस्य वशे भविष्यत्यचिरात् तवाऽपि ।
तद् मे प्रसादाद् दलितावसादाद् विचिन्तितं ते भवताद् यथेच्छम्॥१३२॥
इति प्रदायाऽस्य वरं वरेण्यं क्षेत्राऽधिनाथः स तिरोबभूव ।
प्रमोदपूर्णेन जटाधरेण राजाङ्गजोऽप्येवमभाणि पश्चात् ॥१३३॥
सत्त्वेन ते राजतनूज ! मन्त्रः सिद्धस्ततोऽजायत वाञ्छितं मे ।
अमानुषं शौर्यमतीन्द्रियार्थावभासि विज्ञानमियं परा रुक् ॥१३४॥
इतीदृशं प्रीतिपरं निरूप्य स तापसः शिष्यसमन्वितोऽगात् ।
स्वस्थानमन्योऽपि कृतप्रणामः स्वनामवित्रासितवैरिवर्गः ॥१३५॥
निद्रासुखं प्राप्य मनाग् विबुद्धः प्राभातिकं कृत्यमसौ वितत्य ।
ईशानभूमीपतिपुत्रिकायाः सौधं जगाम प्रभयाऽभिरामः ॥ १३६ ॥
पल्यङ्कपर्यङ्कतले निविष्टः समं तया स प्रियया न्यगादि ।
प्रहेलिकां मे प्रिय ! काञ्चनैकां बुध्यस्व बुद्ध्या गुरुरेव यत् त्वम् ॥१३७॥
महोत्पलानि प्रभवन्ति केषु दिवौकसां केषु जनैर्ध्रियन्ते ।
केष्वेव चैतन्यमिदं विभाति रसोत्तमाङ्गात्मसु कान्त ! विद्धि॥ १३८ ॥

गोपालपुत्रा अपि सारसाक्षि ! निवेदितार्था कलयन्ति चैताम् ।
तर्हि त्वमेकां विषमामपूर्वां पूर्णेन्दुबिम्बानन ! शंस मेऽग्रे ॥ १३९ ॥
सर्वासु रामासु मनोहरासु स्त्रीरत्नरूपं परिवर्ण्यते किम् ? ।
इदं प्रिये ! ते पुरतो मयोक्तं स्फुटं त्वया बुध्यत एव किं न ? ॥१४०॥
इतीरितां तां हृदयेश्वरेण सा राजपुत्री हृदये निधाय ।
क्षणं विचिन्त्य प्रतिवाक्यमूचे कान्तानुरूपं तव केवलं तत् ॥ १४१ ॥
तां बुद्धिवैचित्र्यमयीं विजानन्नित्यादिगोष्ठीषु समन्वभूत् सः ।
अदृश्यमाधाय वपुर्निशीथे भूयो ययौ तद्वनं कुमारः ॥ १४२ ॥
तदाऽऽचचक्षे क्षितिपालकन्या चेटीद्वयं चैवमुपान्तवर्ति ।
हले ! त्रियामा कियती व्यतीतेति सम्यगालोच्य निवेद्यतां मे ?॥१४३॥
अभाणि ताभ्यां प्रियवादिनीभ्यां नाद्याऽपि यामद्वितयं प्रपूर्णम् ।
उवाच सा तर्हि विधीयतां द्राक् सामग्र्यहो ! तत्र च गम्यमस्ति ॥१४४॥
तेनैव चेटीद्वितयेन साऽथ विधापितस्नानविलेपभूषा ।
क्षणाद् विचक्रे च विमानमेकं समानशाला मणिचक्रशालम् ॥ १४५ ॥
तच्चेटिकाभ्यां सह सा विमानं शिश्राय विद्याधरकन्यकेव।
अदृश्यरूपोऽस्य विमानकस्य प्रदेशमेकं गुणवर्मकोऽपि ॥ १४६ ॥
पन्थानमाक्रम्य मरुत्पथस्य तडागतीरोद्गतमेककालम् ।
कौबेरदिग्भागविवर्तमानं प्रापद् वनं नन्दनसंज्ञकं तत् ॥ १४७ ॥
सैषा विमानादवतीर्य तूर्णं चेटीद्वयालङ्कृतपार्श्वभागा ।
अगादशोकद्रुमवीथिकान्तर्निविष्टविद्याधरसन्निधाने ॥ १४८ ॥
विनम्य सा भक्तिपुरःसरं तं निदेशमासाद्य पुरो निविष्टा ।
अत्रान्तरेऽन्या अपि तिस्र एयुस्तदन्तरे तत्सदृशो रमण्यः ॥ १४९ ॥
विद्याधराणामसमः समाजः क्षणान्तरे तत्र समाजगाम ।
युगादिनाथस्य जिनेश्वरस्य तटेऽस्ति तत्राऽऽयतनं महीयः ॥ १५० ॥
विद्याधरास्ताश्च ततः समस्ताः समागमन्नायतनं तदेव ।
चक्रुश्च भक्तिं जिननायकस्य स्नानार्चनालेपनपूर्विकां ते ॥ १५१ ॥
का सांप्रतं नृत्यमहो ! विधातेत्युदीरिते खेचरनायकेण ? ।
ईशानचन्द्रक्षितिपालकन्येत्याचख्युरन्याः क्षितिपालकन्याः ॥ १५२ ॥
क्रमागतं स्वावसरं विबुध्य ततः क्षणात् श्रीगुणवर्मकान्ता ।

विधाय सज्जं चलनाख्यवासः सा रङ्गभूमिं प्रविवेश रङ्गात् ॥१५३॥
अवादयंस्तत्र च वेणुवीणातालादिकांस्ताः क्रमशोऽपि तिस्रः ।
तदा समं प्रेक्षणकं बभूव समग्रविद्याधरविस्मयाय ॥ १५४ ॥
अस्या विलासातिशयेन लास्यं प्रवर्तयन्त्याः कटिसूत्रसूत्रात् ।
एकाऽपतत् किङ्किणिका सवेगं तामग्रहीद् राजसुतस्तटस्थः ॥ १५५ ॥
तया समन्तादवलोकिताऽथ लास्यावसाने निजकिङ्किणी सा ।
विद्याधरैरप्यनुयुज्यमानैः प्रयत्नतः क्वापि न चाऽऽपि किन्तु ॥१५६॥
तस्मिन् समं स्वानुचरैः समग्रैर्विद्याधराणामधिपे प्रयाते ।
सहैव चेटीद्वितयेन साऽपि विमानमाश्रित्य चचाल बाला ॥ १५७ ॥
कुमारवीरोऽपि पुरावदेतं विमानभङ्गं रभसाद् बभाज ।
स्थानं समायासिषुरात्मनस्ते सर्वेऽपि तेनैव महारयेण ॥ १५८ ॥
अलक्षितः प्रेष्यजनैः कुमारः स्वमन्दिरं प्राप्य सहेमकुम्भम् ।
पल्यङ्कमाश्रित्य सुपुष्पगन्धं शेषां त्रियामां गमयाम्बभूव ॥ १५९ ॥
अमात्यपुत्राय निजाय सख्ये यथार्थनाम्ने मतिसागराय ।
तां किङ्किणीं पाणिगतां विधाय शिक्षां ददौ राजसुतः स एवम् ॥१६०॥
ममोपनेया भवता प्रियायाः पार्श्वस्थितस्येयमनर्घ्यरत्ना ।
इतीरयित्वा गतवांस्तदीयं सौधं समं तेन ससंमदेन ॥ १६१ ॥
तया समं सारिभिरुग्रसारः प्रचक्रमे क्रीडितुमेष वीरः ।
अभाणि भर्ता विजितस्तयाऽयं संचार्यतां कोऽपि पणोऽत्र धीमन्! १६२
विज्ञाय कौमारमतं स विज्ञस्तां किङ्किणीं मन्त्रिसुतो मुमोच ।
इमां स्वकीयामुपलक्ष्य लक्ष्यां लक्ष्यैरथाऽवादि तया सुदत्या ॥ १६३ ॥
मच्छ्रोणिसूत्रात् पतिता कुतोऽसौ प्रापि त्वया पापविनाकृतेन ?।
अथो कुमारेण जगे मृगाक्षि ! निवेद्यतामित्यपतत् क चैषा ? ॥१६४॥
पपात कुत्रेयमिति स्वतोऽहं न वेद्म्यनाभोगवशादवश्यम् ।
तया विचिन्त्येत्युदिते कुमारः पुनर्जगौ हास्यविभासितौष्ठः ॥ १६५ ॥
नैमित्तिकोऽयं मतिसागरो मे प्रिये ! वयस्यः परिपृच्छ्यतां ज्ञः ।
अस्या निपातास्पदमात्तलीलमयं विदा प्राप्स्यति भास्वरेण ॥ १६६ ॥
तया जगे तर्हि निवेद्यतां मे पुरस्त्वयैषा पतिता क नाम ?।

बुद्धा कुमाराशयमाह सोऽपि बुद्धः प्रभाते कथयिष्यतेऽदः ॥ १६७ ॥
पूर्वक्रमेणाऽवनिपालपुत्रः समं स्ववध्वा दिवसेऽपि तत्र ।
विमानमास्थाय समानधामा जिनालयं प्रास्थित तं लयेन ॥ १६८ ॥
तस्यास्तदा वैणिकतां श्रयन्त्याः स्रस्तः सुवर्णाङ्गद एव तत्र ।
क्षिप्रं कुमारेण स किङ्किणीवन् प्रच्छन्नमादीयत कौशलेन ॥ १६९ ॥
विमानमारुह्य तथैव पूर्वक्रमेण ते स्थानमथाऽऽययुः स्वम् ।
प्रातः कुमारः सुहृदे समर्प्य स्वर्णाङ्गदं तद्भवनं समागात् ॥ १७० ॥
भयात् तयाऽपृच्छ्यथ मन्त्रिपुत्रस्तत्किङ्किणीवृत्तमवृत्तपूर्वम् ।
स प्राह तत्किङ्किणिकानिपातस्थानं मया नेत्रपथेऽध्यरोपि ॥ १७१ ॥
किञ्चापरं किञ्चन ते प्रनष्टं मयाऽपि तत्स्थानमवेक्षितं च ।
अजानती सा तमपृच्छदेवं तन् किं, स च प्राह भुजाङ्गदस्ते ? ॥१७२॥
अवापि तद् येन ममापि तेन समर्पितं तर्पितकोविदेन ।
इदं निशम्याऽवनिपालकन्या स्वचेतसा चिन्तयति स्म चैवम् ॥१७३॥
ज्ञानादयं तद्द्वितयप्रपातस्थानं विजानाति न तद् विचित्रम् ।
चित्रं तदेतद् मम मानसस्य जज्ञेऽपि यद् द्वैतमिदं करस्थम् ॥१७४॥
तदत्र केनापि हि कारणेन भाव्यं ध्रुवं सांप्रतमन्यथा न ।
अदृश्यताप्राप्तिमृते तु तत्र स्वयं समायाति कथं प्रियोऽपि ?॥ १७५ ॥
दिनं द्वितीयं समुपैति चात्र विखिन्ननेत्रप्रिय एष एव ।
जडाशयानामपि तद् विगेया हहा! भविष्यामि निरुत्तराऽहम्॥१७६॥
चिरं विचिन्त्येति नरेन्द्रपुत्री प्रोचे प्रिय ! क्वास्ति स वाहुरक्षः ? ।
आदेशतस्तस्य स मन्त्रिपुत्रः समर्पयामास तमेव तस्यै ॥ १७७ ॥
अवादि भूपालसुतेन भूयः क कान्तिकान्ते ! पतितस्तवायम् ? ।
तयाऽभ्यधायि स्वयमेव चास्य पातं न जानाति किमार्यपुत्रः ? ॥१७८॥
जानामि नाहं मम चापरेण त्वद्बाहुरक्षश्च समर्पितोऽयम् ।
इतीरयन्तं तमुवाच साऽपि प्रियोत्तरेणाऽलमनुत्तरेण ॥ १७९ ॥
त्वया यदि स्वेन युगं तदाऽऽप्तं ममाङ्गदः किङ्किणिका च तत् सत् ।
अथापरेण प्रतिपादितं ते तदा ममाऽग्नावपि नास्ति शुद्धिः ॥ १८० ॥
इति प्रकाश्यैवमवाङ्मुखी सा द्वेधा विवेकापगमाद् बभूव ।
अथावनीवासवनन्दनस्तां प्रसाद्य वाक्यैर्मधुरैस्ततोऽगात् ॥ १८१ ॥

स्नानाशनादीनि वितत्य कृत्यान्ययं तथैवेत्य पुनर्निशायाम् ।
इमां समालोकत हा ! विलक्षां प्रेष्याद्वयेनेति कथाप्रसक्ताम् ॥ १८२॥
अहं हले ! किं विदधेऽतिमन्दभाग्योदयाऽनेन विधापिता यत् ।
एतं कनीत्वे शपथं कथञ्चिद् विद्याधरेन्द्रेण दुराशयेन ॥ १८३ ॥
ममानिदेशेन कदाचनाऽपि काम्यो भवत्या न निजोऽपि भर्ता ।
भयं दधत्या मयकाऽपि तस्मादिदं वचः स्वीकृतमल्पबुद्ध्या ॥ १८४ ॥
प्राणप्रियोऽयं मम चाहमस्य प्राणप्रिया रूपगुणानुरूपा ।
अवैमि तन्नेदमहं यदस्य जय्योऽस्ति वा नैव स खेचरेन्द्रः ॥ १८५ ॥
यद्यार्यपुत्रस्य भवेत् स जय्यो मनोरथास्तद् मम पूरिताः स्युः ।
अथाऽन्यथा दैवमिदं विधत्ते तद् व्योमपुष्पायितमेव भूयात् ॥ १८६ ॥
इत्यादिकं तां पुनरुक्तयन्तीं प्रेष्याऽब्रवीत् स्वाभिमतं हितं च ।
गृहाधिदेवीव गृहेऽद्य तिष्ठ त्वं स्वामिनीहैमि विशिष्य तत्र ॥ १८७ ॥
त्वत्स्वामिनी किं न समागताऽद्येत्येवं यदि प्रक्ष्यति मां स खेटः ? ।
तदा तदग्रे विदधे पुराऽहमग्र्युत्तरं ते वपुषः सरुक्त्वम् ? ॥१८८॥
प्रकुर्वती त्वेवमहं तदीयं ज्ञास्याम्यभिप्रायमपि प्रकृत्या ।
ईदृक् तु युक्तं विनिशम्य सम्यक् सा राजकन्या दिशति स्म तां च॥१८९॥
अथ क्षणात् तद्विहिते विमाने समारुरोह प्रयता भुजिष्या ।
मारोहकारी स कुमार एव तस्यैकदेशं स तथैव भेजे ॥ १९० ॥
प्रेष्यां समीक्ष्योपगतां स तत्र विद्याधरोऽपृच्छदतुच्छदर्पः ।
न स्वामिनी ते कथमागताऽद्य श्रुत्वेति सोवाच वचस्विनी तम् ?॥१९१॥
न स्वामिनी स्वामिसमीपमागाद् यदद्य तद्वर्ष्मणि पाटवं न ।
भ्रूभङ्गभीमं विदधत् क्रुधाऽऽस्यं ततो बभाषे स च खेचरेन्द्रः ॥१९२॥
भोः खेचराः ! यूयमगण्यपुण्या युगादिनाथस्य जिनेश्वरस्य ।
स्नानं विधद्ध्वं त्वहमद्य तस्या द्वेधाऽपि मान्द्यापगमं करोमि॥१९३॥
प्रेष्यां विकृष्य स्वकरेण वेण्या बभाण खेटः स रुषाऽरुणाक्षः ।
निर्वातु पूर्वं मम रोषवह्निस्तवाऽसृजा दासि ! विनाशितायाः ॥ १९४ ॥
सा धैर्यमालम्ब्य जगौ विधेहि तवोचितं यद् रुचितं च यत् ते ।
अस्मादृशां स्तोकमिदं न किं वा युष्मादृशोपासनलालसानाम् ?॥१९५॥
स चाब्रवीत् तां ग्रहिले ! किमेतद् ब्रवीषि कालप्रतिमस्य मेऽग्रे ? ।

त्वमिष्टदेवं स्मर चैकताना शरण्यमन्यं यदि वा श्रयस्व ॥ १९६ ॥
देवस्य पादान् सततं स्मरामि युगादिनाथस्य न चापरस्य ।
अन्यं शरण्यं न समाश्रयामि मुक्त्वा कुमारं गुणवर्मसंज्ञम् ॥ १९७ ॥
इत्युद्धतां वाचमुदीरयन्तीमिमां स खड्गेन लुनाति यावत् ।
तावत् कुमारोऽयमभून् पुरस्तात् तस्यैव कृष्टासिरतिप्रकृष्टः ॥ १९८ ॥
एवं बभाषे स च खेचरं तं दोर्दण्डकण्डूमपनेतुमिच्छुः ।
रणेन तेनैव वराक ! गेहेनर्दिन्नरे ! स्त्रीषु पराक्रमस्ते ॥ १९९ ॥
उन्मत्तबालाऽर्भकवृद्धमत्तप्रमत्तरोगार्तनिरायुधानाम् ।
वधाय धावन्ति गृहीतशस्त्रा ये केऽपि तेषां किल जीवितं धिक् ॥२००॥
तदग्रतस्त्वं मम तिष्ठ तिष्ठेत्युदीरयन्तं क्षितिपालपुत्रम् ।
दासीं विमुच्यैष समाजगाम पुरः स्वपाणौ निदधन् कृपाणम् ॥२०१॥
ततः सशङ्कं समवेक्षितौ तावेकत्र राशाविव जीवशुक्रौ ।
विद्याधरैरायुधसंविधानैश्चिरं रणं चक्रतुरुग्रबाहू ॥ २०२ ॥
वरिष्यते खेचरराजमेव ध्रुवं जयश्रीरिति खेचराणाम् ।
यावद् गिरः खेऽपि समुल्लसन्ति तावन् कुमारेण शिरोऽस्य लूनम्॥२०३॥
पौरोगवः सूरणकन्दकस्य यथैव खण्डद्वितयं कृपाण्या ।
निशातधारेण तथाऽसिनैव चक्रे कुमारः स च खेचरस्य ॥ २०४ ॥
कुर्वन्ति किं नाम न दुष्कराणि नराः प्रियार्थं विषयोपतप्ताः ? ।
रामोऽम्बुधिं किं न बबन्ध सीताकृते, महाभारतमन्यथा किम् ?॥२०५॥
परिच्छदस्तस्य कुमारकस्य तमेव भीरुः शरणं प्रपेदे ।
अत्रान्तरे ताः प्रवरा रमण्यस्तिस्रोऽपि तं राजसुतं समेयुः ॥ २०६ ॥
महानुभावोत्तम ! साधु साधु त्वयाऽद्य विद्याधरपाशतोऽस्मात् ।
यद् रक्षिता इत्यधिकं ब्रुवाणास्ता भाषितास्तेन कुमारकेण ॥ २०७ ॥
यूयं सुताः कस्य कथं गृहीताः क्षुद्रेण रौद्रेण बलादनेन ? ।
इदं निगाद्यं यदि तद् ममाग्रे सहोदरस्येव विशंसमात्थ ॥ २०८ ॥
एकाऽवदत् तासु शुचिस्मितासु सुताऽस्म्यहं शङ्खपुराधिपस्य ।
श्रीदुर्लभस्याश्रितकल्पवृक्षच्छायाभृतो दुर्लभभूमिभर्तुः ॥ २०९ ॥
स्वप्नेऽम्बया यत्कमला व्यलोकि ख्याताऽस्मि नाम्नी कमलावती तत् ।
अनेन कन्यैव सुखेन सुप्तोत्पाट्य स्वयं कुट्टिमतोऽपि नीता ॥ २१० ॥

दन्तै रसज्ञामपि खण्डयन्ती मुमूर्षुरेतेन दुरात्मनाऽहम् ।
इत्युद्रुषाऽभाणिषि तद् विमुञ्चे त्वां चेत् करोषीदमुदाहृतं मे ॥२११॥
तत्किं मयैवं परिपृष्ट एष प्राह स्म पाणिग्रहणं भवत्या ? ।
विना निदेशं मम नैव कार्यं वर्षैर्घनैरप्यतियौवनेऽपि ॥ २१२ ॥
मम प्रसादेन सदा विमानं मानप्रथं वैक्रियकं तवाऽस्तु ।
चैत्ये समागम्यमगम्यशक्तेर्युगादिदेवस्य ममान्तिकेऽत्र ॥ २१३ ॥
तदुक्तमेतत् प्रतिपद्यमाना विमोचिता तेन सुमोचिताऽहम् ।
नैपुण्यमेतेन च वेणुवाद्ये सुशिक्षिता वीक्षितसारसार ! ॥ २१४ ॥
इयन्त्यहानि प्रतिपन्ननिष्ठा कौमारधारिण्यत एव तस्थौ ।
उभे तदन्ये तदनन्तरं स्वं स्वमेवमेवावदतां तदग्रे ॥ २१५ ॥
तिस्रोऽपि तेन प्रहितास्ततस्ता निजे निजे सद्मनि संस्तुतेन ।
स्वयं समारुह्य च तद्विमानं ययौ तया चेटिकया समेतः ॥ २१६ ॥
चेटीमुखात् खेटवधं विबुध्य सेशानकन्याऽपि पतिं बभाण ।
न नाथ ! युक्तं विहितं हितं च यत्तज्जनोऽनर्थनिबन्धनं नौ ॥ २१७ ।
अवाचि तेनेन्दुमुखि ! प्रियायाः कृते न किं वा क्रियते महद्भिः ? ।
निजं कलत्रं च परस्य वश्यं पराभवो दुःसह एष यस्मात् ॥ २१८ ॥
इत्युज्ज्वलप्रेममनोरमां तामालप्य बालां प्रबलानुरागः ।
निशीथिनीशेषमशेत सत्रा तयैव सुत्रामकलत्रभासा ॥ २१९ ॥
रतश्रमार्तौ भजतः स्म यावद् निद्रासुखस्वादमिमौ प्रहृष्टौ ।
तत्सोदरः खेचर एव तावदुत्क्षिप्य चिक्षेप कुमारमब्धौ ॥ २२० ॥
अवाप्य किञ्चित् फलकं स्वपुण्यफलानुकारं दृढवर्मजन्मा ।
असौ दिनैः सप्तभिरूर्मिनुन्नः पयोनिधेस्तीरमवाप धीरः ॥ २२१ ॥
तं प्राणवृत्तिं मधुरैः फलाद्यैर्जटाधरः कश्चन कारयित्वा ।
विलोकनानन्तरमेव पूज्यनिदेशतः स्वाश्रममानिनाय ॥ २२२ ॥
ईशानचन्द्रस्य नरेश्वरस्य कन्यां स संप्रेक्ष्य तुतोष तत्र ।
अस्मै नतायाऽथ स सुस्थिताय तद् वृत्तमाख्यद् गुरुरच्छवृत्तः ॥२२३
राजाङ्गजाऽऽकर्णय सावधानो दिनादितस्तुर्यदिने विनोदात् ।
वनं प्रयातेन मयेक्षितेयमन्तर्हितेनेति निवेदयन्ती ॥ २२४ ॥
वनान्तदेव्यो भगवत्य एता दिगीश्वरा अप्यपराश्च देव्यः ! ।

दौर्भाग्यवर्णोपचिते ललाटे कृत्वाऽञ्जलिं विज्ञपयामि युष्मान् ॥२२५॥
मत्प्रेयसा तेन कृते ममैव बाढं विसोढं गुरुदुःखजातम्।
किञ्चित् कदाचिन् किल तस्य कार्ये कुत्राऽप्युपाकार्षमहं तु नैव ॥२२६॥
दिनत्रयं नीरनिधेः स तीरे मया समालोकि विलोक्यमूर्तिः ।
ततः परं नैव विना ततस्तं न जीवितं धर्तुमहं क्षमाऽस्मि ॥ २२७ ॥
वियोगदावज्वरपीडिताऽहं तस्यैव तेनैव परित्यजामि ।
प्राणान् निजानित्यभिधाय वृक्षमारुह्य कण्ठे विततान पाशम् ॥२२८॥
एतां तथास्थां समवेक्ष्य वेगादागत्य पार्श्वे दयया परीतः ।
अभाषिषीति प्रकृतिप्रशस्ये ! मा मा कृथाः साहसमाः ! वृथा त्वम् ॥२२९॥
इतो दिनादेव दिने तृतीये भर्ता तवैवात्र समेष्यतीति ।
ज्ञानेन विज्ञाय यथार्थमस्यै न्यवेदयं वेदविचारचारुः ॥ २३० ॥
मदुक्तमेतद् विनिशम्य तस्मान् तरोः समुत्तीर्य विनम्य मेयम् ।
मदाश्रये त्यक्तमदाश्रयेऽस्थाद् मया सहागत्य दिनत्रयं सा ॥ २३१ ॥
विनिःसरन्ती पुनरद्य शक्त्या धृत्वा करेऽस्थाप्यत तापसौघैः ।
यावत् त्वमत्रागम एव भद्रादिश्येति विद्वान् स मुनिर्व्यरंसीत् ॥२३२॥
साऽपि स्ववृत्तं दयितेन पृष्टा शिष्टा यथावृत्तमभाषतैवम् ।
विद्याधरेणाऽहमिलाभृतोऽस्य समुन्नते सानुनि तेन मुक्ता ॥ २३३ ॥
अवातरं तस्य महीधरस्य शृङ्गादहं कान्त ! कथञ्चनाऽपि ।
समागमं चात्र परं भ्रमन्ती शेषं ततस्ते विदितं समस्तम् ॥ २३४ ॥
अथाप्लवन्तौ प्रवितत्य शैलकूलङ्कषावारिणि सत्तरङ्गे ।
माधुर्यधुर्यं च फलादि भुक्त्वा शेषं दिनं निन्यतुरेकचित्तौ ॥ २३५ ॥
एकत्र रम्भानिलये प्रसुप्तौ परस्पराश्लेषपरौ रजन्याम् ।
विद्याधरः सोऽप्यपहृत्य रोषाद् वारांनिधौ निक्षिपति स्म भूयः ॥२३६॥
पाथोनिधे रोधसि पूर्ववत् तौ तत्रैव भूयो मिलितौ कथञ्चित् ।
इदं सनिर्वेदमवोचताऽयं पुरः प्रियाया दृढवर्मसूनुः ॥ २३७ ॥
न भास्वता नैव कलावताऽपि न चाऽपि सूरेण बुधेन नाऽपि ।
अहो ! बलेनापि पुरा कृतं तद् विलङ्घितुं कर्म न शक्यतेऽदः ॥२३८॥
राज्यं क्व तत् प्राज्यमहीमहेन्द्रशिरःस्रजाऽभ्यर्चितपादपीठम् ? ।
उपर्युपर्यागतिपीवराणि क्वेमानि दुःखान्यपि नौ महान्ति ? ॥ २३९ ॥

ततस्तयेशाननरेन्द्रपुत्र्याऽस्य धीरवृत्तानि परःशतानि ।
निदर्शनीकृत्य मनःस्थखेदच्छेदः क्षणेन क्रियते स्म सत्या ॥ २४० ॥
उदेति संपद् महतामवश्यं विपच्च तेषामपि नापरेषाम् ।
इत्यर्थमुद्भावयितुं तदाऽस्य सहस्रधामाऽस्तमियाय सोऽपि ॥ २४१ ॥
प्रभाकरे चास्तमिते तमस्सु समन्ततो विस्तृतिमाश्रितेषु ।
प्राचीप्रतीचीप्रमुखो बुधेन केनाऽपि नालक्षि दिशां विशेषः ॥ २४२ ॥
कलानिधेरभ्युदयो न यावत् कवेर्गुरोर्वा न च तारकस्य ।
सूरस्य यावद् न पुनः प्रकाशस्तावत् तमांसि प्रसरन्तु नाम ॥ २४३ ॥
न वर्णभेदः क्वचनापि यत्र कनीयसो यत्र गुरोर्न मानः ।
शब्देन यत्रास्ति विशेषबोधस्तमांसि तत्र प्रसरन्ति किं न ? ॥२४४॥
जगत् समस्तं निहतव्यवस्थं प्रसृत्वरैर्वीक्ष्य तमःप्रपञ्चैः ।
राजा ततोऽयं प्रकटीबभूव करान् वितन्वन्नतिमन्दमन्दम् ॥ २४५ ॥
सुधामयूखेऽभ्युदिते हिमांशौ यच्चक्रवाकैः स वियोगतापः ।
सुदुःसहः प्राऽऽपि तदत्र हेतुं संभावयामो नियतेर्नियोगम् ॥ २४६ ॥
सुधाकरो हन्त ! करोति चेद् न ज्योत्स्नाप्रसिद्धामृतपानसत्रम् ।
चकोरडिम्भाः कथमाश्रयन्ते तत्पुष्टिमेषां न परं यदिष्टम् ? ॥ २४७ ॥
हंसी समालिङ्गति चक्रवाकं स्वकान्तबुद्ध्या सितपक्षिकान्तम् ।
चक्री पुरस्तादपि राजहंसं नवस्य राज्ञोऽभ्युदये किमन्यत् ? ॥२४८॥
विनोदगोष्ठीमनुभूय वध्वा तया समं निर्दलितप्रमीलः ।
तदा कुमारः स च यावदस्थात् तावत् स खेटः पुनरागमद् द्विट् ॥२४९॥
तेनैव साक्षेपमितीरितोऽसावरे ! प्रमीलापहृतस्य मे द्विः ।
तदा त्वयैवापगतं, क्व गन्ता तत् सांप्रतं तिष्ठ निकृष्ट ! मेऽग्रे ? ॥२५०॥
संतर्जितस्यास्य नृपाङ्गजेन तेनैवमस्त्रं गलितं करस्थम् ।
दृष्ट्वा कुमारोऽपि निरायुधं तं पाणिस्थितं शस्त्रममुञ्चदाशु ॥ २५१ ॥
तमग्रकेशेषु विधृत्य कृष्ट्वा नरेन्द्रसूरित्यवदत् सदर्पम् ।
अरे ! त्वया संप्रति तत् स्ववीर्यं न्यासीकृतं कुत्र हतप्रताप ! ?॥२५२॥
तत् सांप्रतं याहि मयाऽसि मुक्तः पुनः प्रशस्यं न बलं छलेन ।
प्रवर्तते नैव ममैव शस्त्रं निशातमप्यस्त्रविवर्जितेऽदः ॥ २५३ ॥
तं तत्प्रियाऽभाषत कान्दिशीकं केनात्र भूयोऽसि जड ! प्रणुन्नः ? ।

मां प्रेरयामास पुनः पुनः सा प्रजावती भर्तृवियोगदग्धा ॥ २५४ ॥
नरेन्द्रसूरभ्यधितेदृशं मा भूयः कथास्तत्प्रतिपादनेन ।
इति प्रणम्रं स च तं विनीय विनीतविद्यप्रवरो मुमोच ॥ २५५ ॥
तौ जम्पती तापसचक्रवर्ती मुमोच नेदिष्ठपुरोपकण्ठे ।
अतिष्ठतां तौ कमनीयबाह्योद्याने क्षणं वृक्षदिदृक्षयैव ॥ २५६ ॥
महामुनिश्रावकमध्यसंस्थं तं तत्र च श्रीगुणरत्नसूरिम् ।
परिस्फुरच्छ्रीगुणरत्नराशिरत्नाकरं सूरिमपश्यतां तौ ॥ २५७ ॥
तौ तस्य धर्मं दिशतो मुनीशः पादारविन्दद्वितयं निषेव्य ।
धत्तः स धर्मैकपरागलब्ध्या प्रीतिं परां षट्पददम्पती व ॥ २५८ ॥
ततस्तदन्ते गुणवर्मणेयमभण्यतैवं दयिते ! भवत्या ।
अनित्यतोद्द्योतकरं भवस्य नीतं वचः श्रोत्रपथं यथार्थम् ॥ २५९ ॥
चारित्रपात्रस्य तदस्य कान्ते ! धर्मोपदेष्टुः सुगुरोः समीपे ।
हित्वाऽधिदुःखां विषयोपसेवामादीयते संप्रति देवि ! दीक्षा ॥ २६० ॥
प्रत्याह सा कान्त ! तदेतदुक्तं स्थाने त्वया स्थानसमानधाम्ना ।
परं महोन्मादनिदानभूतमद्याऽपि नौ यौवनमस्ति तावत् ॥ २६१ ॥
नैवोपभुक्ता विषया यथेच्छं प्राणप्रियाऽद्यापि निकाममेते ।
न लक्ष्यते तावदिदं कथञ्चित् कीदृग् विवर्तो भविता ह्यमीषाम्?॥२६२॥
तज्ज्ञानपात्रं परिपृच्छय कञ्चिद्द् गुरुं यथौचित्यमिदं विधेयम् ।
निशम्य चैतद् गुणवर्मणाऽपि प्रियां प्रति स्पष्टमिदं न्यगादि ॥२६३॥
उन्मादकं यौवनमस्ति तावदितीरितं यद् न तदेव चारु ।
जितेन्द्रियाः सुन्दरि ! यौवनेऽपि विलोक्यमाना बहवोऽपि सन्ति॥२६४॥
वृद्धत्वमाप्याऽजितगोचराश्च स्वमन्वयं चाऽपि विगोपयन्ति ।
तद्यौवनं नोन्मदतानिदानमक्षाणि सन्तोषपराङ्मुखानि ॥ २६५ ॥
संतोष एव क्रियते महद्भिः क्लीबैर्विधातुं च न शक्यते सः ।
महाशया एव तपांसि चक्रुः स्वीकृत्य संतोषरसायनं यत् ॥ २६६ ॥
ज्ञानी गुरुः कश्चन पृच्छयते चेत्येतद् यदुक्तं न वरं तदेव ।
धर्मेऽन्तरायाभिधमेव कर्म संजायते सुभ्रु ! यतः कथञ्चित् ॥ २६७ ॥
इत्येवमुक्त्वाऽपि विबुध्य तस्या दीक्षानिषेधप्रवणाभिसन्धिम् ।
मुक्त्वा बहिः शीलकृतात्मरक्षां तां प्रेयसीं सोऽपि पुरं विवेश ॥२६८॥

स द्यूतकृद् द्यूतजयेन रायं किञ्चित् समादाय परं प्रदाय ।
पौरोगवस्यापण एव गत्वा व्यदीधपत् वण्डकमण्डकान्नम् ॥२६९॥
निधाय तत्पत्रपुटे पवित्रे संगृह्य गत्वा विपिनान्तरे ताम् ।
अम्भोजनेत्रां लघु भोजयित्वा भुङ्क्ते स्म शेषं स्वयमेव धीरः ॥२७०॥
भुजिक्रियानन्तरमेष वृक्षतले निविष्टो निजवल्लभां ताम् ।
दृष्ट्वा मनाक् शून्यहृदं स्वचित्त इदं स दध्यौ विगलत्समाधिः॥२७१॥
किं दुःखितेयं निजबान्धवानां सस्मार किंवाऽपरमेव कञ्चित् ? ।
ततः स चैवं प्रविचिन्त्य राजाङ्गजोऽप्युदस्थाद् गजराजशौर्यः ॥२७२॥
विलोकयामास महीन्द्रपुत्रस्तत्र स्थितस्तां चकितैणनेत्राम् ।
महीतले मर्त्ययुगं लिखन्तीं निरीक्षमाणां परितोऽपि काष्ठाः ॥२७३॥
निःश्वासधारामतिदीर्घदीर्घां विमुञ्चतीं मृत्युमिव प्रयान्तीम् ।
कपोलदेशे विधृताग्र्यपाणिं वितन्वतीं पञ्चमहुङ्कृतिं च ॥ २७४ ॥
( युग्मम् )

ईदृग्व्यवस्थां समवेक्ष्य चैतां दध्यौ स्वचित्ते नृपतेस्तनूजः ।
कन्दर्पबाणैरिव पीडितेयं किं लक्ष्यते लक्षविकारलक्ष्या ? ॥ २७५ ॥
मया समं वा विरहं किमेषा सोढुं क्षणं न क्षमते मृगाक्षी ? ।
स्नेहेऽसमाने हि विजृम्भमाणे स्वल्पो वियोगोऽपि सुदुःसहः स्यात्॥२७

तन्मां वीक्ष्य यदीयमाकुलमनाः संपत्स्यते तद् ध्रुवं
तीव्रौर्वानलवद् ममैव विरहः संतापयत्येतकाम् ।
आगच्छन्तमवेक्ष्य मां यदि पुनः कर्ताऽवहित्थां स्वयं
नूनं क्वापि नरान्तरे तदियमप्यासक्तिमालम्बते ॥ २७७ ॥
ध्यात्वैवं दृढवर्मराजतनयस्तस्यै स्वमालोकयन्
साऽपि प्रेक्ष्य तमापतन्तमकरोदाकारसंगोपनम् ।
स प्रोचे निजबान्धवाः स्मृतिपथं किं देवि ! नीतास्त्वया ?
संप्रत्यङ्ग ! निरीक्ष्यसे प्रियतमे ! प्रोद्विग्नचित्तेव यत् ॥२७८॥
दम्भारम्भपुरःसरं नृपसुतः प्रोचे तया सादरं
प्राणेशे त्वयि देव ! नन्दति चिरं किं बन्धुवर्गेण मे ? ।
एतत् तद्वचनं निशम्य स पतिः संचिन्तयामासिवान्

१ कान्दविकः । २ आकारगोपनम् ।

कण्ठस्थं ध्रुवमेषिका प्रवदति स्वान्तःस्थितं नाऽऽत्मनः ॥२७९॥

दम्पत्योरतिरागसागररसप्रोन्मग्नमानात्मनोः
प्रेमाऽऽधिक्यसमन्वयेऽपि चटुता नैवौचितीमञ्चति ।
मत्वैवं तदुपान्ततः स च समुत्थायाऽवनीन्द्रात्मजः
पश्यन् विष्वगयं वनं तरुचितं केनाऽपि पुंसोदितः ॥ २८० ॥

श्रीमत्कुमार ! गुणचन्द्रकुमारसिंहः
क्रीडन् वने किमधुनाऽपि स विद्यतेऽत्र ? ।
प्रत्याह तं स च स कोऽनु कुमारसिंहो
भद्र ! त्वया शुभधिया परिपृच्छ्यते यः ? ॥ २८१ ॥

व्याचष्ट सोऽत्र नगरे नगराजसार-
ईशानचन्द्र इति भूमिपतिर्बभूव ।
तन्नन्दनः पृथुमतिर्गुणचन्द्रनामा
कामाऽऽकृतिर्विजितधामनिधिः स्वधाम्ना ॥ २८२ ॥

प्रस्थाप्य कुत्रचन कर्मणि मामितोऽत्रो-
द्याने समैत् स परिमेयपदातिपार्श्वः ।
क्रीडारसप्रचयसंचितमानसानां
दृष्टा स्थितिः कचन नैव कुमारकाणाम् ॥ २८३ ॥

तदनु स गुणवर्मा व्याजहृद् व्याजहार
भवनमधिगतेष्टः प्राप स ध्वस्ततापः ।
पुनरपि स बभाषे तस्य सा सङ्गता किं
कुसुमविशिखकान्तारूपसंस्पर्धिरूपा ? ॥ २८४ ॥

अवददिति कुमारः केवलं सङ्गता नो
अगमदसमरागा तेन सा सार्धमेव ।
समभवदतिवेलं भद्र ! भद्रं तदेतद्
यदियमुदितभाग्या सङ्गता तेन साकम् ॥ २८५ ॥

यद्दर्शने प्रथम एव तयोरतुल्यः
प्रेमा स कोऽप्युदभवद् वचनातिगोऽत्र ।
जन्मान्तरानुभवसंभव एव यद्वा
स्त्रीपुंसयोः प्रभवति प्रियताऽतिरेकः ॥ २८६ ॥

इत्युक्त्वा तत्र याते नरपतितनयश्चित्तवृत्त्येति दध्यौ
केचिल्लीलावतीनां प्रविलसितमहो ! वेदितुं नैव शक्ताः ।
सौदामन्याऽतिलोलं प्रविरचितमिदं कामिनीनां मनः किं ?
सन्ध्यारागेण किं वा सुरपतिधनुपा स्विन् किमेतद् विधात्रा ? ॥२८७॥
मन्त्रः कोऽपि स नास्ति साध्यविषयो नाप्यौषधं तादृशं
यन्त्रं किञ्चन नैव तन्त्रमपि तद् नैवास्ति लोकत्रये ।
वाताऽऽन्दोलितसौधकेतुवसनप्रान्ताच्चलाच्चञ्चलं
वामानां मन एव येन नियतं केनाऽपि तद् यन्त्र्यते ॥२८८॥
यत्प्रेमप्रतिबन्धतोऽपि सुगुरोः सङ्गो विमुक्तो मया
साऽपीदृश्यभवद् विवेकविकला हा ! वेधसश्चेष्टितम् ।
एतन्मातुलपत्तनं तदपि तन्नेदिष्ठमाकर्ण्यते
तत्रैतां प्रविमुच्य जन्म सफलं कुर्वे स्वकीयं पुरा ॥ २८९ ॥
संचिन्त्येत्यधिगम्य तत् पुरमसौ वध्वा तयाऽमा क्रमात्
तस्या मातुलमन्दिरान्तरविशद् दौवारिकाऽऽवेदितः ।
आनन्दं कलयन् स चापि विदधे संलाप्य जाम्यङ्गजा-
जामात्रोरनयोर्महेन महनं रैसौधपट्टांशुकैः ॥ २९० ॥
यामिन्यामपरेद्युरात्मदयितां सुप्तां विमुच्यैव तां
गत्वा सद्गुरुसन्निधौ शुभमना दीक्षां समादाय सः ।
चारित्रं प्रतिपाल्य चारु निरतीचारं निजायुःक्षये
संप्राप्याऽनशनं विपद्य सपदि प्रापत् पदं स्वःसदाम् ॥२९१॥
च्युत्वा ततस्त्रिदिवतोऽप्युपलभ्य जन्म
मानुष्यकं शुचिकुलान्वयशीलशालि ।
दीक्षां प्रपद्य परितप्य तपांसि नित्यं
विज्ञानमाप्य परमं पदमाप्स्यते सः ॥ २९२ ॥
इतश्च गतनिद्रया कनकवत्यभिख्याभृता
तया स न समीक्षितः पतिरधिश्रितव्याजया ।
व्यधायि परिदेवनं, स विनिशम्य यद् मातुलः
ससंभ्रममुपागतः प्रवदति स्म चैतद् वचः ॥ २९३ ॥
मा रोदीस्तनये ! गतः स भविता कुत्राऽपि कार्यान्तरे

जामाता किल तस्य दैवमपि नानिष्टं विधातुं क्षमम् ।
अग्रैरेव नरैर्विशोध्य वसुधामानाययिष्यामि तं
तत् स्वस्था भव पुण्यमाचर परं दुःखं न धार्यं त्वया ॥२९४॥
प्रोच्येति प्रहितैर्नरैः स परितो व्यालोकि नालोकितः
कुत्राऽपि प्रतिचत्वरं प्रतिपुरं संशोधयद्भिर्भृशम् ।
आगत्याऽपि निवेदितं नरपतेस्तेनाऽपि ते शिक्षिता
जामेय्याः पुरतो न केनचिदिदं वाच्यं न वाच्यं ततः॥२९५॥
( युग्मम् )
साऽप्यध्यायदयं ध्रुवं मम तकद् दुश्चेष्टितं जज्ञिवां-
स्तेनैवाहमभूवमस्य मनसो वैरङ्गिकी निश्चितम् ।
प्राप प्रागपि सोऽपि सद्गुरुगिरा संसारवैराग्यकं
संप्रत्येष विशेषतो मम पुनर्दुर्वृत्तसंप्रेक्षणात् ॥ २९६ ॥
तद् नूनं विदुषाऽमुनोत्तममुनेरादीयते स्म व्रतं
स्वार्थं तद् वितनोम्यहं किमधुना व्यर्थैर्विकल्पैरिमैः ? ।
ध्यात्वैवं परिवञ्च्य मातुलनृपं दुष्टाऽऽशया तत्क्षणात्
गत्वा सा गुणचन्द्रमेव दयितं चक्रेऽतिचन्द्रं रुचा ॥ २९७ ॥
तदासक्तस्वान्तं स्वपतिमवलोक्य प्रियतमा-
स्तदीया बिभ्राणाः प्रचुरतरखेदं च हृदये ।
मिलित्वा निःशेषाः समवधृतदुःखैकविरहा
रहोदेशेऽन्योऽन्यं प्रणिजगदुरेतत् स्फुटतरम् ॥ २९८ ॥
ज्वालाजालकरालपावकमहाकुण्डे प्रवेशो वरं
कल्लोलस्फुटनक्रचक्रविषमे पातः पयोधौ वरम् ।
क्रुद्धाऽऽशीविषभीष्मवक्त्रकुहरे क्षिप्तः करो वा वरं
दुःखं मानविनाशकारि न परं नार्याः सपत्नीभवम् ॥ २९९ ॥
यावज्जीवति चैषिका विजयते तावत् पुनः कार्मणं
तस्मिन् जीवति भर्तृसङ्गमसुखं नास्माकमस्ति ध्रुवम् ।
रूपं तेन विनाऽपि जीवितमिदं व्यर्थं विचार्येति ता-
स्तस्यै क्ष्वेडमदीदपन्नथ मृता ध्यानेन रौद्रेण सा ॥ ३०० ॥
संजज्ञे दुरितैश्चतुर्थनरके सा नारकी प्राकृतै-

रुद्वृत्याऽपि ततो भ्रमिष्यति भवेऽमुत्राऽपि दुःखाकुले ।
मत्वैवं विषयानुषक्तमनसां दुःखं च सार्वत्रिकं
तत् त्वं श्रीकुरुचन्द्र ! तान् स्ववशयन् कल्याणमालां श्रय॥३०१॥
आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुश्चारित्रभाजां गुरुः ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽगमत् षोडशः ॥ ३०२ ॥

## इति श्रीशान्तिनाथचरिते षोडशः सर्गः समाप्तः ॥



अर्हम्

## अथ सप्तदशः सर्गः ।



वाणी श्रीशान्तिनाथस्य भवतां भवताद् मुदे ।
चतुर्गतिमहातापशमनाऽमृतदीर्घिका ॥ १ ॥
कषाया ज्ञानमार्तण्डतिरोधाननवाम्बुदाः ।
चत्वारः क्रोधमानाद्या दुर्गतेः सहचारिणः ॥ २ ॥
कषायैः सह चेद् योगस्तत् तपोनियमैरलम् ।
तैः समं यदि नो योगस्तत् तपोनियमैरलम् ॥ ३ ॥
अज्ञानापहृतस्वान्तः कषायान् यो निषेवते ।
इहामुत्र स दुःखी स्यादग्निशर्मा द्विजो यथा ॥ ४ ॥
अस्तीह भरतक्षेत्रे काशीदेशप्रकाशकृत् ।
शस्यौघैरभिरामश्रीग्रामः श्रीपुण्ड्रवर्धनः ॥ ५ ॥
यज्ञदत्ताभिधस्तत्र विप्रो यज्ञक्रियापरः ।
सोमास्याऽभिधया सोमा समजायत तत्प्रिया ॥ ६ ॥
अग्निशर्मा तयोः पुत्रः कलाकौशलपेशलः ।
विद्युत्प्रभां स सत्याख्यां परिणिन्ये पितुर्गिरा ॥ ७ ॥
यज्ञदत्तस्य तस्यास्ति धेनुश्चन्द्राऽभिधा गृहे ।
कुण्डोध्नीमग्निशर्मा तां दोग्धि प्रत्यहमेव सः ॥ ८ ॥

अपरेद्युस्तया धेन्वा किञ्चित् पीडितया स्तने ।
स्वयमेव दुहन्नंह्रिप्रहारेण स ताडितः ॥ ९ ॥
पारी पाणिस्थिता तेन भग्ना पेयूषसंभृता ।
घातेन स च दूनश्च कोपं प्राप द्विजाधमः ॥ १० ॥
उच्चैर्लकुटमुत्पाट्य कुट्टयामास सोऽपि ताम् ।
तत्प्रहारव्यथाऽऽक्रान्ता यथा सा न्यपतत् क्षितौ ॥ ११ ॥
किमेतदिति संभ्रान्ता तद्वधूरेत्य तं जगौ ? ।
विना विशेषविज्ञानं पशूनां पशुतोच्यते ॥ १२ ॥
तत्सत्त्वमात्रसंप्राप्त्यै जघान त्वामियं प्रिय ! ।
तत्सत्त्वमात्रसंप्राप्त्यै त्वया किमियमाहता ? ॥ १३ ॥
इत्याद्यभिदधानां तां पूर्णगर्भां रुषाऽरुणः ।
स तेन लकुटेनाऽहन् सगर्भा सा यथाऽमृत ॥ १४ ॥
दुःशापं ददतौ मातापितरौ तेन मारितौ ।
क्रोधान्धो यदि वा मर्त्यश्चण्डालाद् न विशिष्यते ॥ १५ ॥
श्रुत्वा दुर्वृत्तमीदृक्षं नागराः सहसाऽऽगमन् ।
दृष्ट्वा च तादृशं कर्म धिक्कारमुखराननाः ॥ १६ ॥
ब्रह्मस्त्रीभ्रूणगोहत्यापातकानि चकार यत् ।
अप्रेक्ष्योऽयमवाच्योऽयं सर्वथा तेन कर्मणा ॥ १७ ॥
इत्याद्यन्योऽन्यमालापं पौरेषु विदधत्स्वपि ।
तथैव दण्डमुद्यम्य सोऽधावत् कोपकम्पनः ॥ १८ ॥
कारागारे परिक्षिप्तः स धृत्वा राजपूरुषैः ।
वेदना विविधास्तत्र विषह्याऽऽयुःक्षये मृतः ॥ १९ ॥
नरकं सप्तमं प्राप्तः स सेहे दुःसहा व्यथाः ।
समाप्याऽऽयुस्ततो जज्ञे मीनः स च महाम्बुधौ ॥ २० ॥
विपद्य कथमप्येष निरयं प्राप पञ्चमम् ।
जातो गङ्गाह्रदे मत्स्यस्ततोऽघानि स धीवरैः ॥ २१ ॥
विहगोऽभूत् ततोऽमारि पाशिकैः पाशसंयतः ।
सोऽकामनिर्जरायोगादेवं पातकमक्षिपत् ॥ २२ ॥
विप्रोऽभवत् पुनः सोऽपि कुञ्जरावर्तपत्तने ।

वैराग्याद् विषयोद्विग्नस्ततस्तापसतां ललौ ॥ २३ ॥
अज्ञानादेष संचित्य दुस्तपानि तपांस्यपि ।
आयुःक्षये पुनर्मृत्वा बभूव व्यन्तरामरः ॥ २४ ॥
सोऽथ च्युत्वा महानन्दसंपूर्णाऽखिलनागरे ।
महानन्दपुरे श्रीमत्सोमविश्वम्भरापतेः ॥ २५ ॥
नन्दाकुक्षिभवो मानराजाख्यो नन्दनोऽजनि ।
धात्रीभिर्यो बहूक्तोऽपि कस्याचिद् नाऽनमच्छिरः ॥ २६ ॥
( युग्मम् )
बाल्यादपि कला काऽपि भेजे मानोद्धतं न तम् ।
संतापकारिणं सूरमिव काव्यगुणद्विपम् ॥ २७ ॥
न देवता गुरून् नाऽपि यौवनेऽपि ननाम सः ।
कुशीलताकलापेन स्तब्धेनेव विनिर्मितः ॥ २८ ॥
श्रीसोमेन महीन्द्रेण तारुण्योल्लसदङ्गकः ।
समग्रगुणसंपन्नां कन्यां स परिणायितः ॥ २९ ॥
अन्येद्युर्वासमध्यस्थं तत्प्रिया तमभाषत ।
किञ्चिदाख्याहि विज्ञानं कान्त ! प्रश्नोत्तरादिकम् ॥ ३० ॥
दुर्विदग्धा दधात्येषाऽखर्वं गर्वं स्वरूपतः ।
दुष्टा ममोपहासाय यदेवं परिपृच्छति ॥ ३१ ॥
किं तया क्रियते बध्वा या मानं मानयत्यलम् ? ।
मा भूद् रसवती साऽपि या लावण्यमयी किल ॥ ३२ ॥
विचिन्त्येदमवज्ञाय तेन विज्ञाऽपि सोज्झिता ।
स दृष्ट्याऽपीक्षते नैतां संलापस्य कथैव का ? ॥ ३३ ॥
रुष्टोऽयमिति विज्ञाय वाणिन्या स तयाऽन्यदा ।
अभाणि प्रिय ! नो कश्चिद् मन्तुस्त्वयि मया कृतः ॥ ३४ ॥
तदीश ! मयि दास्यां किमप्रसादस्तवेदृशः ? ।
प्रसन्ने भर्तरि स्त्रीणां सप्रसादं हि मानसम् ॥ ३५ ॥
एवं सानुनयं प्रोक्तोऽप्येष तां न यदाऽवदत् ।
तया तदा पदाब्जान्तः शिरो धृत्वा स मानितः ॥ ३६ ॥
पाण्डित्यदर्पसंपूर्णे ! पापे ! मद्दृक्पथं त्यज ।

इत्याद्युक्त्वा विरुद्धं स सौधान् तां निरकासयन् ॥ ३७ ॥
सैवं तेन पराभूता भूतार्तेनैव केवलम् ।
सौधाद् बहिःस्थितां वापीं संप्राप्यैवमवोचत ॥ ३८ ॥
देवा देव्यश्च शृण्वन्तु ममैतां गिरमुच्चकैः ।
नाऽपराधं विजानामि येन रुष्टः स मे प्रियः ॥ ३९ ॥
अर्धचन्द्रप्रदानेन तेन निष्कासिता गृहात् ।
न क्षमे जीवितं धर्तुं विना तेन ततो म्रिये ॥ ४० ॥
अमुत्राऽपि भवे भूयाद् भर्ताऽयं वः प्रसादतः ।
इत्युदीर्य जले झम्पां साऽदादमृत च क्षणात् ॥ ४१ ॥
तस्या अनु समायातः पादपान्तरितोऽखिलम् ।
निशम्य तां न मानात् सोऽरक्षत् तस्मादपायतः ॥ ४२ ॥
आस्थानमास्थितेऽन्येद्युः क्ष्मापे वार्ताप्रसङ्गतः ।
अवादि सिंहसामन्तेनेदृशं वचनं स्वयम् ॥ ४३ ॥
राजानः सन्ति राजेन्द्र ! बहवोऽपि महत्तमाः ।
तथाऽपि वप्रराजस्य केऽपि लोकोत्तरा गुणाः ॥ ४४ ॥
राजसिंहासनासन्नः स मानी राजनन्दनः ।
क्रुद्धो जगौ ममाग्रे रे ! किं वर्णयसि तं शठ ! ? ॥ ४५ ॥
प्राञ्जलः प्राञ्जलीभूय सोऽजल्पन् किं प्रकुप्यसि ? ।
देव ! नो मत्सरो युक्तः सतां साधुप्रशंसने ॥ ४६ ॥
आक्रोशन्तं पुनर्मन्त्री सुबुद्धिस्तमथाऽभ्यधात् ।
निरूपिते स्वरूपे किं कुमार ! कुपितोऽभवः ? ॥ ४७ ॥
तस्योदितमिदं श्रुत्वा भूयः स कुपितो भृशम् ।
मण्डलाग्रं समाकृष्य मन्त्रिणं हन्तुमुत्थितः ॥ ४८ ॥
क्रोधदग्धविवेकोऽयममात्यं मा निहन्त्विति ।
अविक्षदन्तरे राजा तन्निषेधनिबद्धधीः ॥ ४९ ॥
क्रूरस्य क्रूरकर्माऽयं पक्षं कक्षीकरोति यत् ।
तेन राड् मे निहन्तव्य इति ध्यात्वा स तं न्यहन् ॥ ५० ॥
तदालोकेन धिक्कारं कुर्वाणान् मण्डलेश्वरान् ।
हन्तुं धावन्नयं बद्धः खड्गमाच्छिद्य तैर्बलात् ॥ ५१ ॥

रदैः स रसनां छित्त्वा मानी निधनितां गतः ।
नारको नरके षष्ठे समभूद् भूरिदुःखभृत् ॥ ५२ ॥
उद्वृत्तः स ततो जज्ञेऽञ्जनशैले महाकिरिः ।
अञ्जनाद्रेरिवाऽऽसङ्गात् श्यामश्यामवपुर्द्युतिः ॥ ५३ ॥
क्रोडीभिः स च चिक्रीड तारुण्ये काननेऽभितः ।
मुस्तास्तम्बकदम्बानां खण्डैराहारमाचरन् ॥ ५४ ॥
नृसिंहविक्रमः सिंहध्वजो नाम महीपतिः ।
तमद्रिमाप पापद्धर्यै पापव्यसनलालसः ॥ ५५ ॥
चलितः संमुखं तस्याऽभिमानेन स पोत्र्यपि ।
महासूरो रणाऽवन्यां बन्दिनेव विवर्णितः ॥ ५६ ॥
एकेन शल्यघातेन तेन व्यापादितोऽथ सः ।
मृत्वा तत्रैव संजज्ञे हस्ती शैल इवापरः ॥ ५७ ॥
करिणीभिः समं स्वैरं रममाणः स यौवने ।
समयं गमयन् प्राप दशां षष्ठीमयं द्विपः ॥ ५८ ॥
एष ग्रीष्मेऽन्यदा भीष्मे वर्धमानमहातपे ।
तृषाशुष्यद्गलोऽविक्षत् पल्वले जलधीतये ॥ ५९ ॥
मग्नो जम्बालजालान्तर्जले निर्गन्तुमक्षमः ।
पञ्चतां सप्तभिर्घस्रैः प्राप मध्यस्थभावतः ॥ ६० ॥
विपद्य भरतक्षेत्रे शालिग्रामे मनोरमे ।
नन्दनश्रेष्ठिनो भार्यासुनन्दाकुक्षिसम्भवः ॥ ६१ ॥
नन्दनः समभूद् नाम्ना मायादेव इति श्रुतः ।
मायैव दूषणं तस्य क्षारता जलधेरिव ॥ ६२ ॥

( युग्मम् )

वणिग्देवप्रसादस्य भार्यादेवमतीसुताम् ।
यौवने नन्दिनीं नाम स पित्रा परिणायितः ॥ ६३ ॥
पितर्युपरते हट्टे निषीदन्नेष नित्यशः ।
समग्रं वञ्चयामास लोकं बालाऽबलादिकम् ॥ ६४ ॥
सरलः सोमदेवोऽस्य वयस्यः समभूद् वणिक् ।
अन्यदा मायिना तेन रहस्येवमवादि सः ॥ ६५ ॥

आकस्मिकी विपद् मित्र ! प्राणिनामुपजायते ।
योगक्षेमाय तत् काऽपि द्रव्यं किञ्चिद् निधीयते ॥ ६६ ॥
आपदर्थे धनं रक्षेदिति नीतावपि स्मृतम् ।
सत्यं विधीयते, येन महान्तः शास्त्रवर्त्मगाः ॥ ६७ ॥
युक्तमित्युदिते तेन ग्रामपर्यन्तमेत्य तौ ।
समन्ततः समालोक्य न्यधत्तां स्वं निजं निजम् ॥ ६८ ॥
प्रच्छन्नमन्यदैकाकी गत्वा नन्दनभूर्निशि ।
निधिद्वयं तदुत्खन्य स्वयं स्वगृहमानयत् ॥ ६९ ॥
कियत्यपि गते काले सोमस्तेनाऽभ्यधाय्यथ ।
तद् वित्तं नौ तथैवाऽस्ति किं वाऽऽत्तं केनचिन् सखे ! ? ॥७०॥
इत्युपेत्य महाभाग ! तद् भाग्येन निरीक्ष्यते ।
पुण्यार्थयोर्महान्तो हि भेदं किञ्चित् प्रचक्षते ॥ ७१ ॥
प्रतिपद्य वचस्तस्य सोमः सोममुखद्युतिः ।
समं तेनैव तत्रैव गतवान् गतकैतवः ॥ ७२ ॥
रिक्तं तत् स्थानमालोक्य मायादेवो विषादवान् ।
लुठति स्म महीपीठे मुमूर्षुरिव सत्वरम् ॥ ७३ ॥
मूर्च्छामतुच्छामानर्च्छ सान्निपातिकवत् किल ।
हा ! धात्रा वञ्चितोऽस्मीति ताड्यमान इवाऽरटत् ॥ ७४ ॥
वक्षोऽपि ताडयामास मृतापत्य इवाऽधिकम् ।
मनाक् संप्राप्तचैतन्यो विललाप स बालिशः ॥ ७५ ॥
हा देव ! मयका किं तेऽपराद्धं पूर्वजन्मनि ? ।
यद् मया निहितं द्रव्यमन्येन ग्राहितं त्वया ॥ ७६ ॥
मुक्त्वा सद्म बहिर्न्यासि योगक्षेमाय यद् मया ।
दैवेनाऽपहृतं तद् मे पूत्कुर्वे कस्य वा पुरः ? ॥ ७७ ॥
इत्यादि रचयन्नेष विलापं छद्मतः कुधीः ।
संबोध्य सोमदेवेन संबोध्य गृहमापितः ॥ ७८ ॥
जन्माऽऽरभ्य स विश्वेषां वञ्चकः स्वस्य वञ्चकः ।
विपद्य स्कन्दरजकनिलये खरोऽजायत ॥ ७९ ॥
आयुः संक्षिप्य तत्राऽपि भारोद्वहनकर्मणा ।

सा शुनी समभूद् मातुः स्तन्यं लेभे च किञ्चन ॥ ८० ॥
हुडक्कमरुता मृत्वा शृगाली साऽभवत् ततः ।
पुना रत्नप्रभेलायां नारकः स्वायुषः क्षये ॥ ८१ ॥
तस्मादुद्वृत्य संजज्ञे नगरे गिरिवर्धने ।
वामात्राख्यवणिग्भार्याऽनुद्धरीतनयोऽथ सः ॥ ८२ ॥
लोभनन्दाभिधानोऽयं प्रधानो दोषसंग्रहे ।
अभूल्लोभमयो नूनं वार्धिर्वारिमयो यथा ॥ ८३ ॥
यानपात्रं समारुह्य स्वर्णद्वीपं भजामि किम् ? ।
यदि वा रोहणं यामि रत्नसन्दोहरोहणम् ? ॥ ८४ ॥
विशामि विवरे किं वा कल्यं लात्वा कुतश्चन ? ।
किं धातुवादिनः सेवे येन स्याद् मे धनोच्चयः ? ॥ ८५ ॥
तारुण्ये प्रबले येन द्रव्यं न समुपार्जितम् ।
वार्धके स कथङ्कारं सुखमाप्स्यति मन्दधीः ? ॥ ८६ ॥
दोषा गुणा विधीयन्ते पुंसां द्रव्ये सति स्फुटम् ।
यतिष्ये सर्वथा तस्माद् नव्यं द्रव्यमुपार्जितुम् ॥ ८७ ॥
इति संचिन्त्य चित्तान्तः पित्रोराकूतमात्मनः ।
सोऽशंसत् पुत्रवात्सल्यात् तौ प्रोचतुरिदं हितम् ॥ ८८ ॥
आवयोस्तनुजन्मा त्वं खड्गिशृङ्गमिवैककः ।
अतस्त्वद्विरहं सोढुं नैव वत्स ! क्षमावहे ॥ ८९ ॥
अत्र स्थितोऽपि तद् द्रव्यं वाणिज्यैः समुपार्जय ।
कारयन् दर्शनानन्दमावर्जय मनांसि नौ ॥ ९० ॥
इत्थं ताभ्यां निषिद्धोऽप्यनिवेद्य चलितोऽथ सः ।
गम्भीरसिन्धुरोधःस्थं गम्भीरपुरमासदत् ॥ ९१ ॥
भ्रामं भ्रामं पुरीतः स सांयात्रिकगृहं गतः ।
तत्र सज्जीकृतं पोतं समालोक्य मुदं दधौ ॥ ९२ ॥
पोतं सोऽपि समारुह्य भृत्यभावमधिष्ठितः ।
गुणसागरपोतेशवणिजा सह चेलिवान् ॥ ९३ ॥
कुर्वन्त्यसंस्तुतस्याऽपि विश्वासं येऽविकत्थनाः ।
विशुद्धचेतसः सन्तः प्रशस्यन्ते न ते कथम् ? ॥ ९४ ॥

सुवातप्रेरितं तच्च रत्नद्वीपं रयादयात् ।
श्रुताधिकायसंश्रुत्या तुतोष गुणसागरः ॥ ९५ ॥
उपदाऽऽलोकमात्रेण भूपतिस्तुष्टमानसः ।
शुल्कार्धं व्यमुचत् तस्य सांयात्रिकशिरोमणेः ॥ ९६ ॥
विक्रीताऽऽनीतपण्यः स प्रतिपण्यकृतग्रहः ।
वाहनं वाहनस्वामी प्रैरयत् स्वपुरं प्रति ॥ ९७ ॥
महामूल्येषु रत्नेषु परैर्दृष्टेषु कर्हिचित् ।
भविष्यति ममाऽपायो यज्जनोऽन्यार्थसस्पृहः ॥ ९८ ॥
परार्थवनिताऽऽलोके येषां न गृहयालुता ।
पुंरूपेण जगत्यां ते जिनाः किं नैव दुर्लभाः ? ॥ ९९ ॥
एवं विमृश्य पोतेशो महारत्नानि कानिचित् ।
निर्यामकजनादीनां स प्रच्छन्नमतिष्ठिपत् ॥ १०० ॥
तटस्थो लोभनन्दोऽन्तर्धीयमानानि तान्यपि ।
ददर्श दर्शनीयानि तानि चाऽऽदातुमैहत ॥ १०१ ॥
पोतेशे सावधानेऽस्मिंस्तानि लातुमशक्नुवन् ।
तं मारयितुमैच्छत् स लोभः किं न करोति वा ? ॥ १०२ ॥
अन्येद्युरुत्थितं देहचिन्तया व्याकुलं निशि ।
सांयात्रिकं निचिक्षेप सोऽब्धौ छिद्रं विमार्गयन् ॥ १०३ ॥
याने याते ततो दूरं जजागार कथञ्चन ।
कोऽप्यदृष्ट्वा च पोतेशं वज्राहत इवाऽभवत् ॥ १०४ ॥
ततः स लब्धचैतन्यो बोधयित्वाऽपरानपि ।
कर्णधारकमाचख्यौ यानं स्खलय भोः ! मनाक् ॥ १०५ ॥
किमर्थमिति तेनोक्ते तैरूचे प्रेक्ष्यते प्रभुः ? ।
स प्राह कायचिन्तायै यदा स प्रभुरुत्थितः ॥ १०६ ॥
योजनानां शतं यानं तत्क्षणात् समुपागमत् ।
कायचिन्तोत्तरं तस्य स्वरूपं वेद न स्वयम् ॥ १०७ ॥
युष्माकमुपरोधेन तं पश्यामि तथाऽपि हि ।
इत्युक्त्वाऽस्खलयद् यानं सकर्णः कर्णधारकः ॥ १०८ ॥
स निक्षिप्याऽभितो नौकाः सांयात्रिकमलोकत ।

तथाऽपि क्वाऽपि न प्रापि तत्कथाऽपि यथास्थिता ॥ १०९ ॥
नुन्नः पोतोऽथ तैर्भूयः शोकाऽऽवेशविसंस्थुलैः ।
क्रमेण नगरं प्राप्य तदीशाय स चाऽर्पितः ॥ ११० ॥
तेनोचितं धनं दत्त्वा लोभनन्दो विसर्जितः ।
उपात्तरत्नसंभारः पुरं प्रत्यचलद् निजम् ॥ १११ ॥
मां समुद्धतनेपथ्यं पथि दृष्ट्वैव तस्कराः ।
रत्नान्याशु ग्रहीष्यन्ति निग्रहीष्यन्ति चाऽसिना ॥ ११२ ॥
इदं संभाव्य तान्येव स्यूत्वा रत्नानि कन्थया ।
स कार्पटिकवेषेणाऽध्वनि प्रास्थित सुस्थितः ॥ ११३ ॥
गच्छतस्तस्य मार्गेऽस्ति कान्तारे चौरसैन्यकम् ।
शाखिशाखास्थितः पक्षी तस्याऽग्रे प्रोचिवानिदम् ॥ ११४ ॥
अहो ! एताः समायान्ति बह्वो द्रव्यकोटयः ।
तद् गृह्णीत यथा न स्याद् दारिद्र्यं वः कदाचन ॥ ११५ ॥
निशम्येति प्रहृष्टैस्तैश्चौरैरालोकि सर्वतः ।
परं कश्चिद् न चाऽऽलोकि तादृग् द्रव्यसमाश्रयः ॥ ११६ ॥
दृष्टे सन्निहिते तस्मिन् कन्थाऽऽवृतकलेवरे ।
मलिम्लुचैर्विमुक्तेऽथ स खगः पुनरभ्यधात् ॥ ११७ ॥
एता युष्मासु पश्यत्सु ययुर्द्रविणकोटयः ।
श्रुत्वैवं चौरराजोऽपि तमानाय्य निरैक्षत ॥ ११८ ॥
यूकालक्षाश्रया लिक्षाकोट्याधारा मम प्रभो ! ।
इयं कन्थाऽस्ति नैवान्यदित्युक्ते तं मुमोच सः ॥ ११९ ॥
भूयः खगस्तदाऽऽचष्ट स्पष्टवाक् कीरवत् स तु ।
जन्मान्तरविरोधीव लोभनन्दस्य केवलम् ॥ १२० ॥
अविसंवादिवाक्यत्वाद् विहङ्गस्य स तैः पुनः ।
रुद्धः कन्थाद्यमाच्छिद्य व्यमोचि शववत् पुनः ॥ १२१ ॥
तथाकृते च तैः पक्षी मौनमालम्ब्य तस्थिवान् ।
कन्थामुत्कील्य रत्नानि चौरैराददिरे ततः ॥ १२२ ॥
लोभनन्दः पुनश्चिन्ताऽऽचान्तस्वान्त ऋते धनम् ।
गम्भीरपुरमेवाऽगात् तादृग् नान्यत्र यद् धनम् ॥ १२३ ॥

इतश्च पातितो योऽब्धौ तेन पोतपतिस्तदा ।
सोऽपि प्राग्भग्नयानस्य प्रापत् फलकमेककम् ॥ १२४ ॥
प्रेर्यमाणः स कल्लोलैर्वातोद्भूतैरितस्ततः ।
दिनानां सप्तकेनाऽऽप तदेव पुरमात्मनः ॥ १२५ ॥
सुजनैर्मुदितैस्तस्य दर्शनादेव पत्तने ।
अकार्यत महान् ऋद्ध्या वर्धापनमहोत्सवः ॥ १२६ ॥
स क्रमाल्लोभनन्दोऽपि दैवात् तद्गृहमागमत् ।
रुष्टः परिजनस्तस्य तद्वृत्तान्ताऽवबोधतः ॥ १२७ ॥
बार्हिबन्धेन बद्ध्वा तैः स निन्ये नृपतेः पुरः ।
दुष्टैस्तच्चेष्टितै रुष्टस्तं राजा वध्यमादिशत् ॥ १२८ ॥
कदर्थनाभिरुग्राभिर्बह्वीभिः स कदर्थितः ।
रौद्रध्यानी विपद्याऽगात् तुरीये निरये रयात् ॥ १२९ ॥
तत्रोत्कृष्टायुरासेहे विविधाः सोऽपि यातनाः ।
कषायाणां चतुर्णां हि मेलो दुःखस्य मेलकः ॥ १३० ॥
इत्थं सोऽपारसंसारप्रान्तरप्रान्त एव यत् ।
भ्रमिता त्यज्यतां तस्मात् प्रमादोऽयं तृतीयकः ॥ १३१ ॥
कुरुचन्द्र ! महीचन्द्र ! निद्रारूपश्चतुर्थकः ।
प्रमादस्त्यज्यतां यस्मादिहाऽमुत्र सुखं नहि ॥ १३२ ॥
निद्रापरवशः प्राणी वित्तबुद्धिपरिक्षयात् ।
इहाऽमुत्राऽपि दुःखानि भानुदत्त इवाऽश्नुते ॥ १३३ ॥
तथाहि सिद्धार्थपुरे राजा शत्रुञ्जयोऽजनि ।
कोकानामिव लोकानां शोकानां यो वियोगकृत् ॥ १३४ ॥
वनमालाऽभिधा तस्य महिषी भूपतेरभूत् ।
गौरीति विकले देशे या विजाड्या विवर्ण्यते ॥ १३५ ॥
भानुदत्तोऽभवत् तत्र कुटुम्बी दौस्थ्यभाजनम् ।
प्रायो लक्ष्मीसरस्वत्योः स्थितिः पुण्यात्मनां नृणाम् ॥ १३६ ॥
अर्थं विना न संमानं केऽपि कुर्वन्ति कस्यचित् ।
स चित्ते परिभाव्यैवं प्रतस्थे धनमर्जितुम् ॥ १३७ ॥
अयं कामुकवद् भ्राम्यन् विषयाद् विषयान्तरम् ।

सिन्धुरोधः समासाद्य रत्नार्थी तदसेवत ॥ १३८ ॥
पूजां विना फलाऽवाप्तिर्न क्वाऽपि समवेक्ष्यते ।
इति धृत्वाऽऽशये सोऽपि सिन्धोरर्चां प्रचक्रमे ॥ १३९ ॥
पुष्पप्रकरधूपाद्यैः पूजयित्वा पयोनिधिम् ।
स गर्तामखनत् तीरे गम्भीरां चित्तवृत्तिवत् ॥ १४० ॥
वेलायां विनिवृत्तायां तत्राऽऽयातः स सत्वरम् ।
वराटकान् समालोक्य विषादमधिकं दधौ ॥ १४१ ॥
लक्ष्मीनिदानमुद्योग इत्येवं कलयन्नयम् ।
विशेषाद् विदधे तच्च स्वायासमविचारयन् ॥ १४२ ॥
इत्यहर्निशमेतस्याऽऽतन्वतः सत्त्वबोधतः ।
अब्ध्यधिष्ठायकस्तुष्टो गर्ताऽन्तः क्षिप्तवान् मणिम् ॥ १४३ ॥
स वेलाऽपगमे तत्र रत्नं वीक्ष्याऽतिभासुरम् ।
हृष्टो निबध्य तद् वस्त्रस्याऽञ्चले चलितस्ततः ॥ १४४ ॥
स्वपत्तनं समागच्छन् सान्द्रद्रुमतलेऽन्यदा ।
क्वचिद् मार्गपुरोपान्ते संविवेश स सश्रमः ॥ १४५ ॥
अथाऽत्राऽगाज्जनो मत्तमातङ्गभयविह्वलः ।
तदैकेन स चावादि प्रमीलामिलितेक्षणः ॥ १४६ ॥
अरे ! पान्थ ! समुत्तिष्ठ समुत्तिष्ठ विपत्स्यसे ।
मूलादालानमुन्मूल्य मत्तेभोऽत्र समेति यत् ॥ १४७ ॥
क्रियासमभिहारेण तेनैवं भणितोऽपि सः ।
नैवोत्थितो यदा तावल्लुब्धोऽसावित्यचिन्तयत् ॥ १४८ ॥
पाषाण इव पान्थोऽयं मार्गाऽऽयासाद् न चेतति ।
तदस्य सन्निधेर्वित्तं गृह्णाम्यह्नाय निश्चितम् ॥ १४९ ॥
विचिन्त्यैवं पटीप्रान्तान् शोधयित्वाऽस्य तन्मणिम् ।
प्राप्य तुष्टः प्रणश्याऽगात् पदैर्द्रुततरैस्ततः ॥ १५० ॥
विहस्तीकृतलोकः स हस्ती तत्र न चाऽऽगमत् ।
व्यबुद्ध नागदत्तोऽपि हतबुद्धिः क्षणान्तरे ॥ १५१ ॥
स्वोत्तरीयाञ्चलं रिक्तं दृष्ट्वा मूर्छन् पपात सः ।
वातैश्चैतन्यमासाद्य क्रमात् स्वं विजगौतमाम् ॥ १५२ ॥

प्रविश्य नगरे तत्र स ततस्ततविक्रमः ।
भृत्यवृत्तिमधिष्ठाय रैसहस्रमुपार्जयत् ॥ १५३ ॥
क्रीत्वाऽर्जितधनैः स्वर्णं लात्वा गच्छन् निजं पुरम् ।
ग्रामाद् बहिष्क्वचित् सुप्तः सोऽमोषि परमोषिणा ॥ १५४ ॥
वैराग्यं परमं प्राप्तः स प्राप्य सुगुरोर्व्रतम् ।
दृष्टिवादमतिस्पष्टमध्यगीष्ट विनाशकम् ॥ १५५ ॥
अथो गच्छाधिपत्येऽसौ गुरुभिः स्थापितः क्रमात् ।
रसगौरवलाम्पट्यं मिष्टभुक्त्या बभाज सः ॥ १५६ ॥
उल्ललास पुनर्निद्राप्रमादस्तेन तस्य सः ।
संभवेद् मैथुनाऽऽसक्त्या राजयक्ष्मोदयः स्फुटम् ॥ १५७ ॥
प्रतिक्रमणकालेऽपि नायं जागर्ति नित्यशः ।
निद्रावशंवदः को वा हितं जानाति तत्त्वतः ? ॥ १५८ ॥
ज्ञात्वा तं तादृशं शिष्या अशुद्धान्नवदत्यजन् ।
विषसंवासितं को वा पद्मं जिघ्रति शुद्धधीः ? ॥ १५९ ॥
विसस्मार प्रमादेन मूढधीस्तेन तच्छ्रुतम् ।
सम्यग्दर्शनरत्नं च जह्रे चाऽस्य नरेन्द्रवत् ॥ १६० ॥
एक एव भ्रमल्लोकैर्हस्यमानः पदे पदे ।
स मृत्वाऽनन्तकायेषु प्रमादात् समपद्यत ॥ १६१ ॥
ईदृग् निद्राप्रमादोऽयं वर्ज्यस्तुर्यस्त्वया नृप ! ।
मर्मवाक्यवदत्यन्तं विषसंपृक्तभोज्यवत् ॥ १६२ ॥
स्त्रीभक्तदेशभूपानां कथास्त्याज्या विशारदैः ।
प्रत्येकं दूषणं दृष्ट्वा विशिष्टस्वेष्टलिप्सया ॥ १६३ ॥
स्त्रीकथाप्रतिपत्तेः स्याद् मनसः सानुरागता ।
कज्जलस्य प्रसङ्गेन कालिमा किं न संभवेत् ? ॥ १६४ ॥
भोज्यस्य कथया पुंसां भोज्ये लम्पटता भृशम् ।
सौहित्यं न प्रजायेत तद् विना ना पशूपमः ॥ १६५ ॥
तत्तद्देश्यैः समं देशकथा पुंसां विरोधिताम् ।
विदधाति, यतो निन्दां स्वदेशस्य सहेत कः ? ॥ १६६ ॥
राज्ञां कथाऽपि निर्बन्धात् क्रियमाणाऽप्यनर्थदा ।

नरेन्द्र ! माधवस्येव नरस्याऽलिपतमाधव ! ॥ १६७ ॥
तथाहि भरतार्धेऽत्र दाक्षिणे श्रीपुरं पुरम् ।
अधिवासं प्रकुर्वत्या यस्याऽऽख्या पप्रथे श्रिया ॥ १६८ ॥
भूपो भुवनपालोऽत्र भुवनाऽवनविक्रमः ।
बभूव भूवधूभालचित्रनिर्माणकर्मठः ॥ १६९ ॥
तस्यासीत् प्रभवप्रेमवल्लीवनघनप्रभा ।
सुन्दरी रूपसंपत्त्या देवी भुवनसुन्दरी ॥ १७० ॥
सज्जनानन्दकृन्नन्दनन्दामित्रातनूभवः ।
तत्र माधवनामाऽभूद् वणिग् दोषनिकेतनम् ॥ १७१ ॥
अन्यदा नागरा रागात् सभामध्यमधिश्रिताः ।
उपचक्रमिरे कर्तुमन्योऽन्यं वनिताकथाः ॥ १७२ ॥
निवेदयत भोः ! कस्य जाताः क्व कोपवर्तने ? ।
रोचन्ते वनिता यावदित्युक्ते कोऽपि नाऽभ्यधात् ॥ १७३ ॥
माधवस्तावदाचष्ट स्मयमानमुखाम्बुजः ।
संसदन्तःस्थितः सत्यं रोचते मम केरली ॥ १७४ ॥
अहो ! केरलदेशीयस्त्रीगुणौघेन पूरिते ।
हृदये नाऽवकाशोऽस्ति परासां योषितां मम ॥ १७५ ॥
मनोभवारिणा दग्धो दृशा मानसनन्दनः ।
मन्ये केरलदेशीयस्त्रीभिरुज्जीवितो दृशा ॥ १७६ ॥
अपेक्षन्ते युवानो ये कामकेलिकुतूहलम् ।
स्त्रियं केरलदेशीयां सेवन्तां ते सुखैषिणः ॥ १७७ ॥
इदं तन्मुखतः श्रुत्वा कुमारश्चन्द्रशेखरः ।
तत्पार्श्वेऽवस्थितश्चित्ते क्षणमेवं व्यकल्पयत् ॥ १७८ ॥
किमेष मे प्रियायोगमाससाद कथञ्चन ? ।
स्त्रियं केरलदेशीयां यत् प्रशंसति सादरम् ॥ १७९ ॥
पुरेऽत्र काऽपि नान्याऽस्ति केरली मत्प्रियामृते ।
तदेनमासिना दुष्टं शीर्षच्छेद्यं करोमि किम् ? ॥ १८० ॥
अन्यदा वा हनिष्यामीत्येवं संचिन्त्य चेतसि ।
राजसूः स समुत्तस्थौ पृष्ठतोऽप्यस्य माधवः ॥ १८१ ॥

तदा माधवमभ्येत्य तत्प्रियाकिङ्करीति तम् ।
अन्वयुङ्क्त महाभाग ! मत्स्वामी विद्यतेऽत्र किम् ? ॥ १८२ ॥
प्रागासीदधुनाऽत्राऽस्ति नास्ति वेति न वेद्म्यहम् ।
इत्युक्ते तेन सा सौधं व्यावृत्यैव समागमत् ॥ १८३ ॥
कुमारोऽपि वदन्तं तं प्रेक्ष्य स्वप्रेष्यया समम् ।
दूरस्थः प्राग्विकल्पं तं सत्यमेवाऽभ्यमन्यत ॥ १८४ ॥
न्यहन् निशातया छुर्य्या धावित्वा सोऽपि माधवम् ।
विवेकविकलाः प्रायः कर्म कुर्वन्ति किं न वा ? ॥ १८५ ॥
तेन घातेन दूनः स विलुलोठ विचेतनः ।
तादृग् वीरस्य घातो हि किं दुःखं विदधातु न ? ॥ १८६ ॥
पित्रा प्रक्षिप्य पल्यङ्के नीतः स व्रणशोधनैः ।
सज्जीचक्रे क्रमादेवं स्त्रीकथाऽनर्थकारणम् ॥ १८७ ॥
स्त्रीकथामवबुद्ध्यैवमनर्थस्य निबन्धनम् ।
कुरुचन्द्र ! महीपाल ! कृपणोपास्तिवत् त्यजेः ॥ १८८ ॥
अधिगोष्ठि निविष्टोऽसावन्यदा भोज्यसंकथाम् ।
कुर्वन्नित्यवदद् ह्योऽभूद् भोज्यं तस्य गृहे वरम् ॥ १८९ ॥
तटस्थ एव यत् तत्र भोज्याद्यं तदचीकरम् ।
किञ्च यो मोदकस्तत्र तन्मूल्यं भुवनेऽपि न ॥ १९० ॥
इतश्च पौरमाणिक्यश्रेष्ठिनाऽत्र महामहे ।
अभूद् भुक्तं तदन्नादि तेन चैतस्य यातना ॥ १९१ ॥
ततः पीडाऽपनोदाय समाहूतैर्भिषग्वरैः ।
स ऊचे पाचितं येन तद्भोज्यं स च पृच्छ्यताम् ॥ १९२ ॥
चिकित्स्यते यथा तस्य निदानस्याऽनुमानतः ।
इत्याकर्ण्य वचस्तेषामिभ्यः स्वान् प्रैषयद् नरान् ॥ १९३ ॥
तज्ज्ञातुं तेऽपि गच्छन्तः प्रवृत्तिं तां च माधवम् ।
कुर्वन्तमाह्वयत् सोऽपि तत्राऽऽगन्तुं न वाञ्छति ॥ १९४ ॥
यष्टिभिस्ताडयित्वा तैः स तत्पार्श्वमनीयत ।
तेनोचे रसवत्यां रे ! तस्यां किं क्षेपितं त्वया ? ॥ १९५ ॥
तस्या भोजनमात्रेण ममाङ्गे वेदनाऽस्ति यत् ।

प्राञ्जलीभूय स प्रोचेऽपाचयं न च किञ्चन ॥ १९६ ॥
अभाषिष्ट ततः श्रेष्ठी रुष्टस्तं प्रति दुष्ट ! रे ! ।
निह्नुवानोऽभ्युपेतं स्वं दोषकारी त्वमेव मे ॥ १९७ ॥
तद्भृत्यैः पीड्यमानोऽसौ श्रेष्ठिनोऽस्य निदेशतः ।
कथञ्चिद् बीजिनाऽमोचि लगित्वा पाणिपादयोः ॥ १९८ ॥
एवं भक्तकथाऽप्येषा प्रकृत्याऽनर्थकारणम् ।
विवेकिभिस्ततो वर्ज्या मलिनस्त्रीवदन्वहम् ॥ १९९ ॥
अन्येद्युः सोऽपि वाचालश्चालयन् रसनां निजाम् ।
प्रारेभे माधवो देशकथामेव जनान्तिके ॥ २०० ॥
देशेषु मगधाभिख्यो देशो वर्णनमर्हति ।
एक एव ग्रहाधीशो ग्रहेष्विव मनीषिणाम् ॥ २०१ ॥
महिष्य इव भूपानां पुण्डरीकाणि बिभ्रति ।
यत्र वाप्यः प्रभूतानि समर्था जीवनांहृतौ ॥ २०२ ॥

अस्मिन् सरांसि कमलोपचितानि कामं
भूमीभुजामिव महाभवनानि सन्ति ।
तृष्णां निहन्तुमुदयः स बभूव येषां
क्षीराणि येषु बहवोऽपि जनाः पिबन्ति ॥ २०३ ॥
यत्र प्रपाः प्रतिपथं सुकृतोपलम्भ-
संरम्भसम्भृतजनैर्विहिता विभान्ति ।
यासां रसेन सुहिताः परितापजात-
मन्तःस्थितं निधनितां पथिका नयन्ति ॥ २०४ ॥
यत्राऽऽरामा विविधविटपिश्रेणिभिः सर्वकालं
विभ्राजन्ते विविधविटपिश्रेणयश्चापि पुष्पैः ।
पुष्पाण्यद्धा भ्रमरनिकरैरापतद्भिः समन्ताद्
झङ्कारौघैर्भ्रमरनिकरः श्रोत्रपेयाभिरामैः ॥ २०५ ॥
नानाप्रकारकलमैरुपजायमानै-
र्दूर्वावदुप्तिविरहेऽपि महेशयोग्यैः ।
दुर्भिक्षनाम जनताभिरधीयते न
दुःस्वप्नवत् प्रमदपीवरचारुचित्तैः ॥२०६॥ (षड्भिः कुलकम्)

नृपो भुङ्क्ते तीर्थद्रविणमपि तद्यात्रिकजनैः
प्रदत्तं स्वश्रद्धाभरविवशचित्तैः सुकृतिभिः ।
स्वयं यस्मिँल्लोकैर्द्वयभयमजानन्नविरतं
सुराष्ट्राख्यो राष्ट्रः स पुनरिह निन्द्यो मतिमताम् ॥२०७॥

श्रीमद्युगादिजिननेमिजिनाधिनाथ-
श्रीसोमनाथमुखतीर्थपरम्परायाम् ।
सत्यां जनाः सुकृतमादधते न यत्र
यात्रागतानपि तुदन्ति च चौर्यवृत्त्या ॥ २०८ ॥

( युग्मम् )

एतद् माधवभाषितं श्रुतिगतं कृत्वा सुराष्ट्रामहा-
राष्ट्रीयैर्निजदेशनिन्दनतया कोपप्रकम्पाधरैः ।
राज्ञो द्वाःस्थपदं दधद्भिरभितो यष्ट्यादिभिस्ताडितः
पित्राऽमोचि कथञ्चिदेव रुधिराकृष्ट्या स सज्जीकृतः ॥२०९॥

एवं देशकथाऽप्यनर्थजननी संत्यज्यतां दूरतः
क्षोणीजम्भरिपो ! श्मशानकलसीवाऽऽतङ्कसंपादिनी ।
सर्वस्याऽपि सुखाय संभवति यत् श्लाघा प्रसन्नेन्दुवद्
दुःखस्याऽभ्युदयं तनोति विहिता निन्दा च हास्यादपि॥२१०॥

क्ष्मापं व्यज्ञपयत् कदाचन सुधीश्रीसिंहदत्ताभिधः
सामन्तस्तव देव ! देशमपभीर्विट् चण्डसेनो वली ।
हा ! विश्रंसयति प्रचण्डबलयुग् दुर्गप्रविष्टः स चा-
ऽस्माकं दुर्ग्रह इत्यवेत्य भवता युक्तं समाचर्यताम् ॥ २११ ॥

तच्छ्रुत्वा स च देशसीमनि ययौ सर्वाभिसारेण राट्
सोऽप्यभ्यागमदग्रणीर्बलवतां द्राक् चण्डसेनः सरुट् ।
लग्नं संख्यमसंख्यनम्रनुतयोरप्येककालं तयो-
र्भग्ने तेन बले नृपस्य सबलो राज्ञा विजिग्येऽथ सः ॥२१२॥

नष्टो नष्टप्रतिष्ठः कतिपयसुभटैः सार्धमेष प्रविष्टो
दुर्गे दुर्गे विशिष्टः शकुनिरिव तरोः श्येनभीत्या कुलाये ।
दुर्गं रुद्ध्वा समन्तात् प्रबलबलतया चण्डसेनं च बद्ध्वा
व्यावृत्तो वीक्ष्य शून्यं स्वपुरमथ नरं कञ्चनाऽपृच्छदीशः ॥२१३॥

स प्रोचे नृपते ! कुतोऽपि समभूद् भीकिंवदन्तीदृशी
यच्चण्डः स च चण्डसेनचरटः क्ष्मापं पराजेष्यते ।
तल्लोकाः ! प्रपलायनं कुरुत भोः ! आकर्ण्य चैतज्जनाः
सर्वे नेशुरतो बभूव नगरं शून्यं समग्रं तव ॥ २१४ ॥
मूलोत्पत्तिं प्रवृत्तेरपि विरचयता माधवोऽज्ञायि राज्ञा
जिह्वाच्छेदेन मृत्युं स झगिति गमितो दुर्गतिं प्राप पापः ।
इत्थं राज्ञः कथेयं कथमपि विहिता दुर्जनस्येव मैत्री
कूलच्छायेव भव्या भवति न नृपते ! त्यज्यतां तत् प्रयत्नात् २१
ईदृक्पञ्चप्रमादप्रकृतिपरिहृतेर्धर्ममेवाऽऽदधानः
साधुश्चित्तैकशुद्ध्या दशविधमतुलं सत्तितिक्षादिभेदात् ।
श्राद्धः सम्यक्त्वमूलं द्व्यधिकदशविधाऽणुव्रतादिप्रभेदं
सिद्धिं प्राप्नोति राजन्नविकलसकलप्राप्तकल्याणमालः ॥२१६॥
आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुः स्याद्वादवादोद्धतः ।
तच्छिष्येण कृतेऽत्र सप्तदशकः श्रीशान्तिवृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽगमत् प्रोज्ज्वलः ॥२१७॥

## इति श्रीशान्तिनाथचरिते सप्तदशः सर्गः समाप्तः ॥



अर्हम्

## अथ अष्टादशः सर्गः ।



जानन्ति यं ध्यानसमाधिमास्थिताः पराहृतान्तःकरणप्रवृत्तयः ।
विध्वस्तदुष्कर्मचया यतीश्वराः स शान्तिनाथस्तनुतां शुभानि वः ॥१॥
श्रुत्वा त्रिलोकीगुरुदेशनां मुदाऽऽप्लुतः सुधाकुण्ड इवाऽखिलैः समम् ।
नत्वाऽथ नाथं कुरुचन्द्रभूपतिर्व्यजिज्ञपच्छान्तिजिनं शुभाकरम् ॥२॥
प्राज्यं प्रभो ! राज्यमवापमीदृशं विशुद्धसंवेदन ! केन कर्मणा ? ।
पञ्चाऽतिरिक्तं न समेत्युपायने कदापि वस्त्वश्वफलांशुकादिकम् ॥ ३ ।
तद्दित्सुरेवेष्टजनाय सर्वदा स्वयं न भुञ्जे स्पृहयालुरप्यहम् ।

त्वस्मै प्रयच्छामि न चाऽपि जातुचिद् बुभुत्सुरत्राऽस्मि जिनेन्द्र ! कारणम् ४
शान्तिप्रभुः प्रत्यवदद् महाद्भुतं सुपात्रदानप्रतिपत्तितः स्वयम् ।
यत् पञ्चभिः पञ्चजनैः समर्जितं निशम्यतां तत् सुकृतं धरापते !॥५॥
अत्राऽस्ति याम्ये भरतेऽमरावतीपुरीसमं कोशलदेशभूषणम् ।
क्षीराब्धिपुत्र्याः परमं निकेतनं महापुरं श्रीपुरसंज्ञया श्रुतम् ॥ ६ ॥
चत्वारि मित्राणि वणिक्कुलोद्भवान्यवात्सुरस्मिन् पुटभेदनोत्तमे ।
साम्यातिगप्रीतिपदं परस्परं क्रमेण तेषामभिधा इमाः स्मृताः ॥ ७ ॥
आद्योऽनवद्यः सुधनो महाधनः पतिर्द्वितीयो धनपूर्वकः स्मृतः ।
ततस्तृतीयो धनदो महाशयो यथार्थनामा चरमो धनेश्वरः ॥ ८ ॥
सिध्यन्ति पुंसां न मनोमनोरथाः कदाचन द्रव्यमपास्य पुष्कलम् ।
संसारसर्वस्वसुखाभिलाषिणामिति स्वचित्ते परिभाव्यते मिथः ॥ ९ ॥
द्रोणाभिधानं पुरुषं महाबलं समुद्यतं शम्बलभारवाहने ।
कृत्वा वसूपार्जनहेतवेऽचलन् समे मणिद्वीपदिदृक्षयाऽन्यदा ॥ १० ॥
( युग्मम् )
उत्तेरुरेकां गहनां महाटवीं दिनैरनेकैः पथि तेऽधिसंकथाः ।
प्रक्षीणकल्यं च बभूव शम्बलं प्रभूतमानीतमपि व्यये सति ॥ ११ ॥
कञ्चित् तदा ते प्रतिमासमाश्रितं व्यलोकयँल्लोकनतं तपोधनम् ।
पञ्चेन्द्रियाणामनुशासनं रहो विधातुमन्योऽन्यविरोधिनां स्थितम्॥१२॥
अस्मै मुनीन्द्राय शमैकमूर्तये प्रदाय किञ्चित् सफलं विदध्महे ।
जन्म स्वकं चेति विचिन्त्य ते क्षणं हितं जगुर्द्रोणमिदं सचेतसः ॥१३॥
द्रोण ! त्वमस्मै परमर्षयेऽधुनाऽवशिष्टपाथेयविभागतो मनाक् ।
देहीति तैर्व्याहृत एष तोषवानमंस्त तद्वाक्यमुदारमानसः ॥ १४ ॥
तेभ्यश्चतुर्भ्योऽप्यधिकां स भावनां वहन् मुनिं तं प्रतिलाभ्य तत्क्षणम् ।
कर्माऽर्जयामास भवान्तरांहसां क्षये महाभोगफलं निरर्गलम् ॥ १५ ॥
रत्नान्तरीपं क्रमतोऽधिगम्य ते सतां निषेव्यं व्यवहारमाश्रयन् ।
तत्राऽर्जयित्वा द्रविणं मनीषितं पुनर्निजं ते नगरं समागमन् ॥ १६ ॥
पञ्चाऽप्यनन्दन् सुकृतेन तेन ते सुपात्रदानप्रतिपत्तिजन्मना ।
किं केवलज्ञानमवाप्तमादितो महोदयाऽऽनन्दपदं ददाति न ? ॥ १७ ॥
मायाविनौ किञ्चिदुभौ वणिक्सुतौ द्वितीयतुर्यावपरौ त्वमायिनौ ।

स द्रोणकस्तेषु विशुद्धभावनाविभावितात्मा परमास्ति शस्तधीः ? ॥१८॥
द्रोणो विपद्य प्रथमं स तेष्वभूर्नृपाङ्गजस्त्वं नृप ! हास्तिनापुरे ।
त्रैलोक्यलोकाशयविस्मयावहं सुपात्रदानस्य विजृम्भितं न किम् ?॥१९॥
गर्भावतीर्णे त्वयि चाऽम्बया मुखे विशन् विधुः स्वप्न उदैक्षि यत्परम् ।
तेनैव वप्ता तव नाम निर्ममे महे प्रवृद्धे कुरुचन्द्र इत्यपि ॥ २० ॥
संप्राप्य मृत्युं सुधनो वणिक्सुतः क्रमेण काम्पिल्यपुरे पुरोत्तमे ।
जज्ञे समृद्ध्याढ्यवणिक्तनूभवो वसन्तदेवोऽभिधयाऽत्र विश्रुतः॥२१॥
संजातमृत्युर्धनदो निजायुषः क्षये क्रमेणाऽजनि कृत्तिकापुरे ।
श्रीकामपालः प्रतिपन्नपालनैकतानचित्तः प्रथितोऽभिधानतः ॥ २२ ॥
मायावशात् तावपि वाणिजौ मृतौ पतीशसंज्ञौ धनपूर्वकौ क्रमात् ।
पुत्र्यावभूतां वणिजोर्यथाक्रमं मदोद्धतैका मदिराऽथ केशरा ॥ २३ ॥
आद्याऽभवच्छङ्खपुरे महोत्तमे परा जयन्त्यां पुरि ते क्रमेण च ।
चत्वार एतेऽपि विशीर्णशैशवाः समासदन् यौवनमङ्गदीपनम् ॥२४॥
आपृच्छय वप्तारमसौ परेद्यविर्वसन्तदेवो विभवाऽर्जनेच्छया ।
यातो जयन्त्यां पुरि तत्र चार्जयद् धनानि कुर्वन् व्यवहारमादरात्॥२५॥
सोऽन्येद्युरुद्यानमियाय नन्दनं जयत् स्वलक्ष्म्या रतिनन्दनाह्वयम् ।
चन्द्रोत्सवं द्रष्टुमदृष्टसाध्वसो यदृच्छयाऽतुच्छतयाऽष्टमीदिने ॥ २६ ॥
तत्राऽऽगतां वीक्ष्य स चापि केशरां सरागचेताः समजायत क्षणात् ।
सा तं च सातं ददतं, सुचक्षुषां भवान्तरोत्था प्रियता हि नान्यथा॥२७॥
पार्श्वस्थितं स्वस्य स वाणिजाङ्गजं प्रियङ्करं नाम मनःप्रियङ्करम् ।
इत्यन्वयुङ्क्षार्य ! मनोरमाकृतिस्त्वियं किमाख्या बत ! कस्य वा सुता?॥२८॥
सोऽप्यब्रवीद् नामत एव केशरां जयन्तिदेवस्य सुवासिनीमिमाम् ।
आनन्दिनीं देव ! निबोध नन्दनीं महेभ्यचूडामणिपञ्चनन्दिनः ॥२९॥
एतद् निशम्याऽपि वसन्तदेवको विचिन्तयामास निजेन चेतसा ।
लभ्या कथङ्कारमियं सुराङ्गनासमानसौन्दर्यगुणा मयाऽर्थिना ॥ ३० ॥
अभ्यर्थ्यमानाऽपि मया न दास्यते धनेश्वरेणाऽपि विदेशजन्मना ।
एषा पितृभ्यां न च बान्धवेन यत् किमीदृशी स्यात् प्रियता लघीयसी?३१
तत्सोदरेणैव जयन्तिना समं वितन्वतः प्रेम परं मम ध्रुवम् ।
सा सानुरागा भविनी यतो मतं मनः प्रकाशान्तरनिर्व्यपेक्षकम् ॥३२

एतद् विमृश्य स्वहृदा वसन्तको जयन्तिदेवेन सह प्रचक्रमे ।
सौहार्दमाधातुममुष्य मन्दिरप्रसङ्गगत्यागतिकर्मनिर्मितैः ॥ ३३ ॥
सौहार्दकल्पद्रुम एव सद्रसैस्तयोर्नियत्या नियतं प्रवर्धितः ।
भावी वसन्ते फलवान् शनैः शनैर्यदेष पूर्वं सुमितोऽथ पत्रितः ॥३४॥
सन्तं वसन्तं सुजनं निमन्त्र्य तं जयन्तिदेवः स्वगृहेऽन्यदाऽनयत् ।
औचित्यनैचित्यभृतो महाशयाः कुत्राऽपि किं नाम परिस्खलन्त्यमी?॥३५॥
तत्राऽर्चयन्तीं कुसुमैः सुमायुधं तदेकतानां समवेक्ष्य केशराम् ।
तोषं वसन्तो बिभराम्बभूव यन् प्रियाऽवलोकादपरं न संमदे ॥ ३६ ॥
गृह्णन् स चाऽऽलोकि तया सरागया जयन्तिदेवस्य करात् सुमस्रजम् ।
कल्याणरूपं शकुनं तदेतदित्यभून् तदा संमद एतयोर्द्वयोः ॥ ३७ ॥
धात्रीतनूजाऽभिधया प्रियङ्करा समीपगा भावमबुद्ध सा तयोः ।
वर्ण्याः सतां किं न भवन्ति संततं परेङ्गितज्ञानफला हि बुद्धयः ?॥३८॥
श्रीमद्वसन्तं स जयन्तिरादरादहार्य्यभक्त्याऽभ्यवहार्य तं स्वयम् ।
कर्पूरताम्बूलविलेपनांशुकैरनेकधा सत्कुरुते स्म विस्मयः ॥ ३९ ॥
माधुर्यसंवादिवचा वचस्विनी प्रियङ्कराऽप्यभ्यधिताऽथ तां प्रति ।
आलि ! त्वमप्यस्य यथोचितं कुरु जयन्तिवन् ते प्रियताऽत्र युज्यते॥४०॥
औत्सुक्यमन्दाक्षमदप्रमादभीप्रसञ्जनाऽऽव्याकुलिताशयाऽपि सा ।
प्रत्याह तां प्रत्ययितां प्रियङ्करां सखि ! त्वमेवाऽस्य समाचरोचितम् ॥४१॥
स्वप्राङ्गणासन्नसमुद्गतानतप्रियङ्गुशालाद् नवमञ्जरीस्ततः ।
उच्चित्य कक्कोलफलान्यथ प्रियं प्रियङ्करैनं निजगाद सादरम् ॥ ४२ ॥
एषा ममाऽऽलिः कुसुमानि पाणिना समुत् समुच्चित्य फलानि च स्वयम् ।
त्वं मे प्रियोऽसीति समाकुला ह्रिया समर्पयत्येव मया विभिन्नया॥४३॥
पुष्पाणि कक्कोलफलानि चाऽऽददे प्रियङ्करायाः करवारिजन्मनः ।
एतत्प्रियाप्रेषितमित्ययं विदन् वहन् प्रमोदं वचसोऽप्यगोचरम्॥ ४४ ॥
दत्त्वा स तस्यै प्रमनाः स्वमुद्रिकां जगौ त्वया साध्विदमाहितं खलु ।
ब्रूयाः पुनस्तामिति सर्वदैव मे प्रियाऽनुरूपं रचयेर्मनस्विनि ! ॥ ४५ ॥
गत्वा वरालापमसौ प्रियङ्करा तदैव तस्यै मुदिता न्यवेदयत् ।
आकर्ण्य तं साऽपि सकर्णवर्णिता मुदं मयूरीव घनध्वनिं दधौ ॥ ४६ ॥
स्वप्ने तृतीयप्रहरे विवाहितं निशः स्वमालोकत केशराऽन्यदा ।

कान्तेन तेनाऽऽशयमध्यवर्तिना वसन्तदेवेन समं महौजसा॥ ४७ ॥
स्वप्नान्तरुद्वाहविधिं व्यलोकयद् वसन्तदेवोऽपि तया सहात्मनः।
श्रीपञ्चनन्दीभ्यभुवा गुणाढ्यया तथाऽपि हर्षः समभूत्तयोर्महान्॥४८॥
स्वप्नं प्रगे लब्धनिधानयुग्मवत् प्रियङ्करायाः पुरतो बभाण सा।
तच्चित्तचैत्यं प्रति याऽधिदेवता तदग्रतो गोप्यमियं न चातुरी॥ ४९ ॥
संपत्स्यते सर्वमिदं महाशय ! त्वया न कार्य्यः पुनरत्र संशयः।
एतां गिरं प्राह हितः पुरोहितस्तदा तदासन्नचरोऽभि कञ्चन॥ ५० ।
स्वप्नेन चाऽनेन सखि ! श्रुतीरया तथोपश्रुत्याऽप्यनया रयादपि।
भावी वसन्तस्तव जीवितेशितेत्युवाच वाचं प्रति तां प्रियङ्करा ॥५१॥
स्वप्नं वसन्ताय ततः प्रियङ्करा प्रमोदसंपूर्णमनास्तमालपत्[1]।
स्वस्वप्नसाम्येन वसन्तदेवकः स सत्यमेवेदममन्यत स्वयम्॥ ५२ ॥
प्रोवाच भूयोऽपि ततः प्रियङ्करा प्रियंवदा ते स्वमकल्पयत् कनी।
संजातमेवेदमवैह्यसंशयं स्वकीयपाणिग्रहणप्रयोजनम्॥ ५३ ॥
ऊचे वसन्तोऽपि शृणु प्रियङ्करे ! तया समं दर्शनमादधे विधिः।
संयोगमापादयिता स एव मे, कृतं न नीचोऽपि यतो विलुम्पति॥५४॥
विश्वासरूपां कलयन्निमामयं जयन्तिजामेरपरां शरीरिणीम्।
स्वाकूतमावेद्य विधाय सत्क्रियां विसर्जयामास सदा प्रियङ्कराम् ॥५५
श्रीकेशरायाः पुरतः प्रियङ्करा यथा यथाऽऽगत्य निवेदयत्यसौ।
तस्य प्रवृत्तिं प्रणयानुबन्धिनीं, ममज्ज सा प्रेमरसाम्बुधौ तथा॥ ५६ ॥
अन्योऽन्यसंदेशनदेशनोत्कयोः प्रियङ्कराभ्यागमकाङ्क्षिणोर्मिथः।
संवर्धमानानुपमानुरागयोः कियाननेहा युगवत् तयोर्ययौ ॥ ५७ ॥
श्रीपञ्चनन्दीभ्यनिकेतनेऽन्यदा वसन्तदेवः स्वगृहस्थितोऽशृणोत्।
तूर्यस्वनं नागरनायिकाजनं समाह्वयन्तं रभसादिवोत्सवे ॥ ५८ ॥
श्रीकान्यकुब्जस्थसुदत्तसूनवे वरादिदत्ताय दिदेश केशराम्।
यत्पञ्चनन्दी तत एव वाद्यते सुतूर्यमित्येत्य तदाऽऽर्ण कोऽपि ना॥५९॥
तस्याननादित्यवगम्य मूर्च्छितोऽपतद् महावातहतद्रुवच्च सः।
प्रस्थापिता केशरया प्रियङ्करा तदा तमाश्वासयदेत्य भाषितैः॥ ६० ॥
त्वां केशरैवं वदतीन्दुमण्डलानना कृथा मा हृदि खेदमात्मनः।

---

१ अकथयत्।

प्रक्रम्यमाणं जनकेन मामकं निशम्य पाणिग्रहणं प्रिय ! प्रभो !॥६१॥
को नाम मच्चित्तविबोधदुर्विधौ विचेष्टमानौ पितरौ निवारयेत् ? ।
संकल्पवृत्त्या मयका पतीकृतस्त्वमेव नाथाऽपरथा न बुध्यताम् ॥६२॥
चेत् पद्मबन्धुं विजहाति पद्मिनी विभावरी चन्द्रमसं कदाचन ।
गौरी महेशं कमला त्रिविक्रमं तदाऽहमन्यं प्रियमाद्रिये प्रिय ! ॥६३॥
इत्यार्यपुत्रेण सदा हृदन्तरे निवेशनीयं हृदयालुना त्वया ।
विज्ञास्यते मत्प्रिय एव वाऽऽयतौ मदाश्रवस्यापि न सत्यतां कथम् ?॥६४॥
दैवं कदाचिद् भवता समं यदि प्रमन्युरुद्वाहयते न मां प्रिय ! ।
साचिव्यमासाद्य तदाऽऽशुशुक्षणेः क्षणाद् भवन्तं दयितीकरोम्यहम् ॥६५॥
एतत् समाकर्ण्य विवर्ण्यसद्गुणो वसन्तदेवोऽपि जगाद तां प्रति ।
तत्स्वप्नसंदर्शनमेव जातुचिद् निरर्थकं नैव भवेत् सदुक्तिवत् ॥ ६६ ॥
एषा प्रतिज्ञा मम च प्रियङ्करे ! निधीयतां कर्णपथे त्वयाऽधुना ।
यत् केशरामेव यथा कथञ्चनोद्वहेऽन्यथा यामि यमस्य मन्दिरम् ॥६७॥
आकर्ण्य तद्वाचमितीष्टशासना प्रियङ्कराऽगादुपकेशरं मुदा ।
तद्वाक्यपीयूषभरेण केशरामथापि संसिच्य चकार निर्वृताम् ॥ ६८ ॥
संयोगसंबन्धविधित्सतोस्तयोरुपाय एवानुदिते क्वचित् परे ।
प्रातः समागम्यत जन्ययात्रया जयन्तिजामिं परिणेतुमन्यदा ॥६९॥
श्रुत्वा वसन्तोऽपि तदात्मनो गृहाद् निरीय गत्वा क्वचनाऽपि तत्क्षणात्।
उद्यान एको विरहोपतापितस्ततान चिन्तामिति चेतसाऽऽकुलः ॥७०॥
जाते विवाहेऽननुरूप ईदृशे विपत्स्यते निश्चितमेव केशरा ।
सीमन्तिनीनां मनसोऽसमीहितं मनागपि प्राणवियोजनं यतः ॥७१॥
तां प्रेमकाष्ठां प्रतिपद्य तादृशीं विपद्यते यावदसौ न केशरा ।
विपद्य तां तत्प्रथमं प्रदर्शये न मादृशाः पृष्ठचराः स्युरीदृशाः ॥७२॥
एवं स्वचित्तेन विचिन्त्य चेतनाधनो निजप्रावरणेन शोकभाक् ।
सोऽशोकशालस्य समुच्चशाखिकातले गले पाशमसूत्रयत् स्वयम् ॥७३॥
बद्धोद्यमं वीक्ष्य तमाशु मृत्यवे नृकुञ्जरः कश्चिदुपेत्य कुञ्जतः ।
आचष्ट मा साहसमातथा वृथा भवादृशामीदृशमाविगर्हितम् ॥ ७४ ॥
आदाय तीक्ष्णक्षुरिकां स्वपाणिना विदार्य तस्याशु स पाशमूच्चिवान् ।
भद्राकृते ! युक्तमिदं न भद्र ! ते न पातकं ह्यात्मविघाततः परम् ॥७५॥

ऊचे वसन्तोऽपि तमीदृशीं गिरं ममाऽऽकृतेः संमदमादधासि किम् ?।
पचेलिमं प्रेक्ष्य तदिन्द्रवारुणं को नाम माधुर्यमृते प्रमोदते ? ।। ७६ ।।
कान्तावियोगापगमे निबन्धनं वितन्वतो मृत्युमसंशयं मम ।
तत् कण्ठपाशस्य विसूत्रणात् त्वया किमन्तरायः प्रसभं विनिर्ममे ?।।७७।।
का नाम कान्ता विरहः कथं तयेति पृष्ट एतेन वसन्त एव तत् ? ।
आवेद्य तस्मै निखिलं यथास्थितं मनागसातं गमयाम्बभूव सः ।।७८।।
तद् दुःखमीदृग् विनिशम्य रम्यधीः पुनर्बभाषे पुरुषोऽप्यनिष्ठुरम् ।
त्वं दुःखितो यद्यपि वर्तसेतमां तथाऽपि तेऽर्हं न च जीवितोज्झनम् ७९
इष्टार्थसंसाधनकर्मकर्मठा न सन्त्युपायाः किमु भद्र ! भूरिशः ? ।
व्यापद्यसे तत् किमहो ! निरर्थकं विपत्तिरेवं भाविता हि दुर्गतौ ।।८०।।
एतादृशीं प्राप्य दशां कथञ्चन स्वजीवितं भद्र ! मयाऽपि धारितम् ।
स्वाभीष्टलाभाय कदाऽपि जीवता नरेण कल्याणमवाप्यते यतः ।।८१।।
श्रीकामपालोऽभिधयाऽपि कृत्तिकापुरस्थलोकस्तुतवाणिजाग्रणीः ।
श्रीकामपालः स्ववपुष्टरश्रिया न कामपालस्तरसाऽस्मि केवलम् ।।८२।।
अर्थस्य सर्वोऽपि तनोति गौरवं न मानवस्येति विचिन्त्य चेतसि ।
अर्थार्जनायै विषयान्तरं युवा परेद्युरागारत एव निर्ययौ ।। ८३ ।।
देशान्तरं देशत एव पर्यटन् सरोवराद् हंस इवाऽपरं सरः ।
शङ्खोज्ज्वलः शङ्खपुरं पुरं गतः परिस्फुरन्मानसवासवासितः ।। ८४ ।।
यक्षस्तदुद्यानविभूषणं परं स शङ्खपालोऽस्त्यभिधानतः श्रुतः ।
पुंसां यदर्चाऽपि विनिर्मिता हृदा करोति कल्पद्रुमवत् समीहितम्।।८५।।
अव्राजिषं तस्य महोत्सवेऽन्यदा समं समग्रैः पुरवासिभिर्जनैः ।
एकां कनीं तत्र सखे ! व्यलोकयं रसालशालान्तरवर्तिनीमहम् ।।८६।।
शूलीति नाम्ना दयितस्य धूर्जटेः प्रकोपभावेन पृथग् व्यवस्थिताम् ।
गौरीमिवैतामवलोक्य मानसं मनोभुवा पञ्चशरैर्ममाऽऽहतम् ।।८७।।
श्रुत्वा सखीभ्यो मम नाम सा श्रुतं प्रदर्शयन्ती प्रियतामिवान्विताम् ।
कर्पूरपूरेण समं ससंमदा सखीकरेणाऽर्पयति स्म वीटकम् ।। ८८ ।।
तच्चाऽऽददानः स्वकरेण मानसे विचिन्तयामास मुदाऽहमीदृशम् ।
किञ्चिद् ममाऽपि प्रतिदातुमौचिती प्रतीयते मे कृपणत्वमन्यथा ।।८९।।
आलानमुन्मूल्य तदा क्षरन्मदः समागमत् कश्चन तत्र वारणः ।

उच्छृङ्खलस्त्रोटितलोहशृङ्खलः कृतान्तयानभ्रममादिशन्निव ॥ ९० ॥
उत्सृष्टमाधोरणधोरणीसहाप्रतिक्रियाभिर्नितमां मतङ्गजम् ।
तत्राम्रकुञ्जेऽधिगतं निरीक्ष्य स परिच्छदोऽस्याः सकलः पलायितः ॥९१॥
स्तम्बेरमे तत्र समापतत्यपि स्थितिं वितेने भयविह्वलाऽपि सा ।
आनन्दसंपादनबद्धविभ्रमा सुधांशुलेखेव विधुन्तुदागमे ॥ ९२ ॥
हस्तेन हस्ती नलिनीमिवाशु तां कनीं समाकर्षति यावदस्तभीः ।
तावद् निजघ्ने मयका स पेचके प्रपञ्चतः स्थूलतमेन दारुणा ॥ ९३ ॥
रोषाञ्चितः सोऽपि विहाय योषितं बलाभिमानाद् वलते स्म मां प्रति ।
तं वञ्चयित्वाऽहमपीभशिक्षया कनीं समादाय ययावितोऽन्यतः ॥९४॥
त्रैलोक्यसुभ्रूजनकामनीयकं रुचा जयन्तीं विजने मुमोच ताम् ।
एकान्त एवाऽऽसितुमक्षमं ततो मया समं तद्धृदयं समागमत् ॥९५॥
स्तम्बेरमे जग्मुषि तत्परिच्छदः समागतस्तत्र पुनः समन्ततः ।
बुद्ध्वा सुबुद्धिर्मदिराऽसुदायिनं मुहुर्मुहुर्मां प्रशशंस संमदात् ॥ ९६ ॥
निन्ये सखीभिः पुनरेव तत्र सा रसालकुञ्जे सरसालसायना ।
भूयः समायासिषुराशुगेरितास्तदैव तत्र द्विपशीकराः परे ॥ ९७ ॥
तस्या वयस्यास्तदनन्तरं ययुर्दिशो दिशं साध्वससंकुलाशयाः ।
कुत्राऽपि सा स्त्रैणमतल्लिका गतेत्यहं समन्तात् सुतमां व्यलोकयम् ॥९८॥
नाऽऽलोकि कर्पूरशलाकिकेव सा पुनर्मया तापविभेदिनी दृशोः ।
जीवाम्यहं मित्र! तथाऽपि निष्ठुरः कदाशया विघ्नितजीवनिर्गमः ॥९९॥
उन्मत्तरूपो मदिराऽभिधानतोऽप्यहं तदादि क्षितिमण्डले भ्रमन् ।
अत्रागमं सम्यगुपायवर्जितो, वयस्य! तत् त्वं धृतिमेव संश्रय ॥१००॥
किंचास्त्युपायोऽप्यनपाय एव ते सखे! प्रियासङ्गमसाधनेऽधुना ।
आस्वादिताऽशर्मभरोऽहमीदृशं हितं ब्रुवे त्वां न तु मा मृथा वृथा॥१०१॥
कल्ये विवाहो भवितेति सैकिका रतिप्रियं पूजयिताऽद्य सप्रियम् ।
कल्पोऽयमाकल्पमितीड्यहेतुना, न शस्यते कल्पविलोपकोऽत्र यत्॥१०२॥
तत्पूर्वमेवाद्य परैरवीक्षितौ प्रविश्य सन्ध्यासमये समाहितौ ।
कामालये कामितकल्पपादपे निलीय तिष्ठाव उदग्रविक्रमौ ॥ १०३ ॥
तत्रैव तस्याः कुसुमेषुमन्दिरे प्रवेशनिष्ठाक्षण एव वेगतः ।

१ पुच्छमूलं तु पेचकः ।

स्वीकृत्य वेषं तदगारमाश्रितस्तदिङ्गितैर्मोहयितास्मि तत्कुलम् ॥ १०४ ॥
तद्वेश्ममार्गे मयका समाश्रिते भवांस्ततस्तां परिगृह्य गृध्रवत् ।
मांसस्य पेशीमिव पत्तनान्तराऽयनं समासाद्य समीहितं क्रियात्॥१०५॥
ईदृक्सुधासारवचोभिरुक्षितः प्रयाततापः स तमब्रवीदथ ।
एवं मम स्वस्ति समस्ति किन्तु ते वितर्कयामि व्यसनोग्रसङ्कटम्॥१०६॥
अभ्यर्णचर्याऽवनिदेवभार्यया क्षुतं जरत्या विनिशम्य निर्मितम् ।
तं कामपालो न्यगदत् तदा मुदा न मेऽत्र मित्र ! व्यसनं मनागपि॥१०७॥
किञ्च त्वदर्थाऽऽहितिबद्धचेतसो ध्रुवं ममाप्यभ्युदयो भविष्यति ।
किं श्रूयते नैव यशः सुखं श्रुतौ विनिर्मिमाणस्य परप्रयोजनम् ?॥१०८॥
कश्चिज्जरद्ब्राह्मणकोविदस्तदा जगाविदं कस्यचनाऽपि संमुखम् ।
विघ्नैवमेवेति न संशयस्त्वया विधेय एवाऽत्र विधेय ईदृशे ॥ १०९ ॥
श्रुत्वा तदुक्तेः सदृशीमुपश्रुतिं वसन्तदेवः सुहृदाऽमुना समम् ।
ग्रन्थिं स्ववस्त्रे शकुनादिमं ततो निबध्य गेहं मुदितः समागमत्॥११०॥
वैकालिकाद्यं प्रविधाय संविधिं विकालवेलासमये ततो गतौ ।
मीनध्वजस्यायतने सकेतने स्मरस्य मूर्त्तेरनु तिष्ठतः स्म तौ ॥१११॥
माङ्गल्यतूर्यस्य निनादमुच्चकैर्वितत्य ताभ्यां श्रवणातिथेयताम् ।
तस्याः समायातमिलोर्वशीश्रियस्तदेकहृद्भ्यां निरचायि चेतसि ॥११२॥
मन्त्रं महादेवमनोभवोदितं स्वयं स्मरन्ती प्रिययोगकारणम् ।
द्वाराङ्गणं सा स्मरदेवसद्मनः समाससादाऽथ समीहितप्रदम् ॥११३॥
उच्चैर्विमानादथ देवतेव सा मनुष्यवाह्यादवतीर्य वर्यरुक् ।
आदत्त पुष्पादिचयं प्रियङ्कराकरादनङ्गं भगवन्तमर्चितुम् ॥ ११४ ॥
एकैव सा मन्मथदेवमन्दिरान्तरं विवेशाऽऽलिनिषिद्धबालिका ।
कल्पोऽयमित्युज्झितसंशया ददौ स्वपाणिना तस्य कपाटसम्पुटम्॥११५॥
आनीतनैवेद्यसुमादिसंचयैरनङ्गमुद्दिश्य महीतले कनी ।
प्रक्षिप्य सार्धं विरहाऽऽतुरा ततः कृताञ्जलिर्व्याहरति स्म चेदृशम् ११६
वृन्दारकाधीश्वरमान्यशासन ! प्रवृद्धसारासुरनाथसेवित ! ।
लक्ष्मीमनोऽम्भोजविकाशभास्कर ! प्रभो ! जय त्वं रतिजीवितेश्वर!॥११७॥
पौष्पैः शरैः पञ्चभिरेव विष्टपत्रयं त्वया निर्जितमीश ! हेलया ।
प्राकाम्यमेतद्भुवनत्रयातिग ! प्रकाममालोक्यत एव तावकम् ॥११८॥

ब्रह्मेशनारायणमुख्यनिर्जरा न शासनं लङ्घयितुं क्षमास्तव ।
अन्यः प्रतापस्तव को विवर्ण्यते विवर्ण्यमानाद्भुतवीर्यवैभव ! ?॥११९॥
वप्तुः स्वरूपं तनयौ विजानते यथार्थमित्यत्र न कोऽपि संशयः ।
स्वामिन् ! मनोभूर्मम मानसं विदन्ननिष्टभर्त्रा सह मां न योजय ॥१२०॥
कामं समेषां सफलं करोषि चेति ते प्रवादः प्रथितो जगत्त्रये ।
भर्ता त्वया नैव स मे प्रदीयते तदत्र भाग्यं मम किं विगीयते ?॥१२१॥
विश्राणितो जन्मनि नात्र मे पतिर्वसन्तदेवः स वसन्तमित्र ! चेत् ।
जन्मान्तरेऽपि प्रियमेनमेव मे रतीश ! देया मृगये न चापरम्॥१२२॥
इत्याद्युदित्वा किल तस्य तोरणे निबध्य पाशं लघु यावदाग्रहात् ।
उद्बन्धनं कर्तुमियेष केशरा स तावदाविर्भवति स्म तत्पुरः ॥ १२३ ॥
मा साहसं तन्वि ! वितन्विति स्वयं निवेद्य तत्पाशमसौ व्यसूत्रयत् ।
कस्मादकस्मात् समुपागतः पतिर्ममेति चित्रं बिभराम्बभूव सा॥१२४॥
ऊचे वसन्तेन सतेदृशं च सा प्रिये ! प्रियस्तेऽस्मि स विप्रियोज्झितः ।
एतद् यदर्थं निरमायि साहसं त्वया किमन्यत् तव वाऽस्ति दुर्घटम् ?॥

एतन्मित्रपवित्रमन्त्रवशतोऽत्र प्राक् प्रविश्य स्थित-
स्त्वां प्रापं किल तज्जिहीर्षुरधुनाऽहं कामदेवाज्ञया ।
तन्नेपथ्यमशेषमस्य निजकं प्रीत्या भवत्याऽर्प्यतां
येन द्राक् परिधाय तत्तव पितुर्वेश्माऽधितिष्ठत्ययम् ॥ १२६ ॥
त्वन्नेपथ्यभृताऽमुना तव गृहे तन्वङ्गि ! चाङ्गीकृते
यास्यावो निशि नौ निरीय नगरं सौख्याप्तये स्वेप्सितम् ।
श्रुत्वैवं निजवेषमार्पयदियं सा कामपालाय तं
देवं काममनु स्थितः सह तया हृष्टो वसन्तोऽप्यथ ॥ १२७ ॥
पुष्पौघैः पूजयित्वा परिमलकलितैः कामदेवं प्रकामं
नीरङ्ग्यन्तर्हितास्यः सुललितगमनः केशराकल्यकल्यः ।
उद्घाट्याऽरं कपाटे स्वयमपि रुचिरः कामपालो निरीय
तत्सख्या दत्तहस्तः पृथुतरमभजद् याप्ययानं नृवाह्यम् ॥१२८॥
वाहीकैरुह्यमानं प्रथममधिगतं पञ्चनन्दीभ्यगेहे
यानादुत्तार्य वेगात् प्रथमसहचरी स्वर्णवेत्रासनस्थम् ।
तं प्रोचे केशरे ! त्वं सहृदयहृदयाधीशसंयोगहेतुं

मन्त्रं तिष्ठ स्मरन्ती, भवति हि भविनां मन्त्रतो वाञ्छितार्थः॥१२९॥
तद्वाक्यश्रवणादनन्तरमसौ तस्यां गतायां तदा
मन्त्रं कामरतीष्टसङ्गमकरं नामाऽस्मरत् सोऽप्यलम् ।
तत्कान्ता मदिराऽपि मातुलसुता श्रीकेशरायास्तदा-
ऽऽहूता शङ्खपुरादिहाऽऽगमदरं पाणिग्रहस्योत्सवे ॥ १३० ॥
तस्याग्रे सा निषण्णेदमवददुदयत्कोष्णनिःश्वासपूर्वं
किं खेदं केशरे ! त्वं नियतिविनियते कार्यजाते तनोषि ? ।
आस्ते ते जीवितेशः प्रियसखि ! सुकृती श्रीवसन्तः कलावा-
नित्यश्रौषं सखीभ्यो निजनगरगता सौख्यसंपत्तिदाभ्यः॥१३१॥
मया प्रियवियोगजं प्रचुरदुःखमास्वादितं
स्वयं खलु वदामि तत् तव विधातुमाश्वासनाम् ।
विधिर्भजति वामतां किल तनोत्यनिष्टं ततो
गतोऽयमनुकूलतां सखि ! मनीषितं दास्यति ॥ १३२ ॥
किञ्च त्वं सखि ! वर्णनीयचरिता धन्याऽसि नूनं यया-
ऽऽलापालोकनजं सुखं सह मुहुः स्वप्रेयसाऽऽसादितम् ।
वृत्तं मेऽप्यतिदारुणं पुनरिदं संश्रूयतां दुःश्रवं
स्वालीभिः सममेकदाऽगममहं श्रीशङ्खयक्षोत्सवे ॥ १३३ ॥
तत्राऽशोकपलाशिपल्लवचयं गृह्णन्तमेकान्ततो
मूलेऽशोकमहाद्रुमस्य तरुणं मूर्त्या स्मरं प्रैक्षिषि ।
ताम्बूलं प्रहितं सरागमनसा तस्मै वयस्ये ! मया
तेनाऽहं करुणारसाम्बुनिधिना व्यालेभतो रक्षिता ॥ १३४ ॥
भूयो व्यालकरीन्द्रभीतिविधुरा नष्टा सखीभिः समं
पश्यन्ती पुनरेव तं बहुतरं प्रैक्षिष्यहं न क्वचित् ।
वारीमध्यगतेव तत्प्रभृति च स्तम्बेरमी विस्तृतो-
द्वेगा प्राणिमि गाढपञ्जरमिता सारीव दुःखार्दिता ॥ १३५ ॥
विना स्वप्नं काऽपि प्रियसखि ! न पश्यामि तमहं
प्रसन्ने दैवेऽतः परमपि यदीक्षिष्यत इह ।
तनूकर्तुं दुःखं हृदि तव पुरः प्रोच्यत इदं
यथा दुःखी दुःखं कलयति तथा नैव हि सुखी ॥ १३६ ॥

तत् खेदमाशु विजहीहि मनःप्रसाद-
संपादकं सखि ! समाश्रय धैर्यमेव ।
आराधितो विधिरयं तव शर्मदाता
. नैतादृशस्य भवतीह कृतघ्नभावः ॥ १३७ ॥
नीरङ्गीमपनीय तामथ जगौ कामः स रङ्गान्विते !
यं त्वं काङ्क्षसि सर्वदा स च पुरा दृष्टप्रियस्तेऽस्म्यहम् ।
संयुक्ताऽस्त्यधुना वसन्तसुहृदा सा केशरा त्वं मये-
वैतस्याऽभिमतं विधेर्विदधतः किं वा विलम्बो भवेत् ? ॥१३८॥
प्रत्यासीदति सांप्रतं प्रियतमे ! वेलाऽपि वैवाहिकी
किञ्चिद् येन निरीयते झटिति मे तद् द्वारमुद्भावय ।
पाश्चात्योपवनीयपक्षकमियं तस्याऽथ साऽदर्शयत्
तेनैव प्रययौ समं मदिरया कामः स कामातुरः ॥ १३९ ॥
आयातस्य पुरः पुरेऽत्र मदिराप्राणेश्वरः केशरा-
प्राणेशस्य समेत्य दारकलितोऽसौ प्राप कामो मुदम् ।
प्राग्जन्मप्रियतावशाद् नरपते ! तौ ढौकने पञ्चकं
वस्तूनां तनुतोऽनिशं कलय तानग्रे निषण्णानिमान् ॥१४०॥
इष्टैरेभिः सह नरपते ! जाततत्त्वावबोध-
स्तत्त्वं भोक्तुं प्रभवसितरां सन्निधिस्थैर्निकामम् ।
नेयत्कालं किमपि भवता भुक्तमेतानमत्वा-
ऽभीष्टान् प्रीतान् सुकृतकरणे निर्निदानं सहायान् ॥ १४१ ॥
आकर्ण्येत्यथ पञ्च तेऽपि सहसाऽस्मार्षुर्भवं प्राक्तनं
स्थेमप्रेमनिमित्तसख्यभणने साक्षित्वविद्योतकम् ।
श्रीशान्तिं कुरुचन्द्रभूमिपतिरप्यानम्य कल्याणदं
प्राक्प्रेम्णा स्वगृहे निनाय चतुरो बन्धूनिवेच्छुः सुखम् ॥१४२॥
आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विद्यानदीसागरः ।
तच्छिष्येण कृते गतोऽसमरसः श्रीशान्तिवृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽयमष्टादशः ॥ १४३ ॥

**इति श्रीशान्तिनाथचरिते अष्टादशः सर्गः समाप्तः ॥**



लघिमा वशितेशित्वं प्राकाम्यं महिमाऽणिमा ।
यत्रकामावसायित्वं प्राप्तिरैश्वर्यमष्टधा ॥ ११६ ॥

लघोर्भावो लघिमा, महानपि लघुर्भूत्वा इषीकतूल इव आकाशे विहरति ॥ १ ॥ वशिनो भावो वशिता, भूतानि पृथिव्यादीनि, भौतिकानि गोघटादीनि, तेषु वशी स्वतन्त्रो भवति तेषां त्ववश्यः, तत्कारणतन्मात्रपृथिव्यादिपरमाणुवशीकारात् तत्कार्यवशीकारः, तेन तानि यथाऽवस्थापयति तथाऽवतिष्ठन्त इत्यर्थः ॥१॥ ईष्ट इत्येवंशील ईशी ईशिनो भाव ईशित्वं, तेषां भूतभौतिकानां विजितमूलप्रकृतिः सन् य उत्पादो यो विनाशो यच्च यथावदवयवसंस्थानं तेषामीष्टे ॥ १ ॥ प्रकृष्टः कामोऽस्य प्रकामस्तद्भावः प्राकाम्यं इच्छाऽनभिघातः, नास्य भूतस्वरूपैर्मूर्त्यादिभिरिच्छाऽभिहन्यते, भूमावुन्मज्जति निमज्जति यथोदके ॥ १ ॥ महतो भावो महिमा, अल्पोऽपि नागनगनगरगगनपरिमाणो भवति ॥ १ ॥ अणोर्भावोऽणिमा, महानपि भवत्यणुः ॥ १ ॥ यत्र कामस्तत्राऽवस्यतीत्येवंशीलो यत्रकामावसायी तद्भावस्तत्त्वं सत्यसङ्कल्पता, विजितगुणार्थतत्त्वो हि यद्यदर्थतया सङ्कल्पयति, तत्तदस्मै प्रयोजनाय कल्पते, विषमप्यमृतकार्ये सङ्कल्प्य भोजयन् जीवयतीति ॥ १ ॥ प्रापणं प्राप्तिः, सर्वे भावाः संनिहिता भवन्ति तस्य, तद्यथा—भूमिष्ठ एवाङ्गुल्यग्रेण चन्द्रमसं स्पृशति ॥१॥ इत्यैश्वर्यमष्टप्रकारं भवति ॥ ११६ ॥

गौरी काली पार्वती मातृमाता-
ऽपर्णा रुद्राण्यम्बिका त्र्यम्बकोमा ।
दुर्गा चण्डी सिंहयाना मृडानी-
कात्यायन्यौ दक्षजाऽऽर्या कुमारी ॥ ११७ ॥
सती शिवा महादेवी शर्वाणी सर्वमङ्गला ।
भवानी कृष्णमैनाकस्वसा मेनाद्रिजेश्वरा ॥ ११८ ॥
निशुम्भशुम्भमहिषमथनी भूतनायिका ।

गौरवर्णत्वाद् गौरी ॥ १ ॥ संहारमूर्तौ कृष्णवर्णत्वात् काली ॥ २ ॥ पर्वतस्याऽपत्यं पार्वती ॥ ३ ॥ मातॄणां ब्रह्माण्यादीनां माता मातृमाता ॥ ४ ॥ न विद्यन्ते पर्णान्यस्या अपर्णा, तपसि पर्णानामप्यनशनात् ॥ ५ ॥ रुद्रस्य भार्या रुद्राणी "वरुणेन्द्र-" ॥ २ । ४ । ६२ ॥ इत्यादिना ङीः, आन् चान्तः ॥ ६ ॥ अम्बैव अम्बिका, जगन्मातृत्वात् ॥ ७ ॥ त्रीण्यम्बकानि नेत्राण्यस्याः त्र्यम्बका ॥ ८ ॥ अवतीति उमा "अवेर्हस्वश्च वा" ॥ ( उणा–३४२ )॥ इति मक्, उ मेति मात्रा तपसे निषिद्धेति वा ॥ ९ ॥ दुःखेन गन्तुं शक्यतेऽस्यां दुर्गा "सुगदुर्गमाधारे" ॥ ५ । १ । १३२ ॥ इति डान्तो निपात्यते ॥ १० ॥ चण्डी, कोपनत्वात् "नवा

अर्हम्

# अथ एकोनविंशः सर्गः ।

—:०:—

पृथ्व्यां यस्मिन् संप्रवृत्ते विहारं कर्तुं साग्रे योजनानां शतेऽपि ।
नेशुस्तूर्णं मारिदुर्भिक्षरोगाः स श्रीशान्तिः श्रेयसे भूयसे वः ॥ १ ॥
ग्रामीणानां नागराणामिवाऽन्तश्चित्तं हर्षं निर्विशेषं प्रयच्छन् ।
साम्योत्कर्षं संप्रपन्नस्य दूरं क्षेत्रज्ञस्याऽवस्थितेस्तत्त्ववृत्त्या ॥ २ ॥
विश्वारामं ताप्यमानं कषायज्वालाजिह्वज्वालजालेन कामम् ।
सिञ्चन्नुच्चैर्देशनावारिपूरैर्बिभ्रत् स्वच्छं शम्बरं वारिदो वा ॥ ३ ॥
हृत्वा विश्वव्यापि मोहान्धकारं वागुस्रौघैर्बोधयन् भव्यपद्मान् ।
भिन्दन् सर्वं लोककोकस्य शोकमादित्यो वा विप्रलम्भप्रभूतम् ॥ ४ ॥
वृत्तत्वभ्राड्निर्मलत्र्यातपत्रीव्याजाद् मौलेरूर्ध्वमाकाशदेशे ।
प्रागाराद्धां धारयन् सुत्रिरत्नीं कार्तज्ञं वा ख्यापयन् विश्वमध्ये॥ ५ ॥
उद्दामोद्यच्छौर्यवीर्यप्रचण्डमोहात् त्रासाच्छिष्यवर्गस्य पूर्वम् ।
भग्नज्ञानाऽऽह्वानविज्ञानहेतोरूर्ध्वीकृत्योद्भावयन् स्वध्वजं वा ॥ ६ ॥
पादाब्जाधः स्वर्णपद्मानि कुर्वन् स्वप्रत्नश्रीजागरूकप्रभाणि ।
सर्वोत्कृष्टं निःस्पृहत्वं ब्रुवाणो निर्वाणस्य प्रापणे लग्नकामः ॥ ७ ॥
अग्रे स्फूर्जद्धर्मचक्रेण सूर्यं जित्वा भाता बिभ्रताऽऽरासहस्रम् ।
विश्वस्यान्ध्यं निर्विशङ्कं वितन्वद् मोहध्वान्तं निघ्नता राजमानः ॥ ८ ॥
शक्रेशानस्त्रीप्रमोदप्रमुक्तलाजाऽऽभाभ्यां सर्वदा चामराभ्याम् ।
जम्बूद्वीपान्तर्गतानुष्णरश्मिद्वैतज्योत्स्नानिर्जयं वीज्यमानः ॥ ९ ॥
गन्धर्वौघैः सुस्वरैर्गीयमानः श्रद्धाशुद्धैश्चारणैः स्तूयमानः ।
आकाशस्थैः खेचराणामधीशैः स्वीयस्त्रीणां दृश्यमानोऽङ्गुलीभिः ॥१०॥
सौरे मार्गे दुन्दुभिध्वानपूर्वं धर्मस्थानं वासयन् सर्वतोऽपि ।
देशत्यागं निर्दिशंश्चापि पापव्यापाराणामेकवारं स्वतोऽपि ॥ ११ ॥
भव्यक्षेत्राभ्यन्तराले कुकर्मदावप्लुष्टे बोधसीरेण कृष्टे ।
स्वच्छोदञ्चद्भावनाऽम्भःप्रासिक्ते सम्यक्त्वाख्यं बीजमेकं वपन् ज्ञः ॥१२॥
प्रादक्षिण्यं शाकुनानां प्रकुर्वन् दाक्षिण्यं वा रोपयंस्तन्मनःसु ।

लघिमा वशितेशित्वं प्राकाम्यं महिमाऽणि... ।
यत्रकामावसायित्वं प्राप्तिरैश्वर्यमष्टधा ॥ ११६ ॥

लघोर्भावो लघिमा, महानपि लघुर्भूत्वा इषीकतूल इव आकाशे विहरति ॥ १ ॥ वशिनो भावो वशिता, भूतानि पृथिव्यादीनि, भौतिकानि गोघटादीनि, तेषु वशी स्वतन्त्रो भवति तेषां त्ववश्यः, तत्कारणतन्मात्रपृथिव्यादिपरमाणुवशीकारात् तत्कार्यवशीकारः, तेन तानि यथाऽवस्थापयति तथाऽवतिष्ठन्त इत्यर्थः ॥१॥ ईष्ट इत्येवंशील ईशी ईशिनो भाव ईशित्वं, तेषां भूतभौतिकानां विजितमूलप्रकृतिः सन् य उत्पादो यो विनाशो यच्च यथावदवयवसंस्थानं तेषामीष्टे ॥ १ ॥ प्रकृष्टः कामोऽस्य प्रकामस्तद्भावः प्राकाम्यं इच्छाऽनभिघातः, नास्य भूतस्वरूपैर्मूर्त्यादिभिरिच्छाऽभिहन्यते, भूमावुन्मज्जति निमज्जति यथोदके ॥ १ ॥ महतो भावो माहिमा, अल्पोऽपि नागनगनगरगगनपरिमाणो भवति ॥ १ ॥ अणोर्भावोऽणिमा, महानपि भवत्यणुः ॥ १ ॥ यत्र कामस्तत्राऽवस्यतीत्येवंशीलो यत्रकामावसायी तद्भावस्तत्त्वं सत्यसङ्कल्पता, विजितगुणार्थतत्त्वो हि यद्यदर्थतया सङ्कल्पयति, तत्तदस्मै प्रयोजनाय कल्पते, विषमप्यमृतकार्ये सङ्कल्प्य भोजयन् जीवयतीति ॥ १ ॥ प्रापणं प्राप्तिः, सर्वे भावाः संनिहिता भवन्ति तस्य, तद्यथा—भूमिष्ठ एवाङ्गुल्यग्रेण चन्द्रमसं स्पृशति ॥१॥ इत्यैश्वर्यमष्टप्रकारं भवति ॥ ११६ ॥

गौरी काली पार्वती मातृमाता-
ऽपर्णा रुद्राण्यम्बिका त्र्यम्बकोमा ।
दुर्गा चण्डी सिंहयाना मृडानी-
कात्यायन्यौ दक्षजाऽऽर्या कुमारी ॥ ११७ ॥
सती शिवा महादेवी शर्वाणी सर्वमङ्गला ।
भवानी कृष्णमैनाकस्वसा मेनाद्रिजेश्वरा ॥ ११८ ॥
निशुम्भशुम्भमहिषमथनी भूतनायिका ।

गौरवर्णत्वाद् गौरी ॥ १ ॥ संहारमूर्तौ कृष्णवर्णत्वात् काली ॥ २ ॥ पर्वतस्याऽपत्यं पार्वती ॥ ३ ॥ मातॄणां ब्रह्माण्यादीनां माता मातृमाता ॥ ४ ॥ न विद्यन्ते पर्णान्यस्या अपर्णा, तपसि पर्णानामप्यनशनात् ॥ ५ ॥ रुद्रस्य भार्या रुद्राणी "वरुणेन्द्र-" ॥ २ । ४ । ६२ ॥ इत्यादिना ङीः, आन् चान्तः ॥ ६ ॥ अम्बैव अम्बिका, जगन्मातृत्वात् ॥ ७ ॥ त्रीण्यम्बकानि नेत्राण्यस्याः त्र्यम्बका ॥ ८ ॥ अवतीति उमा "अवेर्हस्वश्च वा" ॥ ( उणा—३४२ )॥ इति मक्, उ मेति मात्रा तपसे निषिद्धेति वा ॥ ९ ॥ दुःखेन गन्तुं शक्यतेऽस्यां दुर्गा "सुगदुर्गमाधारे" ॥ ५ । १ । १३२ ॥ इति डान्तो निपात्यते ॥ १० ॥ चण्डी, कोपनत्वात् "नवा

"सर्वस्त्रीगर्वसर्वस्वं दमयन्ती यदुत्थिता ।
सा ततो दमयन्तीति स्वजनैरभिधीयते ॥ १ ॥
यत्तज्जन्मदिने प्राप्तः पुरं दन्ती दवार्दितः ।
दवदन्तीति तत् तस्याः पित्रा नाम कृतं ततः" ॥ २ ॥

सा क्रमेणाऽष्टवार्षिकी जाता। ततः कलाचार्यसमीपे पितृभ्यां मुक्ता वेदान्तपुराणव्याकरणच्छन्दोज्योतिष्कसंगीतसाहित्यतर्काद्यनेकशास्त्रनिपुणां कृत्वा गीतनृत्याद्यनेककलाकुशलां ज्ञात्वाऽध्यापको भीमराज्ञोऽग्रे समानाय्य तस्याः कलाकौशलं दर्शयामास। ततस्तां पुत्रीकलां दृष्ट्वा हृष्टो राजा एतद् दानं ददौ ।

यथा—

"सहस्राधिकलक्षेण दीनाराणां नरेश्वरः ।
कलाचार्यं स्वदुहितुः पूजयित्वा विसृष्टवान्" ॥ १ ॥

ततः क्रमेण यौवनोन्मुखीं तां निरीक्ष्य भीमराट् चिन्तयति स्म-कोऽस्या अनुरूपो वरो भावी ?। इति चिन्तया स्वयंवरं प्रारब्धवान्। तस्मिन् स्वयंवरे सर्वराज्ञो राजपुत्रांश्चाऽऽकारयितुं गौडचौडकर्णाटलाटद्रविडप्रभृतिदेशेषु पृथक् पृथग् दूतान् प्राहिणोत्। अहं तु देवपादानां समीपे भीमनरेश्वरेण स्वयंवरमहे त्वामाह्वातुं प्रेषितोऽस्मि। अतः शीघ्रं देव ! चतुरङ्गचमूवृतो दक्षिणाभिमुखीं यात्रां कर्तुं सांप्रतं मा विलम्बं विधेहि । यतः--वैशाखपूर्णिमायां दमयन्त्याः स्वयंवरमहोत्सवो भविष्यति, साम्प्रतं विलम्बावसरो नास्ति। तत् श्रुत्वा हर्षितो निषधस्तस्मै सहस्रतुरगान्वितां स्वर्णकोटिं पारितोषिकं ददौ। स दूतो बहुमानपुरस्सरं विसृष्टः स्वपुरमागत्य निषधोक्तं निषधदत्तं च सर्वं भीमभूभुजे निवेदयामास। भीमेन विसृष्टो दूतः स्वगृहं व्रजन् पुनर्दवदन्ती-

समीपे समागतो दूतो नलरूपमवर्णयत्। तत् श्रुत्वा भैमी तस्मै पारितोषिकं हेमभूषणं ददौ। सोऽपि संतुष्टः स्वगृहं गतः। इतश्च निषधाधिपो नलकूवरसहितश्चतुरङ्गिण्या सेनया समन्वितो निःस्वाननिनादैः पूरितदिगन्तो दक्षिणाशाभिमुखश्चचाल। तस्मिन् सैन्ये चलिते सति किं जातम्?—पथि शैलसंघाः गजवाजिरथपादघातैश्चूर्णीबभूवुः। पथि संचरतां सैन्यानां समग्रा नद्यः पङ्कावशेषा बभूवुः। पथि संचरतां सैन्यानां सर्वाणि सरांसि ऊषरक्षेत्रप्रायाणि बभूवुः। पथि संचरतां सैन्यानां महावनानि गृहाङ्गणसन्निभानि बभूवुः। एवं पथि संचरन् कुण्डिनपुरपरिसरं प्राप। एवमन्येऽपि राजानो यानारूढाः सैन्यपरिवृताः सर्वाऽभिसारेण समाजग्मुः। सर्वान् समागतान् राज्ञो दृष्ट्वा भीमराट् स्वपौरलोकान् समाहूय इत्यादिदेश।

यथा—

“ भो भोः पौरजनाः! समग्रनगरे पुष्पोत्करः कीर्यतां
बध्यन्तां मणितोरणानि रभसादूर्ध्वीक्रियन्तां ध्वजाः।
सिच्यन्तां घुसृणच्छटाभिरभितो मार्गा वितानावृताः
प्राप्तो येन किलाऽद्य मूर्त्तमदनो देवः स्वयं नैषधः ”॥१॥

इत्यादिनगरशोभां कृत्वा भीमराड् निषधस्य संमुखमागात्। मार्गे द्वावपि संमिलितौ सूर्याचन्द्रमसोः श्रियं जगृहतुः। परस्परं दृष्ट्वा द्वावप्याह्लादपरावश्यादवतेरतुः, द्वावप्यालिङ्गनपरायणौ आलिङ्गनं दत्त्वा सिंहासने सुस्थितौ। क्षेमकुशलवार्त्तां कुर्वाणौ अश्वारूढौ मार्गे संचरन्तौ षट्खण्डमण्डनं कुण्डिनपुरं प्रत्यागतौ। ततो भीमराड्निदेशेन निषधवाहिनी सर्वा केलिकानने निवासानग्रहीत्। निषधो नगरान्तो राजवेश्मन्युत्ततार। एवं सर्वेऽपि राजानश्चतुर्दिक्षु पृथक् पृथक् पूर्वादिवनेषूत्तेरुः। ततो भीमराजा कुण्डिनपुरतः पूर्वस्यां दिशि नगराद् बहिरेकं मणिस्तम्भविराजितं सुवर्णशिखरं नीलमणितोरणरम्यं स्वयंवर

मण्डपमकार्षीत् । तस्मिन् मण्डपे वैशाखीपूर्णिमायां सर्वे रा-
जानः संमिलिता उच्चमञ्चेषूपविष्टाः शोभन्ते स्म । अथ दम-
यन्ती कृतस्नाना चन्दनादिभिश्चर्चितवक्षःस्थला परिहित-
देवदूष्यपट्टकूला स्वर्णरत्नाभरणभूपितशरीरा नरविमानारूढा
सखीपरिवारपरिवृता लक्ष्मीर्मूर्त्तेव स्वयंवरमण्डपं विवेश । कर-
धृतपुष्पस्रजं सकलाभरणभूपितां रतिरूपानुकारां तां दृष्ट्वा सर्वे
राजानश्चिन्तयन्ति स्म—धन्यैषा बालिका, या एवंविधा दृश्यते,
धन्यः स पुमान्, य एनां कन्यां परिणेष्यति । एवं सकल-
राजलोकैः सविकल्पैर्विलोक्यमाना स्वयंवरमण्डपे परिभ्रमति
स्म । तस्याः पुरतः एका प्रतीहारी सर्वेषां राज्ञां वंशज्ञा सर्वान
महीपालान् वर्णयन्ती पुरतश्चचाल । तदेव दर्शयति यथा--हे
दमयन्ति ! एष मगधाधिपो वपुर्लावण्यकल्लोलैर्जितानङ्गः, अकृ
तभृङ्गारः कलिङ्गराट् तवाभिमुखो वारं वारं निरीक्षते, असौ
भग्नरिपुव्रातः कुङ्कुणदेशाधिपतिः, असौ लाटनायकः, असौ
कर्णाटाधिपतिः, असौ सौराष्ट्रपतिः, हे सुन्दरि ! एष कोशल
देशाधिपतिः राजा निषधस्तस्यैतौ नलकूबरनामानौ तनयौ
सकलशास्त्रपारीणौ शस्त्रकोविदौ, तयोर्मध्ये एष नलः षोडश
वर्षीयोऽभिनवमन्मथानुकारी, यदि तवेच्छाऽस्ति तर्हि ए
वरं वृणु, याचकजनकल्पपादपो नलस्तव भर्ता भवतु
तद्वचनं श्रुत्वा कुमारिका दमयन्ती नलकण्ठकन्दले वरमाल
निचिक्षेप । तद् दृष्ट्वा हर्षितो भीमराट् प्रियङ्गुमञ्जरीं राज्ञीं प्र
त्याह—हे प्रिये ! दमयन्त्या नले वृते मम वंशो विभूषितः । तत
भीमेन नलो यानमारोप्य स्वपुरे नीतः । ततोऽन्तःपुरनारीभि
रुभावपि स्नानविभूषणादिभिर्भूषयित्वा सुवर्णसिंहासने नि
धाय नलवैदर्भ्योर्विवाहमहोत्सवः प्रारेभे । प्रथमं समदनफल
हस्तौ परस्परं बद्धवस्त्राञ्चलौ द्वावपि वह्नेः प्रदक्षिणां चक्रतु
ततो होमं विधाय वधूवरयोः पाणिग्रहणं विधाय च द्वि

वेदवाचा वह्नौ लाजमोक्षणं चकार । एवं तयोर्विवाहे जाते भीमराड् नलाय पाणिमुक्तौ एतद् धनं ददाति स्म।

यथा—

"नलस्य वीवाहमहे वृत्ते स्वविभवोचितम् ।
हस्त्यश्वादि ददौ हस्तमोचने भीमभूपतिः" ॥ १ ॥

एवं नलभैम्योः पाणिग्रहणं विधाय करमोचने भीमो दानं दत्त्वा निषधनलयोः स्वर्णादिभिः पूजां विधाय स्वयंवरसमागतानां भूपतीनां सुमहतीं पूजां विदधे । ततो विधिज्ञो तथैव याचकानपि स्वर्णादिदानेनानृणीचकार। निषधनलावपि याचकजनानां मनसेप्सितं दानं दत्त्वा विससर्जतुः। ततो निषधो नलसहितो भीमाग्रहात् प्रतिदिनं कृतमहोत्सवो मासमेकं तत्र स्थित्वा पश्चान्निषधं स्वीयं देशं प्रति गन्तुं सज्जोऽभूत् । ततः साश्रुदृक् भीमभूपः सबाष्पां दमयन्तीं प्रत्याह--

"व्यसनेऽपि भवेर्वत्से ! पतिवर्त्मानुवर्त्तिनी ।
पतिमेव परं प्राहुर्दैवतं हि मृगीदृशाम्" ॥ १ ॥

भीमराज्ञ इमां शिक्षामनुगृह्य नलस्य रथमारुह्य दमयन्ती श्वशुरनगरं प्रति प्रतस्थे। भीमराडपि पुत्रीप्रेमानुबद्धः प्रयाणत्रयं सह गत्वा ततो निषधानुज्ञया स्वदेशं प्रत्याजगाम । अथ दमयन्ती नलस्य रथमारूढा मार्गे गच्छति स्म। एवं गच्छतः सैन्यस्य सन्ध्या समागता। रथस्थदमयन्त्या नवोढया नवस्नेहया सह क्रीडन्नलो मार्गे संचचार । सन्ध्यासमयेऽपि संजाते निषधाधिपतिः स्वपुराभिमुखश्चलन्न विशश्राम, यतः स्वपुरं प्रति गच्छतां जनानामुत्कण्ठा बलीयसी । मार्गे नलदमयन्तीभ्यां गच्छद्भ्यां कर्णामृतमिव भ्रमरतुमुलध्वनिरश्रावि। भैमी बभाषे- हे नाथ! अत्र काचिद् द्रुमावलिर्नास्ति तर्हि अलीनां कोलाहलः किमस्ति?। नलेनोक्तम्—हे रम्भोरु! अत्र तिमिरनिकरैः किञ्चित्

कारणं नावगम्यते। तत् श्रुत्वा भैमी तिमिरनिराकरणार्थं स्वभा
लमामृशत्, तया भाले आमृष्टे सहस्रांशुकिरणा इव किरणास्त
दैवाविरभूवन्; तत्किरणैस्तिलकोद्भवैस्तत्तमः प्रनष्टम्; तत्क्षणा
देवोद्द्योतो जातः। नलेनोक्तम्--हे भैमि! एतत्तेजः कुत
प्रादुरभूत्?। दमयन्त्या प्रोक्तम्--हे स्वामिन्! असौ तिलकं
मम जन्मसब्रह्मचारी, तस्यानुभावतो रात्रिभवं तमो नष्टम्
अग्रे गच्छन्तौ दम्पती अलिकुलपरिवेष्टितं कायोत्सर्गस्थि
तमेकं महामुनिं ददृशतुः। तं मुनिं दृष्ट्वा राजा कथयति स्म--
प्रिये! नूनमेष साधुः केनचिद्वनदन्तिना स्थाणुभ्रान्त्या गण्ड
कण्डूमपाकर्तुं घृष्टः, तत्कपोलमदगन्धलोलुपैर्भ्रमरसमूहैरेष म
हामुनिर्वेष्टितो दृश्यते। ताभ्यामिति विचिन्त्य तत्क्षणादेव
महामुनिर्निरुपद्रवीकृतः। इतः प्रभातसमयो जातः। प्रतिमामु
संहृत्य स ज्ञानी महामुनिस्तयोर्नलदमयन्त्योः पुरतो धर्मसं
प्रकारिण्या गिरा जगाद।

यतः—

"धर्मो जगतः सारः सर्वसुखानां प्रधानहेतुत्वात्।
तस्योत्पत्तिर्मनुजात् सारं तेनैव मानुष्यम्" ॥१॥

भो भविकाः! एवंविधं मानुष्यमवाप्य धर्मे यत्नो विधे
विशेषतो जिनपूजाविषये। भो नलनरेश! अनया तव पत्न
दमयन्त्या पूर्वभवे चतुर्विंशतिजिनतपः कृत्वा तदुद्यापने च
विंशतिजिनभालेषु स्वर्णमयास्तिलका आरोपयांचक्रिरे; ते
स्या अस्मिन् जन्मनि भालस्थलालङ्करणो मार्त्तण्डविड
तिलकोऽभवत्। हे कुमार! भवताऽपि धर्मद्रुमस्तथा सिक्तो य
तैस्तैः फलैः पूर्वं फलितः पुनः साम्प्रतं फलिष्यति; इति निश
पुनस्ताभ्यां सर्वज्ञप्रणीतो धर्मोऽङ्गीचक्रे। ततस्तावुभावपि प्रह
मेदुरौ पुनरपि रथारूढौ प्रतस्थाते। ततः क्रमेण मार्गे संचर
षधो नलसहितः पुरीपरिसरे समागात्; स्वां पुरीं दृष्ट्वा न

प्रेयसीमित्यवोचत्--हे प्रिये ! एषा निषधराज्ञो निषधा नगरी तव श्वशुरसन्तानराजधानी; या निजश्रीभिरमरावतीं जयन्ती वर्त्तते । हे देवि ! इतः क्रीडातडागानि पश्य, इतः केलिवनानि विलोकय, इतः प्रमदद्दीर्घिकाः पश्य; इत्यादि दर्शयन्नलो दमयन्तीं कौतुकेन रमयमाणो नगरं प्रति चचाल। निषधोऽपि वधूवरं पुरस्कृत्य विविधोत्सवपूर्वकं कोशलां पुरीं प्रविवेश। दमयन्ती नलेन सार्द्धं क्रीडन्ती स्वं धर्मार्थकामरूपपुरुषार्थत्रयशालिनं मेने । तदा नलस्य तया दमयन्त्या दयितया सार्द्धं क्रीडां कुर्वतो दिनैर्यामायितं, क्षणदाभिः क्षणायितं, कदाचित्तौ क्रीडाद्रिषु क्रीडन्तौ, विचरतः कदाचित्काननेषु, कदाचिद्दोलाकेलिभिः, कदाचिज्जलक्रीडादिभिः, कदाचित् कुसुमावचयैः, कदाचित् कुसुममालाऽभिगुम्फनैः, कदाचित्पुष्पावतंसरचनैः; एवं तौ दम्पती दिनानि निर्गमयतः स्म । एवंविधं नलं राज्यभारधुरन्धरं षोडशवार्षिकं सकलराज्यधुराधरणधौरेयं विज्ञाय राजा निषधो वीरसेनाऽपरनामा नले राज्यं न्यस्य कूबरे यौवराज्यं च न्यस्य स्वयं पुरुषसमूहैः सह दीक्षामुपाददे। वीरसेनो दीक्षां लात्वा दुस्तपं तपस्तप्त्वा मासमेकमनशनं विधाय पञ्चमे सुरलोके सुरोऽभवत् । अथ नलो राज्यं पालयति स्म, कथंभूतो नलः—

"समग्रगुणसम्पूर्णः सर्वावयवसुन्दरः ।
निःशेषपुरुषार्थज्ञो निखिलागमपारगः ॥ १ ॥
धनुर्द्धरगुणोत्तंसो राजर्षिकुलदीपकः ।
पृथ्वीतिलकशृङ्गारो दुर्जनौघदवानलः ॥ २ ॥
पयोधिर्गुणरत्नानां पर्जन्यः सूक्तविप्रुषाम् ।
पवनः शत्रुवृक्षाणां पतङ्गः शस्त्ररोचिषाम् ॥ ३ ॥
मनोभूरिव सौभाग्ये मघवानिव शासने ।
मृगाङ्क इव सौम्यत्वे मार्त्तण्ड इव तेजसि ॥ ४ ॥

सुमेरुरिव शैलानां चिन्तामणिरिवाऽश्मनाम् ।
कल्पद्रुरिव वृक्षाणां प्रधानः पृथिवीभुजाम् ॥ ५ ॥
सूर्यपाका रसवती नलाख्यं च दुरोदरम् ।
स चाऽश्वहृदयो मन्त्रो यस्याद्यापि हि विश्रुतः ॥ ६ ॥
मध्ये धर्मस्य शान्तेश्च चतुर्थे च तथाऽरके ।
वीरसेनसुतो राजा नलो राज्यमपालयत् ॥ ७ ॥
वहन् विदितविश्वासं वयः षोडशवार्षिकम् ।
वपुषा वृषभस्कन्धः स प्रजानां प्रियोऽभवत्" ॥ ८ ॥

एवंविधे नले राज्यं शासति प्रजा मनोरथातीतं सौख्यं प्रपेदिरे । एवं नले राज्यं कुर्वाणे आर्यावर्त्तो देशः सर्वदेशेषु सौख्येन, स्वास्थ्येन, शिवेन, समृद्ध्या च परां कोटिं लब्धवान्। तथा नले राज्यं शासति तन्नगरवासिजनाः वापीकूपतडागमठप्रासादादिषु क्रीडन्तोऽपि धर्मार्थकामैरेव वासरान्निर्गमयन्ति स्म। तथा च नले राज्यं शासति वारिदा वारिधाराभिः काले ववृषुः । तथा स्वचक्रपरचक्रोत्थभयं स्वप्नेऽपि नाभवत् । तथा वसुधा क्षेत्रैः सस्यं असूत; खानिभिः रत्नान्यसूत, आकरेषु सारभाण्डान्यभूवन्, कानने करिपोतका अभूवन्, देवा आसन्नप्रत्यया अभूवन्, तपस्विनः सप्रभावाः अभूवन् । तस्मिन् राज्ञि प्रायो गृहमेधिनः सधनाः, तथा धेनवः सदुग्धाः, शाखिनः सदाफलाः, अक्षीणसलिला नद्यश्चाभूवन्, जीवत्पुत्रा योषितोऽपि स्युः । तथा नले राज्यं शासति तडागकूपवाप्यादीनां बन्धः स्यात् नान्यजनस्य; कटीनां बन्धः, तालानां ताडनं, कनकरजतादीनां धातूनां कुट्टनं, छत्रेषु दण्डः, पुनः केशेषु बन्धः, कुचेषु काठिन्यं, स्त्रीणां नेत्रेषु चञ्चलत्वं नान्यजनेषु; तथा पुनर्नले राज्यं कुर्वति ईदृशा लोका नाभूवन् ।

यथा—

"कलुषः कुटिलः कुण्ठः कितवः क्रोधनः कुधीः ।

कृतघ्नः कृपणः क्रूरः कठोरः कोऽपि नाभवत्" ॥ १ ॥

यं नलं दृष्ट्वा पण्डिता दानशूरत्वात् एवं वर्णयन्ति ।

यतः—

" नाक्षराणि पठता किमपाठि प्रस्मृतः किमथ वा पठितोऽपि?।
इत्थमर्थिचयसंशयदोलाखेलनं खलु चकार नकारः" ॥ १ ॥

यो नलो दानेन कल्पवृक्षादधिकः कामधेन्वा अधिको वा, अतो लोकेष्वेवं वर्ण्यते । स नलः षोडशवर्षीयोऽपि दिग्विजयं विधायाक्षयं कोशं विदधे । अथ क्रीडां कर्तुं कदाचिदुपवनादिषु सुचिरं वारनारीवृतो नलनृपः क्रीडां करोति स्म, कदाचित्पुष्पावचयम् । इत्थं वीरवृत्त्या विचरतस्तस्य साम्राज्यं भुञ्जानस्य कियान् कालो जातः । तस्मिन् राज्ञि सर्वाः प्रजाः परां लक्ष्मीं अध्यारोहन् । स वीरसेनात्मजो नलनरेश्वरः प्रतापाक्रान्तविश्वः सकलसैन्यपरिवृतो भरतार्द्धमहीं स्तोकैरेव वर्षैः साधयामास गगनार्द्धं अंशुमालीव । त्रिखण्डां महीं साधितां ज्ञात्वा सर्वे राजानः सकलसैन्यपरिवृताः संभूय नलस्य हरेरिव राज्याभिषेकं वितेनिरे । नल एवंविधं राज्यं करोति स्म । अथ नललघुभ्राता कूबरः क्रूरचेता नलराज्याभिलाषुकस्तस्य च्छिद्राण्यन्वेषयामास मृगारेर्जम्बुक इव । अहो ! जना निष्कारणवैरिणः ।

यतः—

" मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुनाः निष्कारणवैरिणो जगति" ॥१॥

कूबरस्य दौर्जन्यं पश्यत । आः पापात्मा कूबर एकहस्तेन तालिकां दित्सति स्म यो नलस्य राज्यं हर्तुमिच्छति स्म ।

यतः कीदृशो नलः—

"स हि शीलकुलोपेतः पुण्यश्लोकः प्रजापतिः ।
शासिता दुर्विनीतानां गोप्ता विनयवर्त्तिनाम् ॥ १ ॥

नित्यमभ्यर्चिता देवा गुरवो नित्यपूजिताः ।
नित्यसंपन्मयं राष्ट्रं तस्य नित्योत्सवं मनः ॥ २ ॥
रथाऽश्वगजसंकीर्णं भूपालकुलसंकुलम् ।
दृश्यते तत्सभाद्वारि छत्रच्छन्नं नभस्तलम्''॥ ३ ॥

स राजा नलो निर्विकारं, निरायासं, निःसपत्नं, निरामयं, निरातङ्कं राज्यं विनिर्ममे । विशेषेण तस्य नलस्य राज्ये भैमी दानशीलतपोभावैर्विभूषिता । शङ्करगौर्योरिव तयोर्नलदमयन्त्योः प्रेम वव्रृधे । सा दमयन्ती अहर्निशं नलेन समं पुष्पावचयं संगीतदोलाललितकेलिभिश्चिक्रीड । नलो भैमीकृते प्रत्यहं सूर्यपाकां रसवतीं चक्रे । एवं तयोर्नलदमयन्त्योः सुखसागरे निमज्जतोर्दिनानि यान्ति स्म । अथैकस्मिन् दिने कर्मणा प्रेरितो नलश्चिन्तयति स्म । यदहं कूबरेण बन्धुना समं द्यूतं क्रीडयामि । एवं विचिन्तयमानस्य नलस्य दक्षिणः पाणिः पोस्फुरीति स्म । तस्यानुभावतो नलनृपो द्यूतवार्त्तायां द्यूतक्रीडायां द्यूतदर्शनात् सुखं लेभे, नान्यत्र मुहूर्त्तमात्रमपि क्वचिद्रतिं प्राप । अथाऽन्यदा नलो भ्रातरं कूबरं नाम्ना निजानुजं स्नेहात् सरलाशयो नलो द्वन्द्वद्यूताय न्यमन्त्रयत् । सभायामुभयोस्तयोः प्रीतिवर्द्धनं संशयदोलारूढजयाजयरूपं द्यूतमभवत् । उभयोर्नलकूबरयोः करे सशब्दाः पाशका नदन्ति स्म । एवं द्यूतबन्दीकृतो नलो दानध्यानस्नानज्ञानजपतपःप्रभृतिपुण्यं किमपि कर्तुं न शशाक । अहो व्यसनं सर्वत्र दुःखदायि ।

यतः—

"द्यूतं च मांसं च सुरा च वेश्या पापर्द्धिचौर्ये परदारसेवा ।
एतानि सप्त व्यसनानि लोके घोरातिघोरं नरकं नयन्ति" ॥१॥

"द्यूताद्राज्यविनाशनं नलनृपः प्राप्तोऽथवा पाण्डवाः
मद्यात्कृष्णनृपश्च राघवपिता पापर्द्धितो दूषितः ।

मांसात् श्रेणिकभूपतिश्च नरके चौर्याद् विनष्टा न के ?
वेश्यातः कृतपुण्यको गतधनोऽन्यस्त्रीमृतो रावणः" ॥ १ ॥

एवं द्यूतभराक्रान्ते राज्ञि नले सर्वाण्यपि राजकार्याणि सीदन्ति स्म। अहो! दिवानिशं नलं क्रीडन्तं दृष्ट्वा महामात्या वारं २ सुखोपायैरवारयन्, तथापि स नलो ग्रहग्रस्त इव द्यूतान्न विरराम। तस्य मनो गीतगाननृत्यतानवाद्यनाट्यकौतुकेषु कथाप्रबन्धगाथाग्रन्थश्रवणेषु निद्रामुद्राराज्यकार्यस्वशरीरसुखादिषु च नास्ति स्म, किन्तु केवलं दुरोदरे एवाऽस्ति स्म। एवं द्यूतपिशाचिकया ग्रस्तो नलः क्वापि रतिं न लेभे। मन्त्रिणा प्रेषिता दमयन्ती विवर्णवदना समीपे समागत्य नलं प्रत्येवं जगाद—हे स्वामिन्, तव कीर्त्या चराचरं विश्वं धवलितं, तदेव विश्वं द्यूतव्यसनेन मा मलिनं कुरुष्व। इमां क्रीडां सज्जनविद्वेष्यां त्यज। यतः—अयशस्करी सर्वेषां देहिनां, विशेषतो भवादृशां नरेन्द्रशिरश्चूडामणीनामियं क्रीडा। हे प्राणेश! द्यूतकारः काले भोजनास्वादं निद्रासुखं देवतार्चनं सुखस्नानं दानादिकृत्यं च नानुभवति।

तथा—

"प्रभवन्ति भृशं रोगाः शीघ्रं कुप्यन्ति देवताः।
भ्रश्यन्ति सर्वकार्याणि द्यूतासक्तस्य देहिनः ॥ १ ॥
स्वजना दूरतो यान्ति न विश्वसिति कोऽपि हि।
लक्ष्मीर्विलीयते शीघ्रं द्यूतव्यसनशालिनः ॥ २ ॥
वरं हालाहलं भुक्तं भृगुपातः कृतो वरम्।
वरं वह्निप्रवेशो वा न तु द्यूतं निषेवितुम्" ॥ ३ ॥

इत्यादि भैमीमुखात् श्रुत्वा नलश्चिन्तयति स्म—हंहो! महत् कष्टं दृश्यते। मदर्थमेषा मत्प्रिया भृशं दूयते। यस्मान्मम द्यूतत एषा भैमी दुःखिता स्यादतो द्यूतं दूरीकरोमि इति चिन्तयित्वा नलो द्यूतं विसृज्यतां रजनीं दमयन्त्या समं रेमे। अथ प्रभातसमये

वैतालिकोक्तिभिर्जागरितो नलभूपः पूर्ववत् प्रातःकृत्यं विधाय सकलराजसमन्वितः संसदि समाजगाम; मिलिताः श्रुतशीलादयो महामात्यास्ते हर्षिता दमयन्तीं प्रशंसन्ति स्म—धन्यैषा नलप्रिया यया नलनृपो मार्गे समानीतः। अथ कतिपयवासरे पुनरपि द्यूतव्यसनप्रेरितो नलो दमयन्त्योक्तं सर्वं विसस्मार। त्यक्तलज्जो नलः सभायां कूबरं समाकार्य द्यूतक्रीडां कर्तुमारेभे। यत् यत् पणीकृत्य करोति स्म, तत्तत्सर्वं हारयति स्म। पुण्ये गते सर्वं याति।

यतः—

हस्त्यश्वरथवारस्त्रीग्रामाकरपुरादिकम्।
यत् यत्पणं नलश्चक्रे तत्तत्सर्वमहारयत्॥ १॥
हीयमानः श्रिया नित्यं स त्यक्तः सेवकैरपि।
अन्वगच्छज्जनः सर्वः कूबरं जितकाशिनम्॥ २॥
पद्मतः कुमुदं यान्ति संध्यायां मधुपव्रजाः।
धिक् ततश्चापलं लक्ष्म्याः तदासक्तं धनं च धिक्"॥३॥

द्यूतेन ग्रस्तोऽपि नलः किमपि कार्याकार्यं न जानाति स्म। तं नलं द्वाररोधेन द्यूताज्जना निवारयन्ति स्म, सामन्ता भोजनत्यागेन निवारयन्ति स्म, हट्टगृहाद्यनुद्घाटनेन वणिग्वरास्तं निवारयन्ति स्म, दायादा लङ्घनसमूहैस्तं निवारयन्ति स्म। तथापि द्यूतग्रहग्रस्तो नलो द्यूतान्न विरराम। ततो भैमी नलं द्यूतान्निवारयितुं सामन्तमन्त्रिचक्रसंकीर्णां सभां स्वयमाययौ। ततस्ते सभालोका दमयन्तीं दृष्ट्वा दूरे अपसारिताः। सा नलकूबरान्तिके दुःखाक्रान्ता कञ्चुकिपुरुषैः परिक्षिप्ता स्वयमाययौ। एवमुवाच-भो देवर! कूबर! द्यूतं मुञ्च, स्वधर्मे मतिं कुरु, कुलोचितं समाचर, यदि महाराजस्तावन्नावधारयति तर्हि तवापि किं मतिभ्रंशो बभूव?। देवरेणोक्तम्--किमहं करोमि नलबान्धवो मां बलात् खेलयति। देव्योक्तम्--

निबन्धवृत्ती अन्वर्थे

निबध्यते विशेषोऽस्मिन् निबन्धः ॥ १ ॥ वर्ततेऽर्थावगमोऽत्रेति वृत्तिः ॥१॥ ानुगतोऽर्थोऽनयोरन्वर्थे ॥

, संग्रहस्तु समाहृतिः ।

संगृह्यन्ते वाच्यविशेषा अनेन संग्रहः ॥ १ ॥ समाहियन्तेऽनया समाहृतिः ॥ २ ॥

परिशिष्टपद्धत्यादीन् पथाऽनेन समुन्नयेत् ॥ १७१ ॥

परिशिष्यत इति परिशिष्टम् ॥ १ ॥ अनवच्छिन्नक्रमत्वात् पद्धतिरिव पद्धतिः १ ॥ आदिग्रहणाद् अध्यायोच्छ्वासाङ्कसर्गादयो गृह्यन्ते, पथाऽनेनेति अन्वर्थमार्गेणैव ॥ १७१ ॥

कारिका तु स्वल्पवृत्तौ बहोरर्थस्य सूचनी ।

पदार्थान् गम्यान् करोति कारिका, शेषं सुगमम् ॥ १ ॥

कलन्दिका सर्वविद्या

कलन्दी भाजनविशेषः तत्प्रतिकृतिः कलन्दिका, डलयोरैक्ये कडन्दिका अपि, र्वा आन्वीक्षिक्याद्या विद्या अस्यां सर्वविद्या ॥ १ ॥

निघण्टुर्नामसंग्रहः ॥ १७२ ॥

नितरां घण्ट्यन्ते एकत्र भाष्यन्ते शब्दा अनेन निघण्टुः " भृमृतृत्सरि- " । ( उणा–७१६ ) ॥ इति बहुवचनाद् उः, पुंस्ययम्, यद् वैजयन्ती–" नामशास्त्रे नेघण्टुर्ना," व्याडिस्तु–"अर्थान् निघण्टयत्यस्माद् निघण्टुः परिकीर्तितः । पुंनपुंसकयोः स स्यात्" इति ॥ १ ॥ नाम्नां संग्रहो नामसंग्रहः ॥ २ ॥ १७२ ॥

इतिहासः पुरावृत्तं

इति एवमर्थे, ह किलार्थे, इति ह आसीदत्र इतिहासः ॥ १ ॥ पुरा वृत्तं पूर्वचरितम् ॥ २ ॥

प्रवल्हिका प्रहेलिका ।

प्रवल्हते प्राधान्यं भजते प्रवल्हिका ॥ १ ॥ प्रहेलयति अभिप्रायं सूचयति प्रहेलिका । सा शाब्दी आर्थी च । शाब्दी यथा—

पयस्विनीनां धेनूनां ब्राह्मणः प्राप्य विंशतिम् ।
ताभ्योऽष्टादश विक्रीय गृहीत्वैकां गृहं गतः ॥ १ ॥

आर्थी यथा—

जइ सासुआइ भणिआ पियवासघरंमि दीवयं देसु ।

ता कीस मुद्धडमुहा हिअयंमि निवसये दिह्रिम् ॥ १ ॥

जनश्रुतिः किंवदन्ती

जनेभ्यः श्रूयते जनश्रुतिः ॥ १ ॥ किं वदति जनोऽत्र किंवदन्ती " तॄजि-भूवदि- " ॥ ( उणा-२२१ ) इति टिदन्तः, यद्वा, उद्यते वदन्तिः कथा "त्र्यवि-" ॥ ( उणा-६६५ ) ॥ इत्यन्तिः, कुत्सिता वदन्तिः इयां किंवदन्ती ॥ २ ॥

वार्तैतिह्यं पुरातनी ॥ १७३ ॥

पुरातनी वार्ता, इतिह इति निपातसमुदायः उपदेशपारम्पर्ये वर्तते, इतिह इत्येव ऐतिह्यम्, भेषजादित्वात् ट्यण् ॥ १ ॥ १७३ ॥

वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः

वृत्तिर्लोकवृत्तं अस्त्यस्यां वार्ता " प्रज्ञाश्रद्धाऽर्चावृत्तेर्णः " ॥ ७।२।३३। इति णः ॥ १ ॥ प्रवर्तते जनोऽनया प्रवृत्तिः ॥ २ ॥ वृत्तस्य आचरितस्यान्तोऽत्र वृत्तान्तः ॥ ३ ॥ उद्यते उदन्तः " सीमन्तहेमन्त-" ॥ ( उणा-२२२ ) इत्यादिशब्दाद् निपात्यते ॥ ४ ॥

अथाऽऽह्वयोऽभिधा ।

गोत्रसंज्ञानामधेयाऽऽख्याऽऽह्वाऽभिख्याश्च नाम च ॥१७४॥

आहूयतेऽनेन आह्वयः " ह्वः समाह्वयाह्वयौ द्यूतनाम्नोः " ॥ ५।३।४१ ॥ इति अलन्तो निपात्यते ॥ १ ॥ अभिधीयतेऽनया अभिधा ॥ २ ॥ गूयतेऽनेन गोत्रम् " हुयामा- " ॥ ( उणा-४५१ ) ॥ इति त्रः ॥ ३ ॥ संज्ञायतेऽनया संज्ञा ॥ ४ ॥ नाम एव नामधेयम् " नामरूपभागाद् धेयः " ॥७।२।१५८॥ इति धेयः ॥ ५ ॥ आख्यायतेऽनया आख्या ॥ ६ ॥ आहूयतेऽनया आह्वा ॥ ७ ॥ अभिख्यायतेऽनया अभिख्या ॥ ८ ॥ नमत्यनेन नाम, पुंक्लीबलिङ्गः " सात्मन्नात्मन्- " ॥ ( उणा-९१६ ) ॥ इति मनन्तो निपात्यते ॥ ९ ॥ १७४ ॥

संबोधनमामन्त्रणम्

संबोध्यतेऽनेन संबोधनम् ॥ १ ॥ आमन्त्र्यतेऽनेन आमन्त्रणम् ॥ २ ॥

आह्वानं त्वभिमन्त्रणम् ।

आकारणं हवो हूतिः

ह्वानं हवः, " भावेऽनुपसर्गाद् " ॥ ५।३।४५ ॥ इत्यल्, वश्चोत्वम् ॥५॥

षश्चात्र—हूतौ हक्कारकाऽऽकारौ ॥

संहूतिर्बहुभिः कृता ॥ १७५ ॥

बहुभिः कृता हूतिः संभूय ह्वानं संहूतिः, "महशाह्वया" इति भागुरिः ॥ १ ॥ १७५ ॥

उदाहार उपोद्घात उपन्यासश्च वाङ्मुखम् ।

उद्धृत्याह्रियते उदाहारः ॥ १ ॥ उप समीपे उद्धृत्य हन्यते उपोद्घातः, यदाह– "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते" ॥ २ ॥ उपन्यस्यते उपन्यासः ॥३॥ वाचो मुखं वाङ्मुखम्, वाक्प्रारम्भः ॥ ४ ॥

व्यवहारो विवादः स्यात्

व्यवहरणं व्यवहारः, यत् स्मृतिः–

वि नानाऽर्थेऽत्र सन्देहे हरणं हार उच्यते ।
नानासंदेहहरणाद् व्यवहारः प्रकीर्तितः ॥ १ ॥ १ ॥

विविधो वाद ऋणादानादिर्विवादः ॥ २ ॥

शपथः शपनं शपः ॥ १७६ ॥

शपनं शपथः "भृशीशपि-" ॥ ( उणा–२३२ ) ॥ इति अथः ॥ १ ॥ शपनं शपः "अः" ॥ ( उणा–२ ) ॥ इत्यः ॥ ३ ॥ १७६ ॥

उत्तरं तु प्रतिवचः

उत्तरन्ति अस्मात् उत्तरम्, उदो वा तरप् ॥ १ ॥ प्रतीपं वचः प्रतिवचः ॥२॥

प्रश्नः पृच्छाऽनुयोजनम् ।

कथंकथिकता च

प्रच्छनं प्रश्नः "यजिस्वपि-" ॥ ५।३।८५ ॥ इति नः ॥ १ ॥ पृच्छा, भिदादित्वात् ॥ २ ॥ अनुयुज्यते अनुयोजनम्, अनुयोगः, पर्यनुयोगश्च ॥ ३ ॥ [1]कथं कथकमिति जल्पोऽस्यामिति कथंकथिकता, मयूरव्यंसकादित्वात् साधुः ॥ ४ ॥

अथ देवप्रश्न उपश्रुतिः ॥ १७७ ॥

देवेभ्यः प्रश्नः देवप्रश्नः ॥१॥ उप समीपे श्रूयतेऽस्यां उपश्रुतिः ॥२॥१७७॥

चटु चाटु प्रियप्रायं

चटतीति चटु, चाटु, पुंक्लीबलिङ्गौ "मिवहिचरिचटिभ्यो वा" ॥ ( उणा–७२६) ॥ इति उर्वा णित् ॥ १ ॥ २ ॥ प्रियं प्रायेण बाहुल्येनाऽत्र प्रियप्रायम् ॥३॥

प्रियसत्यं तु सूनृतम् ।

---

१ कथं कथमिति पाठान्तरम् । श्रीवल्लभगणिकृतटीकायां तु–"कथं कथक ! हे वक्तः ! इति जल्पोऽस्याम्" इत्येवं व्युत्पादितम् ।

प्रियं च तत् सत्यं च प्रियसत्यं वचनम्, सुष्ठु नृत्यंति सतां मनोऽनेनेति सूनृतं, स्थादित्वात् के "घञ्युपसर्गस्य-" ॥ ३।२।८६ ॥ इति बाहुलकाद् दीर्घः ॥ १ ॥

सत्यं सम्यक् समीचीनमृतं तथ्यं यथातथम् ॥१७८॥
यथास्थितं च सद्भूते

सति साधु सत्यम् ॥ १ ॥ समञ्चति सम्यक्, क्विपि "सहसमः सध्रिसमी" ॥३।२।१२३॥ इति सम्यादेशः ॥२॥ सम्यगेव समीचीनम् "अदिक्स्त्रियां वाञ्चः"॥७।१।१०७॥ इतीनः ॥३॥ इयर्ति गच्छति जनः प्रत्ययमत्र ऋतम् "शीरी-" (उणा-२०१) ॥ इति तक् ॥ ४ ॥ तथा साधु तथ्यम् ॥ ५ ॥ यथावत् तथाऽत्र यथातथम् ॥६॥१७८॥ यथावत् स्थितमत्र यथास्थितम् ॥७॥ सच्च तद् भूतं च सद्भूतं तत्र ॥८॥

अलीके तु वितथानृते ।

अलति वारयति सद्गति अलीकम् "स्यमिकषि-"॥ ( उणा-४६ ) ॥ इतीकः, तत्र ॥ १ ॥ विगतं तथा सत्यमत्र वितथम् ॥ २ ॥ न ऋतं अनृतम्, यौगिकत्वात् असत्यम्, सत्येतरद् इत्यादि ॥ ३ ॥ मृषा मिथ्या वा अव्यये ॥

अथ क्लिष्टं संकुलं च परस्परपराहतम् ॥ १७९ ॥

क्लिष्टं संकुलं च अन्योऽन्यविरुद्धम्, यथा-

अन्धो मणिमुपाविध्यद् तमनङ्गुलिरासदत् ।
तमग्रीवः प्रत्यमुञ्चत् तमजिह्वोऽभ्यपूजयत् ॥ १ ॥ १ ॥ २ ॥ १७९ ॥

सान्त्वं सुमधुरं

सान्त्व्यतेऽनेन सान्त्वम्, सुष्ठु मधुरं सुमधुरम् ॥ १ ॥

ग्राम्यमश्लीलं

ग्रामे भवं ग्राम्यं, "ग्रामादीनञ् च" ॥ ६ । ३ । ९ ॥ इति यः ॥ १ ॥ न श्रियं लाति अश्लीलम्, न श्रीरस्यास्तीति वा, सिध्मादित्वाद् ले, ऋफिडादित्वाद् रस्य लः, तत्तु व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वेन त्रेधा । अलङ्कारकृतां तु ग्राम्यं अश्लीलं च पृथगेव ॥ २ ॥

म्लिष्टमस्फुटम् ।

म्लेच्छति स्म म्लिष्टम् "क्षुब्धविरिब्ध-" ॥४।४।७०॥ इति साधुः, अस्फुटं अस्पष्टम् ॥ १ ॥

लुप्तवर्णपदं ग्रस्तं

लुप्ता वर्णाः पदानि चात्र लुप्तवर्णपदम्, ग्रस्यते स्म ग्रस्तम् ॥ १ ॥ असंपूर्णो-च्चारितं ध्वस्तं लुप्तवर्णपदमित्यन्यः ॥

अवाच्यं स्यादनक्षरम् ॥ १८० ॥

विरोधे नञ् ॥ १ ॥ २ ॥ १८० ॥

अम्बूकृतं सथूत्कारे

अभिम्बुनो अम्बुनः करणं अम्बूकृतम् , सथूत्कारं मनिष्ठेवम् ॥ १ ॥

निरस्तं त्वरयोदितम् ।

निरस्यते स्म निरस्तम् ॥ १ ॥

आम्रेडितं द्विस्त्रिरुक्तं

आम्रेड्यते स्म आम्रेडितम्, द्वौ वारौ द्विः, त्रीन् वारान् त्रिः ॥ १ ॥

अबद्धं तु निरर्थकम् ॥ १८१ ॥

अबद्धं असंबद्धं, दशदाडिमादिवाक्यं समुदायार्थशून्यम् ॥ १ ॥ १८१ ॥

पृष्ठमांसादनं तद् यत् परोक्षे दोषकीर्तनम् ।

परोक्षे अप्रत्यक्षे दोषाणां कीर्तनं यत्, तत् पृष्ठमांसस्याऽदनमिव पृष्ठमांसादनम् ॥ १ ॥

मिथ्याऽभियोगोऽभ्याख्यानं

मिथ्याऽभियोगोऽसत्याक्षेपः, अभ्याख्यायत अभ्याख्यानम् ॥ १ ॥

संगतं हृदयङ्गमम् ॥ १८२ ॥

संगच्छते स्म संगतम् ॥ १ ॥ हृदयं गच्छति हृदयङ्गमम् "नाम्नो गमः-" ॥ ५।१।१३१॥ इति खः ॥ २ ॥ १८२ ॥

परुषं निष्ठुरं रूक्षं विक्रुष्टं

पृणाति पूरयति परं कोपेनेति परुषम् "ऋपॄनहि-"॥ (उणा–५५७) ॥ इत्युषः ॥ १ ॥ निशिते तिष्ठति निष्ठुरं "श्वशुरकुकुन्दुर-" ॥ (उणा–४२६) ॥ इत्युरान्तो निपात्यते ॥ २ ॥ रूक्षयति रूक्षम् ॥ ३ ॥ विकुश्यते विक्रुष्टम् ॥ ४ ॥

अथ घोषणा ।

उच्चैर्घुष्टं

घोषणं घोषणा "णिवेत्त्यास-" ॥५।३।१११॥ इति अनः ॥ १ ॥ उच्चैस्तरं यथा भवति घोषणं घुष्टं "घुषेरविशब्दे" ॥४।४।६८॥ इति नेट् ॥ २ ॥

वर्णनेडा स्तवः स्तोत्रं स्तुतिर्नुतिः ॥ १८३ ॥

श्लाघा प्रशंसाऽर्थवादः

स्तवनं स्तोत्रम् "त्रट्" ॥ (उणा-४४६) ॥ इति त्रट् ॥ ४ ॥ अर्थस्य प्रशस्यस्य वदनं अर्थवादः ॥ ५ ॥

सा तु मिथ्या विकत्थनम् ।

सा वर्णना, मिथ्या असत्यार्था, विरुद्धं कत्थनं विकत्थनम् ॥ १ ॥

जनप्रवादः कौलीनं विगानं वचनीयता ॥ १८४ ॥

जनस्य प्रलापो वादः जनप्रवादः ॥१॥ कुलस्य जल्पः कौलीनं "कुलाज्जल्पे" ॥७।१।८३॥ इति ईनञ् ॥ २ ॥ विरुद्धं गायनं विगानम् ॥ ३ ॥ वचनीयस्य भावो वचनीयता ॥ ४ ॥ १८४ ॥

स्यादवर्ण उपक्रोशो वादो निष्पर्यपात् परः ।
गर्हणा धिक्क्रिया निन्दा कुत्सा क्षेपो जुगुप्सनम् ॥१८५॥

विपरीतं वर्णनं अवर्णः ॥ १ ॥ उपक्रोशनं उपक्रोशः ॥ २ ॥ निरः, परेः, अपाच्चोपसर्गात् परो वादः निर्वादः, परिवादः, अपवादः ॥ ३ ॥ ४ ॥ ५ ॥ गर्हणं गर्हणा, गर्होऽपि ॥ ६ ॥ धिक्करणं धिक्क्रिया ॥ ७ ॥ निन्दनं निन्दा ॥ ८ ॥ कुत्सनं कुत्सा ॥ ९ ॥ क्षेपणं क्षेपः ॥ १० ॥ जुगुप्स्यते जुगुप्सनम्, जुगुप्साऽपि ॥ ११ ॥ १८५ ॥

आक्रोशाभीषङ्गाक्षेपाः शापः

आक्रोशनं आक्रोशः ॥ १ ॥ अभिषञ्जनं पराभिमुख्येन वाक्ययोजनं अभीषङ्गः "घञ्युपसर्गस्य बहुलम्" ॥३।२।८६॥ इति दीर्घः ॥ २ ॥ आक्षेपणं आक्षेपः ॥ ३ ॥ शपनं शापः ॥ ४ ॥

स क्षारणा रते

स शापः, रते मैथुनविषये, क्षारणा; मैथुनमुद्दिश्य गालीत्यर्थः । दूषणमित्येके । आक्षारणाऽपि ॥ १ ॥

विरुद्धशंसनं गालिः

विरुद्धं शंसनं अवद्योद्भावनम्, गालयते गुणान् गालिः स्त्रीलिङ्गः ॥ २ ॥

आशीर्मङ्गलशंसनम् ॥ १८६ ॥

आशासनं आशीः "आङः" ॥४।४।१२०॥ इति क्विपि इसादेशः, मङ्गलस्य शंसनं मङ्गलशंसनम् ॥ १ ॥ १८६ ॥

श्लोकः कीर्तिर्यशोऽभिख्या समाज्ञा

श्लोक्यते श्लोकः ॥ १ ॥ कीर्त्यते कीर्तिः "सातिहेतियूतिजूतिज्ञप्तिकीर्त्ति" ॥५।३।९४॥ इति साधुः ॥ २ ॥ अश्नुते व्याप्नोति दिशः यशः "अशेर्यश्चादिः" ॥

(उणा–९५८) ॥ इत्यस् ॥ ३ ॥ अभिख्यानं अभिख्या ॥ ४ ॥ समाज्ञायतेऽनया समाज्ञा, समाख्येति भागुरिः ॥ ५ ॥

रुशती पुनः ।

अशुभा वाक्

रुशति हिनस्ति परं रुशती हिंस्रा, आश्रयलिङ्गश्चायं, तेन रुशन् शब्दः, रुशद्वच इत्यपि; न शुभा अशुभा यथा– "न तां वदेद् रुशतीं पापलोक्याम्"। उशतीं इत्यन्ये ॥ १ ॥

शुभा कल्या

शुभा शुभात्मिका, कलासु साधुः कल्या, काव्या इति कात्याद्याः ॥ १ ॥

चर्चरी चर्भटी समे ॥ १८७ ॥

चारु चर्यतेऽनया चर्चरी ॥ १ ॥ चारु भव्यतेऽनया चर्भटी ॥ २ ॥ १८७ ॥

यः सनिन्द उपालम्भस्तत्र स्यात् परिभाषणम् ।

मैवं कुथा इति वाच्यत इत्यर्थः ॥ १ ॥

आपृच्छाऽऽलापः संभाषः

आप्रच्छनं आपृच्छा, भिदादित्वादङ् ॥ १ ॥ आलपनं आलापः ॥ २ ॥ संभाषणं संभाषः ॥ ३ ॥

अनुलापः स्याद् मुहुर्वचः ॥ १८८ ॥

मुहुर्वचनं पौनःपुन्येन उक्तिः ॥ १ ॥ १८८ ॥

अनर्थकं तु प्रलापः

अनर्थकं वचः, प्रलपनं प्रलापः ॥ १ ॥

विलापः परिदेवनम् ।

विलपनं विलापः, परिदेवनं उपशोचनमित्यर्थः ॥ १ ॥

उल्लापः काकुवाक्

उल्लपनं उल्लापः, काक्वा वचनं काकुवाक् ॥ १ ॥

अन्योऽन्योक्तिः संलापसंकथे ॥ १८९ ॥

अन्योऽन्येन उक्तिर्भाषणं अन्योऽन्योक्तिः, संमुखं लपनं संलापः ॥ १ ॥ संमुखं कथनं संकथा "भीषिभूषि–" ॥ ५ । ३ । १०९ ॥ इत्यङ् ॥ २ ॥ १८९ ॥

विप्रलापो विरुद्धोक्तिः

विरुद्धं प्रलपनं विप्रलापः ॥ १ ॥

अपलापस्तु निह्नवः ।

अपलपनं अपलापः ॥ १ ॥ निह्नवनं निह्नवः ॥ २ ॥

सुप्रलापः सुवचनं

सुष्ठु प्रलपनम् ॥ १ ॥

संदेशवाक् तु वाचिकम् ॥ १९० ॥

अन्येन अन्यो अन्यस्मै यदाह–त्वयैवं कर्तव्यमिति, स संदेशः, तद्रूपा वाक् संदेशवाक्, संदिष्टा वाग वाचिकं "वाच इकण्"॥७।२।१६८॥ इति स्वार्थे इकण् ॥ १ ॥ १९० ॥

आज्ञा शिष्टिर्निराङ्निभ्यो देशो नियोगशासने ।

अववादोऽपि

आज्ञापनं आज्ञा, चुरादिर्णिचोऽनित्यत्वात् " उपसर्गादातः " ॥५।३।११०॥ इत्यङ् ॥ १ ॥ शासनं शिष्टिः ॥ २ ॥ निरः, आङः, नेश्च परो देशः निःशेषेण, समन्तात्, नितरां देशनं निर्देशः, आदेशः, निदेशः ॥ ३ ॥ ४ ॥ ५ ॥ नियोजनं नियोगः ॥ ६ ॥ शिष्यते शासनम् ॥ ७ ॥ अवनम्य वदनं अववादः ॥ ८ ॥

अथाऽऽहूय प्रेषणं प्रतिशासनम् ॥ १९१ ॥

स्पष्टम् ॥ १ ॥ १९१ ॥

संवित् संधाऽऽस्थाभ्युपायः संप्रत्याङ्भ्यः परः श्रवः ।

अङ्गीकारोऽभ्युपगमः प्रतिज्ञाऽऽगूश्च संगरः ॥ १९२ ॥

पक्षोक्तिः प्रकृताङ्गीकारश्चेत्युभयी हि प्रतिज्ञा । संवेदनं संवित् ॥१॥ संधानं संधा ॥ २ ॥ आस्थानं आस्था ॥ ३ ॥ अभ्युपायनं अभ्युपायः ॥ ४ ॥ समः, प्रतेः, आङश्च परः श्रवः संश्रवः, प्रतिश्रवः, आश्रवः ॥ ५ ॥ ६ ॥ ७ ॥ अङ्गीकरणं अङ्गीकारः ॥ ८ ॥ अभ्युपगमनं अभ्युपगमः ॥ ९ ॥ प्रतिज्ञानं प्रतिज्ञा ॥ १० ॥ आगच्छत्यनया पौरुषं आगूः, स्त्रीलिङ्गः " भ्रमिगमितनिभ्यो डित्"॥ (उणा–८४३) ॥ इति ऊः ॥ ११ ॥ संगरणं संगरः ॥ १२ ॥ समाधिरपि ॥ १९२ ॥

गीतनृत्यवाद्यत्रयं नाट्यं तौर्यत्रिकं च तत् ।

गीतादित्रयं समुदितं नाट्यं नटस्य कर्म ॥१॥ तूर्यस्येदं त्रिप्रमाणं तौर्यत्रिकं ॥ २ ॥ वक्ष्यमाणं नाट्यं नटनमात्रम् ॥

संगीतं प्रेक्षणार्थेऽस्मिन्

अस्मिन् गीतनृत्तवाद्यत्रये प्रेक्षणनिमित्तं प्रयुक्ते संगीतं संभूय गीयतेऽस्मिन्निति कृत्वा ॥ १ ॥

शास्त्रोक्ते नाट्यधर्मिका ॥ १९३ ॥

अस्मिन् गीतादित्रये भरतादिशास्त्रनिर्दिष्टे नाट्यं धर्मोऽस्या नाट्यधर्मी, स्त्रीलिङ्गः, यद् वाचस्पतिः– "नाट्यधर्मी तु स्त्रियां नाट्ये यथाऽऽगमम्," नाट्यधर्म्येव नाट्यधर्मिका ॥ १ ॥ १९३ ॥

गीतं गानं गेयं गीतिर्गान्धर्वम्

गीयते गेयम् ॥ ३ ॥ गन्धर्वैः कृतं गान्धर्वम् ॥ ५ ॥ रागगीत्यादिकं गीतम्, प्रावेशिक्यादिध्रुवारूपं गानम्, पदस्वरतालावधानात्मकं गान्धर्वमिति भरताद्युक्तो विशेषो नाश्रितः ॥

अथ नर्तनम् ।

नटनं नृत्यं नृत्तं च लास्यं नाट्यं च ताण्डवम् ॥ १९४ ॥

नृत्यते नृत्यम् "ऋदुपान्त्या-"॥ ५ । १ । ४१ ॥ इति क्यप् ॥ ३ ॥ नर्तनं नृत्तं "क्लीबे क्तः" ॥ ५ । ३ । १२३ ॥ इति क्तः ॥ ४ ॥ लस्यते लास्यम् ॥ ५ ॥ नटानामिदं नृत्तं नाट्यम् "नटाद् नृत्ते ञ्यः" ॥ ६ । ३ । १६५ ॥ इति ञ्यः, नट्यत इति वा ॥ ६ ॥ तण्डुना कृतं ताण्डवं, पुंक्लीबलिङ्गः, नाट्यशास्त्रे नृत्तलास्यनाट्यताण्डवानां भेदोऽस्ति, स तु नेहादृतः, तथाहि–अङ्गविक्षेपमात्रं विवाहाभ्युदयादौ नृत्तम्, ललितकरणाङ्गहाराभिनयं कैशिकीवृत्तिप्रधानं वासकसज्जादिनायिकाचरितं डाम्बिलिकादिनिबद्धं श्लिष्टत्वाद् लास्यम्, सर्वरसं पञ्चसन्धि चतुर्वृत्ति दशरूपकाश्रयं नटकर्म नाट्यम्, उद्वृत्तकरणाङ्गहारनिर्वर्त्यमारभटिवृत्तिप्रधानं गीतकासारितकादौ तण्डुना प्रणीतं ताण्डवमिति ॥ ७ ॥ १९४ ॥

मण्डलेन तु यद् नृत्तं स्त्रीणां हल्लीसकं हि तत् ।

हेलया लस्यतेऽस्मिन् इति हल्लीसकम् "कीचकपेचक-" ॥ ( उणा–३३ )॥ इत्यादिना निपात्यते, क्लीबोऽयम्, वाचस्पतिस्तु- "हल्लीसकोऽस्त्रियाम्" इत्याह॥१॥

पानगोष्ठ्यामुच्चतालं

पानगोष्ठ्यां आपाने नृत्तं, उच्चस्तालोऽत्रेत्युच्चतालम् ॥ १ ॥

रणे वीरजयन्तिका ॥ १९५ ॥

रणे संग्रामे, नृत्तं, जयन्ती पताका, जयन्त्येव जयन्तिका, वीराणां जयन्तिकाऽत्र वीरजयन्तिका ॥ १ ॥ १९५ ॥

स्थानं नाट्यस्य रङ्गः स्यात्

स्थीयतेऽस्मिन्निति स्थानं प्रदेशः, नाट्यस्य नृत्तस्य, रमते जनोऽत्र रङ्गः "गम्यमि-" ॥ ( उणा-९२ ) ॥ इति गः, रजत्यऽस्मिन् जन इति वा ॥ १ ॥

पूर्वरङ्ग उपक्रमः ।

नाट्यस्य उपक्रमः प्रारम्भः, रजति अस्मिन् जन इति रङ्गो मण्डपो नाट्यं वा बुद्धिस्थम्, पूर्वो रङ्गे पूर्वरङ्गः प्रत्याहारादिः "नाम नाम्नैकार्थ्ये समासो बहुलम्" ॥ ३ । १ । १८ ॥ इति समासः, रङ्गात् पूर्व इति वा राजदन्तादित्वात् पूर्वनिपातः, श्रीहर्षस्तु—

रङ्गशब्देन तौर्यत्रिकं ब्रुवन् नाट्ये रङ्गप्रयोगस्य पूर्वतां मन्यमानः पूर्वश्चासौ रङ्गश्चेति समासममंस्त ॥ १ ॥

अङ्गहारोऽङ्गविक्षेपः

अङ्गानां हरणं स्थानात् स्थानान्तरनयनं अङ्गहारः अङ्गानां हार इव, शोभाजनकत्वात्, अथवा हरस्यायं हारो हरेणाभिनीतत्वात्, अङ्गप्रधानो हारः अङ्गहारः स्थिरहस्तादिर्द्वात्रिंशद्भेदः ॥ १ ॥ अङ्गानां विक्षेपः अङ्गविक्षेपः ॥ २ ॥

व्यञ्जकोऽभिनयः समौ ॥ १९६ ॥

व्यनक्ति भावान् व्यञ्जकः ॥ १ ॥ आभिमुख्यं नीयन्तेऽर्था अनेनेति अभिनयो भावसूचकः ॥ २ ॥ १९६ ॥

स चतुर्विध आहार्यो रचितो भूषणादिना ।
वचसा वाचिकोऽङ्गेनाऽऽङ्गिकः सत्त्वेन सात्त्विकः ॥ १९७ ॥

सोऽभिनय आहार्यादिभेदाच्चतुर्विधः, सत्त्वं मनो गुणो वा ॥ १९७ ॥

स्याद् नाटकं प्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥ १९८ ॥
अभिनेयप्रकाराः स्युः

नाटयति नर्तयति सामाजिकमनांसि इति नाटकम् ॥ १ ॥ वस्त्वादिकं काव्याभिधेयं आत्मशक्त्योत्पाद्य प्रकुरुते यत्र काव्येन तत् प्रकरणम् ॥ १ ॥ एकमुखेनैव भण्यन्ते उक्तिमन्तः क्रियन्ते अप्रविष्टा अपि पात्रविशेषा अत्रेति भाणः, पुंक्लीबलिङ्गः ॥ १ ॥ एकस्य बहूनां वा चरितं प्रहस्यते यत्र तत् प्रहसनम् ॥ १ ॥ डिमो डिम्बो विद्रव इति पर्यायास्तद्योगाद् अयं डिमः ॥ १ ॥ व्यायामे युद्धनियुद्धप्राये युज्यन्ते पुरुषा अत्र व्यायोगः ॥ १ ॥ समवक्रियन्ते संघातीक्रियन्ते नेतारोऽत्र समवकारः ॥ १ ॥ सर्वेषां रसानां लक्षणानां च वीथी श्रेणीव वीथी ॥१॥ उत्क्रमणोन्मुखी सृष्टिर्जीवितं प्राणा यासां ता उत्सृष्टिकाः शोचन्त्यः स्त्रियः, ता-

भिरङ्कोऽङ्कनं यस्य स उत्सृष्टिकाङ्कः, तदेकदेशो अङ्कः, भीमवत् ॥ १ ॥ ईहा चेष्टा मृगस्येव, स्त्रीमात्रार्था यत्र स ईहामृगः ॥ १ ॥ १९८ ॥ एतेऽभिनेयस्य प्रबन्धस्य प्रकारा भेदाः स्युः ॥

भाषाः षट् संस्कृतादिकाः ।

भाष्यन्ते भाषाः, संस्कृत–प्राकृत–मागधी–शौरसेनी--पैशाच्यऽपभ्रंशलक्षणाः ॥

भारती सात्वती कैशिक्यारभट्यौ च वृत्तयः ॥ १९९ ॥

भारती वाक् तत्प्रधाना वृत्तिरपि भारती, तत्र वाचिकाभिनयप्राधान्यात् ॥ १ ॥ सदिति प्रत्याख्यानरूपं संवेदनं तद् यत्रास्ति तत् सत्वत् मनः तस्येयं सात्वती, सात्त्विकाभिनयप्राधान्यात्; अथवा सत् सत्त्वरूपं विद्यते येषां ते सत्वन्तः तेषामियं, सत्त्वं च तत्र परच्छिद्रान्वेषणोपायप्रतिभानवैचित्र्योत्प्रेक्षणलक्षणप्रकाशलाघवात्मकम् ॥ १ ॥ केशाः किंचिदप्यर्थक्रियाजातमकुर्वन्तो यथा देहशोभोपयोगिनः, तद्वत् सौन्दर्योपयोगी व्यापारः कैशिकी, आहार्याभिनयप्राधान्यात्; यद्वा, विष्णोः केशेषु बध्यमानेषु भवा कैशिकी, अध्यात्मादित्वादिकण्; यदाह—

विचित्रैरङ्गहारैश्च देवो लीलासमन्वितैः ।
बबन्ध यच्छिखापाशं कैशिकी तत्र निर्मिता ॥ १ ॥ इति ॥ १ ॥

इयूतीति अरा भटाः सोत्साहा अनलसास्तेषामियं आरभटी, आङ्गिकाभिनयप्राधान्यात् ॥ १ ॥ १९९ ॥

वाद्यं वादित्रमातोद्यं तूर्यं तूरं स्मरध्वजः ।

वाद्यते वाद्यम् "य एचातः" ॥ ५ । १ । २८ ॥ इति यः ॥ १ ॥ वदति आहन्यमानं वादित्रम् "भूगॄवदिचरिभ्यो णित्" ॥ ( उणा--४६० ) ॥ इति इत्रः ॥ २ ॥ आतुद्यते आतोद्यम् ॥ ३ ॥ तूर्यत इति घ्याणि तूर्यं, पुंक्लीबलिङ्गः ॥ ४ ॥ तूर्यते तूरम् "नाम्युपान्त्य-" ॥ ५ । १ । ५४ ॥ इति कः ॥ ५ ॥ स्मरस्य ध्वज इव स्मरध्वजः ॥ ६ ॥

ततं वीणाप्रभृतिकं

तन्त्रीतननात् ततं, प्रभृतिशब्दात् सैरन्ध्रीरावणहस्तकिन्नरादि ॥ १ ॥

तालप्रभृतिकं घनम् ॥ २०० ॥

कांस्यमयं वादित्रं तालः, प्रभृतिग्रहणात् कांस्यतालादि, हन्यते घनम् ॥ १ ॥ ॥ २०० ॥

वंशादिकं तु शुषिरं

आदिग्रहणाद् नालिकानलकादि, शुषिश्छिद्रं विद्यतेऽस्य शुषिरम् ॥ १ ॥

आनद्धं मुरजादिकम् ।

आनह्यते स्म आनद्धम्, अवनद्धं चः आदिशब्दाद् दर्दरकरटादि ॥ १ ॥

वीणा पुनर्घोषवती विपञ्ची कण्ठकूणिका ॥ २०१ ॥

वल्लकी

वेति प्रजायते स्वरोऽस्यां वीणा " घृवीह्वा- " ॥ ( उणा–१८३ ) ॥ इति किद् णः ॥ १ ॥ घोषोऽस्त्यस्यां घोषवती ॥ २ ॥ विपञ्चयति विस्तारयति स्वरान् विपञ्ची ॥ ३ ॥ कण्ठं कूणयते कण्ठकूणिका ॥ ४ ॥ २०१ ॥ वल्लते स्वरोऽस्यां वल्लकी " दृकॄनृ- " ॥ ( उणा–२७ ) ॥ इत्यकः ॥ ५ ॥

साऽथ तन्त्रीभिः सप्तभिः परिवादिनी ।

स्वरान् परिस्फुटं वदत्येवंशीला परिवादिनी ॥ १ ॥

शिवस्य वीणाऽनालम्बी

न आलम्बते अनालम्बी ॥ १ ॥

सरस्वत्यास्तु कच्छपी ॥ २०२ ॥

कच्छपसदृशत्वात् कच्छपी ॥ १ ॥ २०२ ॥

नारदस्य तु महती

महत्त्वाद् महती ॥ १ ॥

गणानां तु प्रभावती ।

प्रभाऽस्त्यस्यां प्रभावती ॥ १ ॥

विश्वावसोस्तु बृहती

बृहत्त्वात् बृहती ॥ १ ॥

तुम्बुरोस्तु कलावती ॥ २०३ ॥

कलाऽस्त्यस्यां कलावती ॥ १ ॥ २०३ ॥

चण्डालानां तु कटोलवीणा चाण्डालिका च सा ।

कट्यते तन्त्रीभिराव्रियते कटोलः " कटिपटि- " ॥ ( उणा–४९३ ) ॥ इत्योलः, कटोलाख्या वीणा कटोलवीणा ॥ १ ॥ चण्डालैः कृता चाण्डालिका " कुलालादेरकञ् " ॥ ६।३।१९४ ॥ इत्यकञ् ॥ २ ॥

शेषश्चात्र—

चण्डालानां तु वल्लकी ।

काण्डवीणा कुवीणा च डक्कारी किनरी तथा ।
सारिका खुङ्कणी च

काय: कोलम्बकस्तस्या:

तस्या वीणाया: शरीरं, केऽवलम्बन्ते तन्त्र्योऽत्रेति कोलम्बक:, पृषोदरादित्वात्, कुल संस्त्याने अस्मादम्बकच् इत्येके ॥ १ ॥

उपनाहो निबन्धनम् ॥ २०४ ॥

वीणाया निबन्धनं येन चर्मणोपनह्यते स उपनाह:, प्रान्ते यत्र तन्त्र्यो निबध्यन्ते वा ॥ १ ॥ २०४ ॥

दण्ड: पुन: प्रवाल: स्यात्

वीणाया दण्ड:, प्रवलति प्रवाल:, पुंक्लीबलिङ्ग:, ज्वलादित्वाद् ण:। यच्छाश्वत:--"प्रवालो वल्लकीदण्डे विद्रुमे नवपल्लवे" ॥ १ ॥

ककुभस्तु प्रसेवक: ।

कक्यते ककुभ: "ककेरुभ:" ॥ (उणा--३३३) ॥ इत्युभ:, दण्डाध: शब्दगाम्भीर्यार्थं दारुमयं खण्डं यद् भस्त्रया आच्छाद्यते ॥ १ ॥ प्रसीव्यते प्रसेव:, स्वार्थे के, प्रसेवक: ॥ २ ॥

मूले वंशशलाका स्यात् कलिका कूणिकाऽपि च ॥२०५॥

वीणाया मूले कलयति तन्त्रीं कलिका ॥ १ ॥ कूणयते तन्त्रीं कूणिका ॥ २ ॥ २०५ ॥

कालस्य क्रियया मानं ताल:

क्रियया आवापनिष्क्रमणादिकया कालस्य मानं परिच्छेदकं तल्यते प्रतिष्ठीयतेऽनेन ताल: चच्चत्पुटादि: । गेयाया गानक्रियाया: काले नियमहेतुरित्येके । यद् दन्तिल:—

तत्र ज्ञेया: कलापाता: पादभागास्तथैव च ।
मात्रा च परिवर्तश्च वस्तु चैव विशेषत: ॥ १ ॥ १ ॥

साम्यं पुनर्लय: ।

मानमेययोरन्यूनाधिक्ये श्लिष्टता लय: द्रुतादि: वाद्यादीनामन्योन्यं समत्वमिति यावत्, तालविशेषस्तु लयोऽन्य: ॥ १ ॥

द्रुतं विलम्बितं मध्यमोघस्तत्त्वं घनं क्रमात् ॥ २०६ ॥

द्रुतादीनां लयानां मोघाद्या: क्रमेण पर्याया:, भागुरिस्तु घनस्थानेऽनुगतमित्याह, यत्पाठ:– "लम्बितद्रुतमध्यानि तत्त्वौघानुगतानि तु । अभिधानकृतामेष •

मर्यः " ॥ नाट्ये तु द्रुतादिलयानुसारेण क्रमादोघाद्याः वाद्यप्रकाराः ॥ १ ॥-
॥ १ ॥ २०६ ॥

मृदङ्गो मुरजः

मृद् अङ्गमस्य मृदङ्गः, मृद्यत इति वा " विडिविलि- " ॥ ( उणा-१०१ ) इत्यङ्गक् ॥ १ ॥ मुरात् संवेष्टनाज्जातो मुरजः, मूर्व्यते वध्यत इति वा " मुर्वे-र् च " ॥ ( उणा-१३२ ) इत्यजः ॥ २ ॥

सोऽङ्क्यालिङ्ग्यूर्ध्वक इति त्रिधा ।

स मृदङ्गः, त्रिधा त्रिप्रकारः, अङ्कोऽस्यास्तीति अङ्की, उत्सङ्गस्थत्वात् ॥ १ ॥ आलिङ्गोऽस्यास्तीति आलिङ्गी, आलिङ्ग्य वादनात् ॥ १ ॥ ऊर्ध्वं कृत्वैकेन मुखेन वादनाद् ऊर्ध्वं कायति ऊर्ध्वकः आभोगिकाख्यः ॥ १ ॥ आहुश्च-

हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वकः ।
आलिङ्ग्यश्चैव गोपुच्छो मध्यदक्षिणवामगाः ॥ १ ॥

नाट्ये चैते भेदाः ॥

स्याद् यशःपटहो ढक्का

यात्रादौ यशोऽर्थं पटहो यशःपटहः ॥१॥ ढगित्यव्यक्तं कायति ढक्का ॥२॥

भेरी दुन्दुभिरानकः ॥ २०७ ॥

पटहः

बिभ्यति अस्या रणे, भेरी " भीवृधि- " ॥ ( उणा-३८७ ) इति रः, इकारान्ताद् वा ङीः, ॥ १ ॥ दाम्यति शब्दोऽन्येषामत्र दुन्दुभिः, पुंलिङ्गः " दमेर्दुभिर्दुम् च " ॥ ( उणा-६८६ ) ॥ इति साधुः, दुन्दुशब्देन भाति भाययतीति वा ॥ २ ॥ अणति शब्दायते आनकः " अणेर्डित् " ॥ ( उणा-७२ ) ॥ इति आनकः, पुंलिङ्गः, वाचस्पतिस्तु- " पटहस्त्वानकोऽस्त्रियाम् " इत्याह । आ अनितीति वा ॥ ३ ॥ २०७ ॥ पटन्ति हर्षं गच्छन्ति अत्र पटहः, पुंक्लीबलिङ्गः " कृपृकटिपटि- " ॥ ( उणा-५८९ ) ॥ इत्यहः, पटे हन्यत इति वा पटहः । केचिद् द्वौ द्वौ भिन्नार्थौ आहुः; वाद्यविशेषः ॥ ४ ॥

शेषश्चात्र-

अथ दर्दरे कलशीमुखः ।
सूत्रकोणो डमरुकं समौ पणवकिङ्कणौ ।
शृङ्गवाद्ये शृङ्गमुखं हुडुक्कस्तालमर्दकः ॥ १ ॥
काहला तु कुहाला स्यात् चण्डकोलाहला च सा
संवेशप्रतिबोधार्थं द्रगडद्रकटावुभौ ॥ २ ॥

देवताऽर्चनतूर्ये तु धूमलो बलिरित्यपि
क्षुण्णकं मृतयात्रायां माङ्गले प्रियवादि
रणोद्यमे त्वर्धतूरो वाद्यभेदास्तथाऽपरे ।
डिण्डिमो झर्झरो मड्डुस्तिमिला किरिकिचिका ॥ ४ ॥
लम्बिका टट्टरी वेध्या कलापूरादयोऽपि च ॥

**अथ शारिका स्यात् कोणो वीणादिवादनम् ।**

शृणाति ताडयति वाद्यं शारिका ॥ १ ॥ कुणति शब्दायते वाद्यमनेन कोणः पुंलिङ्गः, वाचस्पतिस्तु– " द्वयोस्तु कोणो वीणादेर्वादने शारिका च सा " इत्याह ॥ २ ॥ वीणादि वाद्यतेऽनेन वीणादिवादनं वादनकाष्ठमित्यर्थः ॥

**शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ॥२०८॥**

**बीभत्साद्भुतशान्ताश्च रसाः**

श्रयति एनं जनः शृङ्गारः, पुंक्लीबलिङ्गः " द्वारशृङ्गार- " ॥ (उणा–४११) ॥ इत्यारान्तो निपात्यते, रसेषु शृङ्गमुत्कर्षमियर्तीति वा ॥ १ ॥ हासे साधुः हास्यः हास एव वा, सामाजिकानां चर्वणागोचरं गतो हास्यः, यदाह– " स्थाय्येव तु रसीभवेत् " इति ॥ १ ॥ किरति विक्षिपति चित्तानि इति करुणः " ऋकृवृधृदारिभ्य उणः " ॥ ( उणा–१९६ ) ॥ इत्युणः ॥ १ ॥ रुद्रस्यायं रौद्रः ॥ १ ॥ अजति गच्छत्यनेन अस्मिन् वा सत्त्ववृद्धिमिति वीरः "ऋज्यजि-" ॥ (उणा–३८८) ॥ इति रक्, वीरयन्ते विक्रामन्ति जना अनेनेति वा ॥ १ ॥ बिभ्यत्यस्माद् भयानको व्याघ्रादिः, तद्धेतुकत्वात् तु रसः " शीभीराजेश्चानकः " ॥ ( उणा–७१ ) ॥ इत्यानकः ॥१॥२०८॥ बीभत्सा अस्त्यस्मिन् बीभत्सः ॥१॥ अद् इत्याश्चर्यार्थमव्ययम्, अद् विस्मितं भवति अनेनास्मिन् वा मनोऽद्भुतः " अदो भुवो डुतः " ॥ ( उणा--२१४ ) ॥ इति डुतः ॥ १ ॥ शम्यते स्म शान्तः " णौ दान्त-" ॥ ४ । ४ । ७४ ॥ इति साधुः ॥ १ ॥ हास्यादयस्तु पुंलिङ्गाः । गौडस्तु—

" शृङ्गारवीरौ बीभत्सं रौद्रं हास्यं भयानकम् ।
करुणा चाद्भुतं शान्तं वात्सल्यं च रसा दश ॥ १ ॥

इति लिङ्गनिर्णयमाह । सामाजिकै रस्यन्ते चर्व्यन्ते इति रसाः, पुंक्लीबलिङ्गः ॥

**भावाः पुनस्त्रिधा**

**स्थायिसात्त्विकसंचारिप्रभेदैः**

भावयन्ति कुर्वन्ति रसान्, स्वकारणाद् भवन्ति इति वा भावाः, भावयन्ति व्याप्नुवन्ति सामाजिकानां मनांसीति वा, त्रिधा त्रिप्रकाराः, सामाजिकानां वासनारूपेण तिष्ठन्तीति स्थायिनः; ग्रहादित्वाद् णिन् । सीदत्यस्मिन् मन इति व्युत्पत्तेः सत्त्वगुणो-

हर्षात् साधुत्वाच्च प्राणात्मकं वस्तु सत्त्वं, तत्र भवाः सात्त्विकाः। संचरन्ति न सतत-
वतिष्ठन्त इति संचारिणो व्यभिचारिणः ते च ते प्रभेदाश्च तैः ॥

स्याद् रतिः पुनः ॥ २०९ ॥

रागोऽनुरागोऽनुरतिः

रमणं रतिः परस्परास्थाबन्धः ॥१॥२०९॥ रञ्जनं रागः ॥२॥ अनुरञ्जनम-
रागः ॥ ३ ॥ अनुरमणं अनुरतिः ॥ ४ ॥

हासस्तु हसनं हसः ।

घर्घरो हासिका हास्यं

हसनं हासः ॥ १ ॥ हस्यते हसनम् ॥ २ ॥ हसश्चेतसो विकाशः "नवा
णयमहसस्वनः" ॥ ५ । ३ । ४८ ॥ इति वा अल् ॥ ३ ॥ घरति घर्घरः
घोषा अव्यक्तवाक् "ऋतष्ठित्" ॥ (उणा–९) ॥ इति बहुलाधिकारादप्रत्यये
द्वित्वं च, घर्घरहेतुत्वात् घर्घरः ॥ ४ ॥ हसनं हासिका "भावे" ॥ ५।३।१२२ ॥
ति णकः ॥ ५ ॥ हसनीयं हास्यम् ॥ ६ ॥ स्थाय्येव तु रसीभवेदिति भावर-
योः पर्यायत्वेन ध्वनति ॥

हासभेदानाह—

तत्रादृष्टरदे स्मितम् ॥ २१० ॥

वक्रोष्ठिका

तत्र हासेऽदृष्टदन्ते ईषद्धसितं स्मितम् ॥१॥२१०॥ वक्र ओष्ठोऽस्यां वक्रोष्ठी,
स्वार्थे के, वक्रोष्ठिका, स्त्रीक्लीबलिङ्गः ॥ २ ॥

अथ हसितं किञ्चिद् दृष्टरदाङ्कुरे ।

स्पष्टम् ॥ १ ॥

किञ्चिच्छ्रुते विहसितम्

सशब्दत्वात् किञ्चित् श्रुते हासे विहसितम् । यद् भरतः—

आकुञ्चिताक्षिगण्डं यत् सस्वनं मधुरं तथा ।
कालागतं साऽऽस्यरागं तद्वै विहसितं भवेत् ॥ १ ॥ १ ॥

अट्टहासो महीयसि ॥ २११ ॥

महाशब्दत्वात् महीयसि हासे अट्टेति हसनं अट्टहासः ॥ १ ॥ २११ ॥

अतिहासस्त्वनुस्यूते

अनुस्यूतेऽनवच्छिन्ने हासेऽतिशयेन हसनादतिहासः ॥ १ ॥

अपहासोऽकारणात् कृते ।

कारणं विना कृते हासे, अपकृष्टं हसितं अपहासः ॥ १ ॥

सोत्प्रासे त्वाच्छुरितकम्

उत्प्रास्यते सामर्षोऽन्यः क्रियतेऽनेनोत्प्रास उपहासः, उत्प्राससहिते हासे च्छुरणमाच्छुरितकम्; "परच्छेदनं अवच्छुरितम्" इति कात्यः ॥ १ ॥

हसनं स्फुरदोष्ठके ॥ २१२ ॥

स्पष्टम् ॥ २१२ ॥

शोकः शुक् शोचनं खेदः

शोको वैधुर्यम् ॥ १ ॥ शुक्, स्त्रीलिङ्गः ॥ २ ॥ खेदनं खेदः ॥ ४ ॥

क्रोधो मन्युः क्रुधा रुषा ।

क्रुत् कोपः प्रतिघो रोषो रुट् च

क्रोधस्तैक्ष्ण्यप्रबोधः ॥ १ ॥ मन्यते मन्युः, पुंलिङ्गः "यजिशुन्धि-" ॥ (उणा--८०१) ॥ इति युः ॥२॥ क्रोधनं क्रुधा ॥३॥ रोषणं रुषा, भिदाद्यङ् ॥४॥ क्रोधनं क्रुत्, स्त्रीलिङ्गः ॥ ५ ॥ कोपनं कोपः ॥ ६ ॥ प्रतिहन्यते अनेन प्रतिघः "क्वचित्" ॥ ५ । १ । १७१ ॥ इति डे, मेघादित्वात् साधुः ॥ ७ ॥ रोषणं रोषः ॥ ८ ॥ रुट्, स्त्रीलिङ्गः ॥ ९ ॥

उत्साहः प्रगल्भता ॥ २१३ ॥

अभियोगोद्यमौ प्रौढिरुद्योगः कियदेतिका ।

अध्यवसाय ऊर्जः

उत्सहनं उत्साहः, स्थेयान् संरम्भः ॥१॥ प्रगल्भस्य भावः प्रगल्भता॥२॥२१३॥ अभियोजनं अभियोगः ॥ ३ ॥ उद्यमनमुद्यमः, पुंनपुंसकः, घञि "उद्यमोपरमौ" ॥ ४ । ३ । ५७ ॥ इति साधुः ॥ ४ ॥ प्रवहणं प्रौढिः "प्रस्यैषैष्योढोढ्यूहे स्वरेण" ॥ १ । २ । १४ ॥ इति औत्वम् ॥ ५ ॥ उद्योजनं उद्योगः ॥ ६ ॥ कियदेतत् इति अभिप्रायोऽस्यां कियदेतिका, मयूरव्यंसकादित्वात् साधुः ॥ ७ ॥ अध्यवसीयते अध्यवसायः ॥ ८ ॥ ऊर्जनं ऊर्जः ॥ ९ ॥

अथ वीर्यं सोऽतिशयान्वितः ॥ २१४ ॥

स उत्साहः सातिशयो वीरे साधु वीर्यम्; वीर्यते विक्रम्यत इति वा, भावे यः, वीरस्य कर्म इत्यन्ये ॥ १ ॥ २१४ ॥

भयं भीर्भीतिरातङ्क आशङ्का साध्वसं दरः ।

भिया च

भीतिर्भयं वैक्लव्यं "वर्षादयः क्लीबे" ॥ ५ । ३ । २९ ॥ इति अल् ॥ १ ॥ भीः, स्त्रीलिङ्गः ॥ २ ॥ आतङ्कनं आतङ्कः ॥ ४ ॥ आशङ्कनं आशङ्का ॥ ५ ॥ साधूनस्यति साध्वसम् ॥ ६ ॥ दरणं दरः, पुंक्लीबलिङ्गः ॥ ७ ॥ भिया भिदादित्वात् ॥ ८ ॥

तच्चाहिभयं भूपतीनां स्वपक्षजम् ॥ २१५ ॥

तच्चेति भयं स्वपक्षात् राजपुत्रादेरहेरिव गृहस्थितात् भयम् ॥ १ ॥ २१५ ॥

अदृष्टं वह्नितोयादेः

वह्नितोयाभ्यां आदिशब्दात् पिशाचाऽशन्यादेर्भयमदृष्टम् ॥ १ ॥

दृष्टं स्वपरचक्रजम् ।

स्वराष्ट्राच्चौराटविकादिभयं परराष्ट्रात् दाहविलोपादिभयं च दृष्टम् ॥ १ ॥

भयङ्करं प्रतिभयं भीमं भीष्मं भयानकम् ॥ २१६ ॥
भीषणं भैरवं घोरं दारुणं च भयावहम् ।

भयं करोतीति भयङ्करं "मेघर्त्तिभयाभयात् खः" ॥ ५।१।१०६ ॥ इति खः ॥ १ ॥ प्रतिगतं भयेनेति प्रतिभयम् ॥ २ ॥ बिभ्यत्यस्माद् भीमं, भीष्मं च "भियः षोऽन्तश्च वा" ॥ ( उणा–३४४ ) ॥ इति मक् ॥ ३ ॥ ४ ॥ बिभ्यत्यस्माद् भयानकम् ॥ ५ ॥ २१६ ॥ भीषयते भीषणम् ॥ ६ ॥ बिभ्यत्यस्माद् भैरवम् "कैरवभैरव-" ॥ ( उणा–५१९ ) ॥ इति साधुः, भीरोरिदं त्रासकृदिति वा ॥ ७ ॥ घुरत्यस्माद् घञि, घोरम् ॥ ८ ॥ दारयति चित्तं दारुणं "कृकॄ-" ॥ (उणा–१९६) ॥ इत्युणः ॥ ९ ॥ भयमावहति भयावहम्, लिहादित्वादच् ॥१०॥

शेषश्चात्र–भयङ्करे तु डमरमाभीलं भासुरं तथा ॥

जुगुप्सा तु घृणा

जुगुप्सनं जुगुप्सा, चित्तसंकोचः ॥१॥ घरति घृणा "घृवीह्वा-" ॥ (उणा–१८३ ) ॥ इति णक् ॥ २ ॥

अथ स्याद् विस्मयश्चित्रमद्भुतम् ॥ २१७ ॥
चोद्याश्चर्ये

विस्मयनं विस्मयः, चेतसो विस्तारः ॥ १ ॥ चीयते चित्रं "चिमिदि-" ॥ ( उणा–४५४ ) ॥ इति त्रक्, चित्रयति वैचित्र्यं संपादयतीति वा अच् ॥ २ ॥ अद् भवनं अद्भुतम् ॥ ३ ॥ २१७ ॥ चोद्यत इति चोद्यम् ॥ ४ ॥ आचर्यते आश्चर्यम्, वर्चस्कादित्वात् साधुः ॥ ५ ॥

शेषश्चात्र–आश्चर्ये फुल्लकं मोहो वीक्ष्यम् ॥

**शमः शान्तिः शमथोपशमावपि ।**

**तृष्णाक्षयः**

शमनं शमः, शान्तिः ॥ १ ॥ २ ॥ शमथः “ भृशीशापिशमि-” ॥ ( उणा–२३२ ) ॥ इति अथः ॥ ३ ॥ उपशमनमुपशमः ॥ ४ ॥ तृष्णाया गर्द्धस्य क्षयः तृष्णाक्षयः ॥ ५ ॥

स्थायिनामुपसंहारमाह—

**स्थायिनोऽमी रसानां कारणं क्रमात् ॥ २१८ ॥**

अमी रत्यादयः स्थायिनः शृङ्गारादीनां रसानां कारणभूताः ॥ २१८ ॥

**स्तम्भो जाड्यम्**

स्तम्भनं स्तम्भः ॥ १ ॥ जडस्य भावो जाड्यम्, विष्टब्धचेतनत्वम् ॥ २ ॥

**स्वेदो घर्मनिदाघौ**

स्वेदनं स्वेदः ॥ १ ॥ घरति सिञ्चत्यङ्गं घर्मः, “ अर्त्तीरि-” ॥ ( उणा–३३८ ) ॥ इति मः ॥ २ ॥ निदह्यतेऽनेनाङ्गं निदाघः ॥ ३ ॥

**पुलकः पुनः ।**
**रोमाञ्चः कण्टको रोमविकारो रोमहर्षणम् ॥ २१९ ॥**
**रोमोद्गम उद्धुषणमुल्लकसनमित्यपि ।**

पोलति महद् भवत्यङ्गमनेन पुलकः, पुंक्लीबलिङ्गः, “ धुधून्दि-” ॥ (उणा–२९ ) ॥ इत्यकः ॥ १ ॥ रोम्णामञ्चनं रोमाञ्चः ॥ २ ॥ कण्टतीति कण्टकः तरुरोम “ दृकृनॄ-” ॥ ( उणा–२७ ) ॥ इत्यकः, कण्टकतुल्यत्वात् कण्टकः, पुंक्लीबलिङ्गः ॥ ३ ॥ रोमाणि विक्रियन्तेऽनेन रोमविकारः ॥ ४ ॥ रोमाणि हृष्यन्त्यनेन रोमहर्षणम् ॥ ५ ॥ २१९ ॥ रोमाण्युद्गच्छन्त्यनेन रोमोद्गमः ॥ ६ ॥ उद्धुषत्युच्छ्वासित्यनेनाङ्गमुद्धुषणम् ॥ ७ ॥ उल्लकसत्यनेनाङ्गमुल्लकसनम् ॥ ८ ॥

**स्वरभेदस्तु कलत्वं स्वरे**

स्वरस्य भेदः स्वरभेदः कलत्वमव्यक्तत्वं स्वरे स्वरविषये ॥ १ ॥

**कम्पस्तु वेपथुः ॥ २२० ॥**

कम्पनं कम्पः ॥१॥ वेपनं वेपथुः, पुंलिङ्गः “ ट्वितोऽथुः ” ॥ ५।३।८३ ॥ इत्यथुः ॥ २ ॥ २२० ॥

**वैवर्ण्यं कालिका**

भिया च

भीतिर्भयं वैक्लव्यं "वर्षादयः क्लीबे" ॥ ५ । ३ । २९ ॥ इति अल् ॥ १ ॥ भीः, स्त्रीलिङ्गः ॥ २ ॥ आतङ्कनं आतङ्कः ॥ ४ ॥ आशङ्कनं आशङ्का ॥ ५ ॥ साधूनस्यति साध्वसम् ॥ ६ ॥ दरणं दरः, पुंक्लीबलिङ्गः ॥ ७ ॥ भिया भिदादित्वात् ॥ ८ ॥

तच्चाहिभयं भूपतीनां स्वपक्षजम् ॥ २१५ ॥

तच्चेति भयं स्वपक्षात् राजपुत्रादेरहेरिव गृहस्थितात् भयम् ॥ १ ॥ २१५ ॥

अदृष्टं वह्नितोयादेः

वह्नितोयाभ्यां आदिशब्दात् पिशाचाऽशन्यादेर्भयमदृष्टम् ॥ १ ॥

दृष्टं स्वपरचक्रजम् ।

स्वराष्ट्राच्चौराटविकादिभयं परराष्ट्रात् दाहविलोपादिभयं च दृष्टम् ॥ १ ॥

भयङ्करं प्रतिभयं भीमं भीष्मं भयानकम् ॥ २१६ ॥
भीषणं भैरवं घोरं दारुणं च भयावहम् ।

भयं करोतीति भयङ्करं "मेघर्त्तिभयाभयात् खः" ॥ ५।१।१०६ ॥ इति खः ॥ १ ॥ प्रतिगतं भयेनेति प्रतिभयम् ॥ २ ॥ बिभ्यत्यस्माद् भीमं, भीष्मं च "भियः षोऽन्तश्च वा" ॥ ( उणा-३४४ ) ॥ इति मक् ॥ ३ ॥ ४ ॥ बिभ्यत्यस्माद् भयानकम् ॥ ५ ॥ २१६ ॥ भीषयते भीषणम् ॥ ६ ॥ बिभ्यत्यस्माद् भैरवम् "कैरवभैरव-" ॥ ( उणा-५१९ ) ॥ इति साधुः, भीरोरिदं त्रासकृदिति वा ॥ ७ ॥ घुरत्यस्माद् घञि, घोरम् ॥ ८ ॥ दारयति चित्तं दारुणं "ऋकृ-" ॥ (उणा-१९६) ॥ इत्युणः ॥ ९ ॥ भयमावहति भयावहम्, लिहादित्वादच् ॥१०॥

शेषश्चात्र-भयङ्करे तु डमरमाभीलं भासुरं तथा ॥

जुगुप्सा तु घृणा

जुगुप्सनं जुगुप्सा, चित्तसंकोचः ॥१॥ घरति घृणा "घृवीह्वा-" ॥ (उणा-१८३ ) ॥ इति णक् ॥ २ ॥

अथ स्याद् विस्मयश्चित्रमद्भुतम् ॥ २१७ ॥
चोद्याश्चर्ये

विस्मयनं विस्मयः, चेतसो विस्तारः ॥ १ ॥ चीयते चित्रं "चिमिदि-" ॥ ( उणा-४५४ ) ॥ इति त्रक्, चित्रयति वैचित्र्यं संपादयतीति वा अच् ॥ २ ॥ अद् भवनं अद्भुतम् ॥ ३ ॥ २१७ ॥ चोद्यत इति चोद्यम् ॥ ४ ॥ आचर्यते आश्चर्यम्, वर्चस्कादित्वात् साधुः ॥ ५ ॥

शेषश्चात्र–आश्चर्ये फुल्लकं मोहो वीक्ष्यम् ॥

शमः शान्तिः शमथोपशमावपि ।

तृष्णाक्षयः

शमनं शमः, शान्तिः ॥ १ ॥ २ ॥ शमथः "भृशीशापिशामि-" ॥ ( उणा–२३२ ) ॥ इति अथः ॥ ३ ॥ उपशमनमुपशमः ॥ ४ ॥ तृष्णाया गर्द्धस्य क्षयः तृष्णाक्षयः ॥ ५ ॥

स्थायिनामुपसंहारमाह—

स्थायिनोऽमी रसानां कारणं क्रमात् ॥ २१८ ॥

अमी रत्यादयः स्थायिनः श्रृङ्गारादीनां रसानां कारणभूताः ॥ २१८ ॥

स्तम्भो जाड्यम्

स्तम्भनं स्तम्भः ॥ १ ॥ जडस्य भावो जाड्यम्, विष्टब्धचेतनत्वम् ॥ २ ॥

स्वेदो घर्मनिदाघौ

स्वेदनं स्वेदः ॥ १ ॥ घरति सिञ्चत्यङ्गं घर्मः, "अर्त्तीरि-" ॥ ( उणा–३३८ ) ॥ इति मः ॥ २ ॥ निदह्यतेऽनेनाङ्गं निदाघः ॥ ३ ॥

पुलकः पुनः ।

रोमाञ्चः कण्टको रोमविकारो रोमहर्षणम् ॥ २१९ ॥

रोमोद्गम उद्धुषणमुल्लकसनमित्यपि ।

पोलति महद् भवत्यङ्गमनेन पुलकः, पुंक्लीबलिङ्गः, "घुधून्दि-" ॥ (उणा–२९ ) ॥ इत्यकः ॥ १ ॥ रोम्णामञ्चनं रोमाञ्चः ॥ २ ॥ कण्टतीति कण्टकः तरुरोम "दृकृनृ-" ॥ ( उणा–२७ ) ॥ इत्यकः, कण्टकतुल्यत्वात् कण्टकः, पुंक्लीबलिङ्गः ॥ ३ ॥ रोमाणि विक्रियन्तेऽनेन रोमविकारः ॥ ४ ॥ रोमाणि हृष्यन्त्यनेन रोमहर्षणम् ॥ ५ ॥ २१९ ॥ रोमाण्युद्गच्छन्त्यनेन रोमोद्गमः ॥ ६ ॥ उद्धुषत्युच्छ्वासित्यनेनाङ्गमुद्धुषणम् ॥ ७ ॥ उल्लकसत्यनेनाङ्गमुल्लकसनम् ॥ ८ ॥

स्वरभेदस्तु कल्लत्वं स्वरे

स्वरस्य भेदः स्वरभेदः कल्लत्वमव्यक्तत्वं स्वरे स्वरविषये ॥ १ ॥

कम्पस्तु वेपथुः ॥ २२० ॥

कम्पनं कम्पः ॥१॥ वेपनं वेपथुः, पुंलिङ्गः "ट्वितोऽथुः" ॥ ५।३।८३ ॥ इत्यथुः ॥ २ ॥ २२० ॥

वैवर्ण्यं कालिका

विरुद्धो वर्णोऽस्य विवर्णस्तद्भावो वैवर्ण्यम् ॥ १ ॥ कालस्य भावः कालिका, चौरादित्वादकञ्, कालयतीति णको वा ॥ २ ॥

अथाश्रु बाष्पो नेत्राम्बु रोदनम् ।

अस्रमस्रु

अश्नुते आकण्ठमश्रु, क्लीबलिङ्गः "चिनीपीम्यशिभ्यो रुः" ॥ (उणा-८०६) ॥ इति रुः ॥ १ ॥ बाधते चक्षुरिति बाष्पः पुंक्लीबलिङ्गः, "शदिबाधिखनिह्नेः ष् च" ॥ (उणा-२९९) ॥ इति पः ॥ २ ॥ नेत्रस्याम्बु नेत्राम्बु ॥ ३ ॥ रुद्यते रोदनम् ॥ ४ ॥ अस्यते अस्रं, "भीवृधि-" ॥ (उणा-३८७) ॥ इति रः ॥ ५ ॥ अस्यते अस्रु, क्लीबलिङ्गः, "चिनीपी-"॥ (उणा-८०६)॥ इत्यादि बहुवचनाद् रुः ॥ ६ ॥

शेषश्चात्र—लोतस्तु दृग्जले ॥

प्रलयस्त्वचेष्टता

प्रलीयते क्रियाऽत्र प्रलयो मूर्च्छेत्यर्थः। अचेष्टता गतचेतनत्वम्। यदाहुः--स्तम्भे विचेतनत्वं, प्रलये गतचेतनत्वम्; अत एव सहसैव निपतनं भुवि भवति महाभूतशैथिल्यात् ॥

उपसंहारमाह—

इत्यष्टसात्त्विकाः ॥ २२१ ॥

धृतिः सन्तोषः स्वास्थ्यं स्यात्

धरणं धृतिः ॥ १ ॥ संतोषणं संतोषः ॥२॥ स्वस्थस्य भावः स्वास्थ्यम् ॥३॥

आध्यानं स्मरणं स्मृतिः ।

स्पष्टम् ॥

मतिर्मनीषा बुद्धिर्धीर्धिषणाज्ञप्तिचेतनाः ॥ २२२ ॥

प्रतिभाप्रतिपत्प्रज्ञाप्रेक्षाचिदुपलब्धयः ।

संवित्तिः शेमुषी दृष्टिः

मन्यतेऽनया मतिः, अर्थनिश्चयः ॥ १ ॥ मनस ईषा मनीषा, पृषोदरादित्वात् ॥ २ ॥ बुध्यतेऽनया बुद्धिः ॥ ३ ॥ ध्यायति दधाति वा धीः "दिद्युत्-" ॥५।२।८३॥ इति क्विबन्तो निपात्यते ॥ ४ ॥ धृष्णोत्यनया धिषणा"धृषिवहेरिश्चोपान्त्यस्य" ॥ (उणा--१८९) ॥ इत्यणः ॥ ५ ॥ ज्ञपनं ज्ञप्तिः "सातिहेति-" ॥५।३।९४ ॥ इति क्त्यन्तो निपात्यते ॥ ६ ॥ चेतनं चेतना ॥ ७ ॥ २२२ ॥ प्रतिभानं प्रतिभा ॥८॥ प्रतिपत्तिः प्रतिपत्; सर्वे गत्यर्था ज्ञानार्थाः ॥९॥ प्रज्ञानं प्रज्ञा ॥१०॥

प्रेक्षणं प्रेक्षा ॥ ११ ॥ चेतनं चित्, स्त्रीलिङ्गः ॥१२ ॥ उपलम्भनमुपलब्धिः॥१३॥ संवेदनं संवित्तिः ॥ १४ ॥ शेत इति शेर्मोहस्तं मुष्णाति शेमुषी, मूलविभुजादित्वात् के ङीः, शमेः क्सौ ङ्यां वा, पेचुषीवत् ॥ १५ ॥ दर्शनं दृष्टिः ॥ १६ ॥

सा मेधा धारणक्षमा ॥ २२३ ॥

सा मतिर्धारणसमर्था मेधते संगच्छतेऽस्यां सर्वं मेधा ॥ १ ॥ २२३ ॥

पण्डा तत्त्वानुगा

तत्त्वानुगामिनी मतिः पण्यते स्तूयते पण्डा "पञ्चमाड्डः" ॥ (उणा--१६८) ॥ इति डः ॥ १ ॥

मोक्षे ज्ञानम् ।

मोक्षविषया मोक्षफला वा मतिर्ज्ञानम् ॥ १ ॥

विज्ञानमन्यतः

मोक्षशास्त्रादन्यत्र शास्त्रे शिल्पे च चित्रादौ मतिर्विज्ञानम् ॥ १ ॥

शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ॥२२४॥

ऊहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ।

श्रोतुमिच्छा शुश्रूषा ॥ १ ॥ श्रूयते श्रवणम्, आकर्णनम् ॥१॥ गृह्यते ग्रहणं आदानम् ॥ १ ॥ धार्यते धारणं अविस्मरणम् ॥ १ ॥ २२४ ॥ ऊहनमूहः युक्तिगम्यस्तर्कः ॥१॥ अपोहनमपोहोऽसतपक्षनिराकरणम् ॥ १ ॥ अर्थस्य यथावस्थतया विज्ञानमर्थविज्ञानम् ॥ १ ॥ तत्त्वस्य परमार्थस्य ज्ञानं तत्त्वज्ञानम् ॥ १ ॥ इत्यष्टौ बुद्धिगुणाः ॥

व्रीडा लज्जा मन्दाक्षं ह्रीस्त्रपा

व्रीडनं व्रीडा, चित्तसंकोचः। व्रीडोऽपि ॥१॥ लज्जनं लज्जा ॥२॥ मन्दमाक्षि यत्र मन्दाक्षं, स्वोत्थलज्जावशाद्धि चक्षुरवनमति, शूका मन्दाक्षमित्येके ॥ ३ ॥ ह्रीयते ह्रीः, स्त्रीलिङ्गः, "क्रुत्संपदादिभ्यः-" ॥ ५।३।११४ ॥ इति क्विप् ॥ ४ ॥ त्रप्यते त्रपा ॥ ५ ॥

साऽपत्रपाऽन्यतः ॥ २२५ ॥

सा लज्जाऽपरस्माद् लज्जावहे जातेऽपत्रपा ॥ १ ॥ २२५ ॥

जाड्यं मौर्ख्यं

जडस्य भावः कर्म वा जाड्यम् ॥ १ ॥ मूर्खस्य भावः कर्म वा मौर्ख्यम् ॥२॥

विषादोऽवसादः सादो विषण्णता ।

विषदनं विषादो मनःपीडा ॥ १ ॥ अवसदनमवसादः ॥ २ ॥ सदनं सादः ॥ ३ ॥ विषण्णस्य भावो विषण्णता ॥ ४ ॥

मदो मुन्मोहसंभेदः

मदनं मदः " व्यधजपमद्भ्यः " ॥ ५।३।४७ ॥ इत्यल्, आनन्दसंमोहयोः संगमः ॥ १ ॥

व्याधिस्त्वाधी रुजाकरः ॥ २२६ ॥

रुजाकरः आधिर्मनःपीडा, व्याधिहेतुत्वाद् व्याधिः ॥ १ ॥ २२६ ॥

निद्रा प्रमीला शयनं संवेशस्वापसंलयाः ।
नन्दीमुखी श्वासहेतिस्तन्द्रा

नियतं द्रान्तीन्द्रियाणि अस्यां निद्रा ॥ १ ॥ प्रमीलन्तीन्द्रियाण्यस्यां प्रमीला ॥ २ ॥ शय्यते शयनम् ॥ ३ ॥ संविशन्तीन्द्रियाण्यत्र संवेशः ॥ ४ ॥ स्वपनं स्वापः ॥ ५ ॥ संलीयन्ते इन्द्रियाण्यत्र संलयः ॥ ६ ॥ नन्दीव मुखमस्यां नन्दीमुखी ॥७॥ श्वासा हेतयोऽस्यां श्वासहेतिः, एतौ सुप्तवाचकाविलन्ये ॥८॥ तन्द्रिः सादमोहनयोः, सौत्रः, तन्द्रयते तन्द्रा, तननं द्रात्यस्यां वा; तन्द्रिस्तन्द्रीत्यपि ॥ ९ ॥

शेषश्चात्र--निद्रायां तामसी

सुप्तं तु साधिका ॥२२७॥

सा निद्रा अधिका साऽतिशया स्वपनं सुप्तम् ॥ १ ॥

शेषश्चात्र–सुप्ते सुस्वापः सुखसुप्तिका ॥ २२७ ॥

औत्सुक्यं रणरणकोत्कण्ठे आयल्लकारती ।
हृल्लेखोत्कलिके च

उत्सुकस्य भाव औत्सुक्यं, विलम्बासहत्वम् ॥ १ ॥ अतिशयेन चित्तं रणत्यत्रेति रणरणः, " अदुपान्त्यकृद्भ्यामश्वान्ते" ॥ ( उणा--१४ ) इति अः, द्वित्वं च, स एव रणरणकः ॥ २ ॥ उत्कण्ठनमुत्कण्ठा, उत्कण्ठोऽपि ॥३॥ आयत आगच्छतो लकति आसादयति आयल्लकम् ॥ ४ ॥ इयर्ति सुखमस्यामरतिः, स्त्रीलिङ्गः, " खल्यमि- " ॥ ( उणा--६५३ ) ॥ इति अतिः; न रतिररतिरिति वा ॥ ५ ॥ हृदयं लिखति हृल्लेखः " हृदयस्य हृल्लासलेखाण्ये " ॥ ३।२।९४ ॥ इति हृदादेशः ॥ ६ ॥ उत्कलनमुत्कलिका " क्रीकल्यालि- " ॥ ( उणा--३८ ) ॥ इति इकः ॥७॥

अथावहित्थाऽऽकारगोपनम् ॥ २२८ ॥

आकारस्य भ्रूविकारमुखरागादेर्गोपनमाच्छादनमाकारगोपनं, न बहिःस्थं चित्तमस्यां अवहित्था, स्त्रीक्लीबलिङ्गः, पृषोदरादित्वात् साधुः ।

